उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# वेदाध्ययनम् - ३४५

# पुस्तकम् - २




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in    निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - वेदाध्ययनम् (३४५)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
डॉ. के. इ. देवनाथन्
कुलपतिः
श्रीवेङ्कटेश्वर-वैदिक-विश्वविद्यालयः
चन्द्रगिरिपरिमार्गः, अलिपिरि
तिरुपतिः - ५१७ ५०२ (आन्ध्रप्रदेशः)

**समितेः उपाध्यक्षः**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज
दक्षिणेश्वरः, कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. सन्तोषकुमारशुक्लः**
आचार्यः(संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**आचार्यः फूलचन्दः**
वैदिकगुरुकुलम् , पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**आचार्यः प्रद्युम्नः**
वैदिकगुरुकुलम्
पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज-फॉर-विमिन
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, ३, ५, ७, ८, ९, २५ )**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २, ४, ६, १०-१४, १७)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १५, १६, १८, २०, २३, २६)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १९, २४)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः २१, २२)**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज-फॉर-विमिन
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**

**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं वेदाध्ययनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा

अध्यक्षः

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

वेदाध्ययनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकविभागस्य)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

अनन्ता वै वेदाः। भारतीयानां गर्वस्थानं श्रद्धास्पादं ज्ञानमूलं जीवनपथप्रदर्शकः इहपरलोकज्ञापकः वेदः। बहुषु शाखासु भिन्नः। वेदाङ्गानि च षट्। उपवेदाः च सन्ति। वैदिकशब्दाः बहुत्र लौकिकशब्देभ्यो भिन्नाः। तत्र व्याकरणस्य विशिष्टा नियमाः। अतः पाठ्यक्रमेऽस्मिन् वैदिकवाङ्मयस्य इतिहासः, सूक्तानि, व्याकरणम् चेति त्रेधा विभागः परिकल्पितः। क्लिष्टविषया अत्यन्तं सरलया गिरा अस्मिन् पाठ्यक्रमे वर्तते।

माध्यमिककक्षायां प्रदत्तः वेदाध्ययनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। सति समये छात्रः तस्य अध्ययनेन ज्ञानपीनः भवितुमर्हति। उच्चतरमाध्यमिककक्षाया वेदाध्ययनम् इति विषयस्य अध्ययनेन वेदे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री वेदानां सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### वैदिकसाहित्येतिहासः

१. वैदिकवाङ्मयस्य वैलक्षण्यं वेदप्रामाण्यविमर्शः च
२. ऋग्वेदसंहितासाहित्यम्
३. यजुर्वेदसामवेदसंहितासाहित्यम्
४. अथर्ववेदसंहितासाहित्यं ब्राह्मणसाहित्यं च
५. ब्राह्मणसाहित्यम्
६. आरण्यकसाहित्यम् उपनिषत्साहित्यं च
७. वेदाङ्गसाहित्यम्

### वैदिकस्वरप्रक्रिया

८. साधारणस्वरप्रकरणम्-१
९. साधारणस्वरप्रकरणम्- २
१०. धातुस्वरः प्रातिपदिकस्वरः च
११. फिट्-स्वरः
१२. प्रत्ययस्वरः
१३. समासस्वरः
१४. तिङन्तस्वरः

## पुस्तकम्- २

### वैदिकसूक्ताध्ययनम्

१५. अग्निसूक्तम्
१६. इन्द्रसूक्तम्
१७. हिरण्यगर्भसूक्तम्
१८. पुरुषसूक्तम्
१९. देवीसूक्तं श्रद्धासूक्तं च
२०. विष्णुसूक्तं मित्रावरुणसूक्तं च
२१. अक्षसूक्तम्
२२. पर्जन्यसूक्तं मनुमत्स्यकथा च
२३. शिवसङ्कल्पसूक्तं प्रजापतिसूक्तं च
२४. रुद्राध्यायः
२५. पृथिवीसूक्तम्
२६. सरमापणिसंवादसूक्तम्

# वेदाध्ययनम्

# उच्चतरमाध्यमिककक्षा

## द्वितीयं स्वाध्यायसोपानम्

क्रमः विषयसूची पृष्ठसंख्या

### वैदिकसूक्ताध्ययनम्

# वैदिकसूक्तानि

## भूमिका

इह खलु जगति आकीटपतङ्गं प्राणिनां सुखप्राप्तये दुःखपरिहाराय च प्रवृत्तिद्वयम् अहर्निशं दरीदृश्यते। सुप्रसिद्धं सर्वविदितम् च यत् सुखं शोभनकर्मानुष्ठानाद् जायते। दुःखम् अशोभनकर्मानुष्ठानाद् जायते। तदनुष्ठानं च अन्तरेण कर्मस्वरूपज्ञानं न भवति। अतः सुखम् इच्छता दुःखं परिजिहासता पुरुषेण अवश्यम् प्रथमं कर्मणां स्वरूपं शोभनीयत्वम् अशोभनीयत्वं च वेदनीयमेव। तज्ज्ञानम् ऋते वेदार्थज्ञानं दुष्करम्। अतः अध्येयः वेदः, विचार्यः च तदर्थः विपश्चिता। स च वेद ऋक् यजुः साम अथर्वा इति भेदेन चतुर्धा अपि। क्वचित् त्रेधापि प्रदर्श्यते। प्रतिभेदम् अपि अनेकशाखायुतः च। तासां शाखानां प्रतिस्वं मन्त्रब्राह्मणभेदविभिन्नत्वम्। तत्र मन्त्राः वैदिकेषु तत्त्वेन प्रसिद्धाः कर्मसमवेतार्थस्मारणैकफलकाः। विधिबोधकवाक्यस्य च ब्राह्मणसंज्ञा। विधिः कर्मणाम् इष्टसाधनत्वबोधनमुखेन इष्टसाधने पुरुषं प्रवर्तयति। निषेधस्तु अनिष्टसाधनबोधनमुखेन अनिष्टसाधनात् निवर्तयति। ब्राह्मणं च कर्मब्राह्मणम् उपसनाब्राह्मणम् ज्ञानब्राह्मणम् इति त्रेधा विभक्तम्। कर्मकाण्डे नित्यनैमित्तिककाम्यभेदेन त्रिविधानि कर्माणि आम्नातानि। तदेतेषां कर्मणाम् ज्ञानसंपत्तये वेदार्थज्ञानम् सुतराम् अपेक्षते।

भारते वर्षे वेदस्य संहितानां ब्राह्मणानाम् आरण्यकानाम् उपनिषदां च विद्यते महद् वैशिष्ट्यम्। संस्कृतपाठशालासु महाविद्यालयेषु च वेदस्य अध्ययनम् अध्यापनं च साग्रहं भवति। अस्मिन् पाठ्यांशे मन्त्राणां पदपाठानां व्याख्यानां च सम्यक् समावेशो वर्तते। ऋग्वेदस्य सारसंग्रहाणां परिचयोऽपि अत्र प्राप्स्यते। अनेन सूक्ताध्ययनेन अध्येतॄणां महान् उपकारो भवेद्। भूयसा प्रयत्नेन सौष्ठवेन च अस्य अध्ययनं छात्रेण कर्तव्यम्। वेदस्य व्याकरणम् लौकिकव्याकरणाद् भिन्नम्। शब्दाः अपि बाहुल्येन भिन्ना भवन्ति। स्वरभेदे अर्थभेदो भवति। प्रकरणभेदेऽपि अर्थभेदो भवति। काव्यात्मकशैली बहुत्र वेदे परिलक्ष्यते। अतः मन्त्राणाम् आपाततो योऽर्थः प्रतिभाति ततो भिन्न एव अर्थो भवितुमर्हति। व्याख्यानभेदेनापि अर्थे भेदाः सन्ति। तात्पर्यभेदेन अर्थे भेदो भवति। अतः मन्त्राणाम् अयमेवार्थ इति निर्णयः सुदुष्कर एव। तथापि प्रमाणभूतानाम् आचार्याणाम् श्रीमताम् सायणानाम् भाष्यमेव किञ्चित् सुबोधाय परिवर्तनेन छात्रोपयोगित्वं समासाद्य अत्र प्रदीयते। मन्त्रान्वयः, मन्त्रव्याख्या, मन्त्रस्य सरलार्थः, केषाञ्चित् शब्दानां व्याकरणम् इति रूपेणात्र मन्त्राः व्याख्याताः सन्ति।

# १५

# ॥अग्निसूक्तम्॥

## प्रस्तावना

वेदोऽखिलधर्ममूलम्। सर्वेषां धर्माणां वेदः एव मूलम्। जगति चत्वारः वेदाः सन्ति। ते वै ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्च। तेषु चतुर्षु वेदेषु ऋग्वेदः प्राचीनतमः अस्ति। ऋग्वेदस्य प्रथमं सूक्तम् अग्निसूक्तम्। जगति उपलभ्यमानस्य साहित्यस्य इदम् प्राचीनतमं सूक्तम्। अत्र अग्नेः स्तुतिः विद्यते। वेदे अग्निः बहुप्रसिद्धः देवता अस्ति। ऋग्वेदे प्रायः २०० सूक्तेषु अग्नेः स्तुतिः समुपलभ्यते। ऋग्वेदस्य प्रथमं पदमपि 'अग्निम्' इति अस्ति। अस्मिन् पाठे अग्निसूक्तस्य नव मन्त्राः सन्ति। तत्र च सायणाचार्यः भाष्यं रचितवान्। अस्मिन् पाठे तस्यैव भाष्याम् अनसृत्य व्याख्यानं प्रदत्तम् अस्ति। अस्य अग्निसूक्तस्य मधुच्छन्दा ऋषिः, गायत्री छन्दः, अग्निश्च देवता। अग्निशब्दस्य अर्थः भवति- यः देवः यज्ञे प्रदत्तं हविः देवतानां कृते आदाय गच्छति सः अग्निः। ऋग्वेदे त्रिषु प्रमुख्यदेवेषु अग्नेः स्थानं द्वितीयम्। अग्निः मानवजीवनेन सह दृढतया सम्बद्धः अस्ति। सम्पूर्णगृहकार्याय अग्नेः महती आवश्यकता अस्ति। प्रतिगृहम् अस्य निवासः। अग्निः हि एवं देवः यः जन्मनः आरभ्य मृत्युपर्यन्तं जनेन सहैव तिष्ठति। अग्निना एव सम्पूर्णसंसारस्य प्रकाशः जातः। अग्निः एव प्राचीनानाम् ऋषीणां प्रधानम् आसीत्। यतो हि अग्निना एव यज्ञः भोजनादिकं शीतनिवारणं च सम्पाद्यन्ते स्म।

अस्मिन् पाठे क्वचित् अन्येषाम् आचार्याणाम् मतस्यापि संग्रहः कृतोऽस्ति। टिप्पणीरूपेण तस्य प्रकटनं कृतमस्ति। टिप्पण्याम् सूक्तस्य अवबोधाय उपयोगी विषयः प्रदत्तोऽस्ति। टिप्पणीस्थं मतम् अधिकजिज्ञासूनां कृते विशेषतः प्रदत्तमस्ति।



## उद्देश्यानि

एतं पाठं पठित्वा भवान् –

- सूक्तस्थानां मन्त्राणां संहितापाठं ज्ञास्यति।
- सूक्ते विद्यमानानां मन्त्राणां पदपाठं ज्ञास्यति।
- सूक्तस्थानां मन्त्राणाम् अन्वयं कर्तुं समर्थो भवेत्।
- सूक्तस्थानां मन्त्राणां व्याख्यानं कर्तुं समर्थो भवेत्।
- सूक्ते विद्यमानानां मन्त्राणां सरलार्थं ज्ञास्यति।
- मन्त्रे स्थितं व्याकरणं ज्ञातुं समर्थो भवेत्।



- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- वैदिकलौककयोः भेदं ज्ञातुं शक्नुयात्।
- सूक्तार्थं ज्ञात्वा सूक्तमहिमानम् ज्ञास्यति।
- केषाञ्चित् वैदिकरूपाणि ज्ञास्यति।
- सूक्ततात्पर्यं सूक्ततत्त्वं च अवगच्छेत्।
- अग्निसूक्ते अग्नेः वर्णनम् यथास्ति तथा ज्ञास्यति।
- अग्निः किं किं करोति इत्यपि अवगच्छेत्।
- कीदृशः अग्निः स्तुत्यः भवति इत्यपि ज्ञास्यति।

## अग्निसूक्तम्

### १५.१) मूलपाठः – अग्निसूक्तम् (ऋग्वेदीयम् १.१)

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम्॥१॥**

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।**
**स देवाँ एह वक्षति॥२॥**

**अग्निना रयिमश्नवत्पोषमेव दिवेदिवे।**
**यशसं वीरवत्तमम्॥३॥**

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि।**
**स इद्देवेषु गच्छति॥४॥**

**अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः।**
**देवो देवेभिरागमत्॥५॥**

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि।**
**तवेत्तत्सत्यमङ्गिरः॥६॥**



**उप॑ त्वाग्ने दि॒वेदि॑वे दोषा॑वस्तर्धि॒या व॒यम्।**
**नमो॒ भर॑न्त॒ एम॑सि॥७॥**

**राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम्।**
**वर्ध॑मानं॒ स्वे दमे॑॥८॥**

**स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व।**
**सच॑स्वा नः स्व॒स्तये॑॥९॥**

## १५.१.१) इदानीं मूलपाठम् अवगच्छाम

**अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म्।**
**हो॒तारं॑ रत्न॒धात॑मम्॥१॥**

**पदपाठः - अ॒ग्निम्। ई॒ळे॒। पु॒रः॒ऽहि॑तम्। य॒ज्ञस्य॑। दे॒वम्। ऋ॒त्विज॑म्। होतार॑म्। रत्न॒ऽधात॑मम्॥१॥**

**अन्वयः-** यज्ञस्य पुरोहितं देवं होतारम् ऋत्विजं रत्नधातमम् अग्निम् ईळे।

**व्याख्या-** अग्निनामकं देवम् ईळे स्तौमि। 'ईड् स्तुतौ' इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः। तथा च पठ्यते- 'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः। अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्' इति। मन्त्रस्य होत्रा प्रयोज्यत्वात् अहं होता स्तौमीति लभ्यते। कीदृशमग्निम्? यज्ञस्य पुरोहितम्। यथा राज्ञः पुरोहितः तदभीष्टं सम्पादयति, तथा अग्निरपि यज्ञस्य अपेक्षितं होमं सम्पादयति। यद्वा, यज्ञस्य सम्बन्धिनि पूर्वभागे आवहनीयरूपेण अवस्थितम् पुनः कीदृशम्? होतारम् ऋत्विजम्। देवानां यज्ञेषु होतृनामक ऋत्विग् अग्निरेव। तथा च श्रूयते- 'अग्निर्वै देवानां होता' (ऐ० ब्रा० ३. १४) इति। पुनरपि कीदृशम्? रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा।

**टिप्पणी** - अग्मिमीळे अग्निम् याचामि। यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा। तेन यज्ञस्य दाता दीपयिता द्योतयिता अयम् अग्निः इति उक्तं भवति। कथं द्युस्थानः - यद्यपि अग्निः पृथिवीस्थानः तथापि देवान् प्रति हविवहनाद् द्युस्थानो भवति। यो देवः सा देवता। अर्थाद् देवः एव देवता। होतारम् ह्वातारम्। रत्नधातमम् रमणीयानां धनानां दातृतमम्। (स्कन्दस्वामी) - शान्तिकपौष्टिकैः कर्मभिः यो राजानम् आपद्भ्यः त्रायते स पुरोहितः इत्युच्यते। यज्ञस्य आपदाम् हन्तारम्



इत्यर्थः। पूर्वस्यां दिशि निहितः आहवनीयात्मना स्थापितः पुरोहितः इत्यपि अर्थः। रत्नम् धनस्य नाम अस्ति। धनानाम् अतिशयेन दाता अग्निः। तम् स्तौमि।

**सरलार्थः-** यज्ञस्य प्रकाशयुक्तः पुरोहितः अग्निः अस्ति। अथवा यजमानस्य सम्मुखे अग्निः स्थितः। स देवान् यज्ञे आह्वयति। सर्वाधिकरत्नानि स धारयति। एवं यः अग्निः तम् अहं स्तौमि।

**व्याकरणम् -**

यज्ञस्य- यज्-धातोः नङि षष्ठ्येकवचने यज्ञस्य इति रूपम्।

देवम्- दिव्-धातोः अच्प्रत्यये द्वितीयैकवचने देवम् इति रूपम्।

होतारम्- हूधातोः तृन्प्रत्यये द्वितीयैकवचने होतारम् इति रूपम्।

रत्नधातमम्- रत्नानि दधाति इति रत्नधाः, रत्नधाशब्दस्य क्विप्प्रत्यये तमप्प्रत्यये च द्वितीयैकवचने रत्नधातमम् इति रूपम्।

इळे- स्तुत्यर्थकाद् ईड्-धातोः लटि उत्तमपुरुषैकवचने इळे इति रूपम्।

**अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त।**
**स दे॒वाँ एह व॑क्षति॥२॥**

**पदपाठः - अ॒ग्निः। पूर्वे॑भिः। ऋषि॑ऽभिः। ईड्यः॑। नूत॑नैः। उ॒त। सः। दे॒वान्। आ। इ॒ह। व॒क्ष॒ति॥२॥**

**अन्वयः -** अग्निः पूर्वेभिः उत नूतनैः ऋषिभिः ईड्यः सः देवान् इह आ वक्षति।

**व्याख्या-** अयम् अग्निः पूर्वेभिः पुरातनैः भृग्वङ्गिरःप्रभृतिभिः ऋषिभिः ईड्यः स्तुत्यः, नूतनैः उत इदानीन्तनैः अस्माभिरपि स्तुत्यः। सः अग्निः सन् इह यज्ञे देवान् हविर्भुजः आ वक्ष्यति।

**टिप्पणी -** उतशब्दस्य विकल्पः अर्थः। तथापि अत्र चार्थः अर्थात् समुच्चयः अर्थः निपातनाद्। अतः पूर्वतनैः नूतनैः च इत्यर्थो लभ्यते।। प्रथममन्त्रे उक्तं यद् अहम् अग्निम् स्तौमि। किमत्र स्तुतौ कारणम्। अतः अयं द्वितीयो मन्त्रः। यतो हि अयमग्निः पूर्वतनैः ऋत्विग्भिः स्तुत्यः, नूतनैरपि स्तुत्यः। यावान् कश्चिद् ऋषिः, तेन सर्वेण स्तोतव्यः इति। अयमेव हेतुः यद् अहम् अग्निम् ईडे। इह समग्रे जगति स एव अग्निः देवान् यज्ञेषु आह्वयति, नान्यः कश्चिदपि।

**सरलार्थः-** अग्निः प्रचीनैः नूतनैश्च ऋषिभिः स्तुत्यः। एवं यः अग्निः स देवान् यज्ञे आह्वयेत्।

**व्याकरणम् -**

- पूर्वेभिः- पूर्वैः इत्यस्य वैदिकं रूपमिदम्।
- ईड्यः- ईड्-धातोः ण्यत्प्रत्यये प्रथमैकवचने ईड्यः इति रूपम्।



- देवाँ- देवशब्दस्य द्वितीयाबहुवचने रूपमिदम्। पदान्ते स्थितात् नकारात्पूर्वं आकारः किञ्च परं यः कोऽपि स्वरः तिष्ठति चेत् नकारस्य लोपः भवति। अपि तु पूर्ववर्णस्य अनुनासिकादेशः भवति।
- वक्षति- वह्-धातोः लृटि स्यप्रत्यये यकारस्य छन्दसि लोपे वक्षति इति रूपम्। लेट्लकारेऽपि एवं रूपं सम्भवति।

**अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे।**
**य॒शसं॑ वी॒रव॑त्तमम्॥३॥**

**पदपाठः - अ॒ग्निना॑। र॒यिम्। अ॒श्न॒व॒त्। पोष॑म्। ए॒व। दि॒वेऽदि॑वे। य॒शस॑म्। वी॒रव॑त्ऽतमम्॥३॥**

**अन्वयः** - अग्निना दिवेदिवे पोषम् एव यशसं वीरवत्तमं रयिम् अश्नवत्।

**व्याख्या**- योऽयं होत्रा स्तुत्यः अग्निः। तेन अग्निना निमित्तभूतेन यजमानः रयिं धनम् अश्नवत् प्राप्नोति। कीदृशं रयिम्। दिवेदिवे पोषम् एव प्रतिदिनं पुष्यमाणतया वर्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। यशसं दानादिना यशोयुक्तं वीरवत्तमम् अतिशयेन पुत्रभृत्यादिवीरपुरुषैः उपेतम्। सति हि धने पुरुषाः सम्पद्यन्ते।

**टिप्पणी** - एवं स्तुतः अग्निः। यः स्तुतिं करोति स स्तोता स्तुतिकारणात् अग्निसकाशात् रयिं धनम् प्राप्नोति। न च केवलं धनम्। किं तर्हि। पोषम् पुष्टिम् अपि। कदा प्रोप्नोति। दिवे दिवे दिने दिने अहनि अहनि। सर्वकालम् इत्यर्थः। किम् अन्यत् प्राप्नोति। यशसम्। अर्थात् यशः कीर्तिम् प्राप्नोति। कीदृशं यशः। यस्मिन् वीराः पुत्राः सन्ति तद् वीरवत्। अतिशयेन वीरवत् वीरवत्तमम्। अर्थात् बहुभिः वीरपुत्रैः सहितं यशः लभते। इत्थम् ईदृशस्य अग्नेः यः स्तुति करोति स स्तुतिफलम् अग्निसकाशात् लभते। फलस्वरूपम् हि - धनम् पुष्टिः विपुरवीरपुत्रसहिता कीर्तिः च।

**सरलार्थः**- यजमानः अग्निना धनं लभते। तत् धनं प्रतिदिनं वर्धते यजमानश्च धनस्य दानादिकर्मणः कृते व्ययात् यशः कीर्तिम् लभते। तच्च यशः पुत्रादिवीरपुरुषैः सहितं प्राप्नोति। अर्थात् बहवः पुत्राः वीराः स्युः। तेन स्तोतुः कीर्तिः स्याद्।

**व्याकरणम्** -

- दिवेदिवे- दिवशब्दस्य सप्तम्येकवचने दिवेदिवे इति रूपम्।
- पोषम्- पुष्-धातोः घञ्प्रत्यये द्वितीयैकवचने पोषम् इति रूपम्।
- यशसम्- यशश्शब्दस्य अच्प्रत्यये द्वितीयैकवचने यशसम् इति रूपम्। लोके यशस् शब्दः सकारन्तः नपुंसकलिङ्गी।
- वीरवत्तमम्- वीरशब्दस्य मतुप्प्रत्यये तमप्प्रत्यये च द्वितीयैकवचने वीरवत्तमम् इति रूपम्।



- अश्वनत्- अश्-धातोः लोटि प्रथमपुरुषैकवचने अश्वनत् इति रूपम्।

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि।**

**स इद्देवेषु गच्छति॥४॥**

**पदपाठः - अग्ने। यम्। यज्ञम्। अध्वरम्। विश्वतः। परिऽभूः। असि। सः। इत्। देवेषु। गच्छति॥४॥**

**अन्वयः -** अग्ने! यम् अध्वरं यज्ञं विश्वतः परिभूः असि सः इत् देवेषु गच्छति।

**व्याख्या-** हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परीभूः परितः प्राप्तवान् असि सः इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति। प्राच्यादिचतुर्दिगन्तेषु आहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेषु अग्निरस्ति। परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्? अध्वरं हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति।

**टिप्पणी -** न विद्यते ध्वरः हिंसा अस्य इति अध्वरः। ध्वरणं ध्वरो हिंसा यस्मिन्नास्ति सः अध्वरः। कुतः हिंसा नास्ति। यज्ञे हि सर्वस्य अनुग्रहः भवति न तु हिंसा। परन्तु ओषधीनां पशूनां वृक्षानां पक्षिणां च हिंसा दृश्यते। तथापि हिंसारहितः इति कथमुच्यते। तत्र शिष्टमतम् -

ओषध्यः पशवो वृक्षास्तीर्यञ्चः पक्षिणस्तथा।

यज्ञार्थं मिथुनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः।। इति

अर्थात् वनस्पतयः पशवः वृक्षाः तिर्यग्योनिस्थाः पक्षिणः च यदि यज्ञे हिंसिताः तथापि तेषाम् सद्गतिः भवति। हीनलोकप्राप्तिः न भवति। उच्छ्रितिं ते प्राप्नुवन्ति। इत् शब्दः एवर्थे। स इद् देवेषु गच्छति - स एव देवेषु गच्छति इत्यर्थः। अर्थात् अग्निना सर्वतः रक्षितः यज्ञः एव देवेषु गच्छति। देवाः तमेव यज्ञम् परिगृह्णन्ति नान्यम्। अग्निना सर्वतः रक्षितं यज्ञम् एव देवाः स्वीकुर्वन्ति इत्यर्थः।

**सरलार्थः-** अस्मिन् मन्त्रे अग्निं प्रति उच्यते यत् हे अग्ने त्वं यथा हिंसारहितं यज्ञं परितः व्याप्नोषि तेन अवश्यं यज्ञः देवान् प्रति गच्छति।

**व्याकरणम् -**

- विश्वतः- विश्वशब्दस्य तसिल्प्रत्यये विश्वतः इति रूपम्।
- परिभूः- परिपूर्वकात् भूधातोः क्विप्प्रत्यये परिभूः इति रूपम्।
- असि- अस्-धातोः लटि मध्यमपुरुषैकवचने असि इति रूपम्।
- गच्छति- गम्-धातोः लटि प्रथमपुरुषैकवचने गच्छति इति रूपम्।





## पाठगतप्रश्नाः

१. अग्निः कैः स्तुत्यः।
२. डकारस्य ळकारः कदा भवति।
३. पूर्वेभिः इति रूपं क्व साधु।
४. कीदृशम् अग्निं होता ईडे।
५. वक्षति इति रूपं कस्मिन् कस्मिन् लकारे सम्भवति।
६. दिवशब्दस्य सप्तम्येकवचने किं रूपं भवति।
७. यजमानः कीदृशं रयिं प्राप्नोति।
८. अश्नवत् इति रूपं कस्य धातोः कस्मिन् लकारे च विद्यते।
९. देवाँ इति रूपं कथं स्यात्।
१०. धने सति के सम्पद्यन्ते।
११. वीरवत्तमम् इति रूपं कथं सिद्धम्।
१२. पोषम् इति रूपं कथं सिद्धम्।
१३. परिभूः इति रूपं कथं सिद्धम्।
१४. ईड्यः इत्यस्य कः अर्थः।
१५. अश्नवत् इत्यस्य कः अर्थः।
१६. यशसम् इति रूपं कथं सिद्धम्।
१७. ईडे इत्यत्र कः धातुः।

### १५.१.२) इदानीं मूलपाठम् अवगच्छाम।

**अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः।**
**दे॒वो दे॒वेभि॒राग॑मत्॥५॥**

**पदपाठः - अ॒ग्निः। होता॑। क॒विऽक्र॑तुः। स॒त्यः। चि॒त्रश्र॑वःऽतमः। दे॒वः। दे॒वेभिः॑। आ। ग॒मत्॥५॥**

**अन्वयः -** होता कविक्रतुः सत्यः चित्रश्रवस्तमः अग्निः देवः देवेभिः आ गमत्।

**व्याख्या-** अयम् अग्निः देवः अन्यैर्देवैर्हविर्भोजिभिः सह आ गमत् अस्मिन् यज्ञे समागच्छतु। कीदृशोऽग्निः। होता होमनिष्पादकः। कविक्रतुः। कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम। क्रतुः



प्रज्ञानस्य कर्मणो वा नाम। ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः। श्रूयते इति श्रवः कीर्तिः। अतिशयेन विविधकीर्तियुक्तः॥

**टिप्पणी** - अयम् अग्निः देवानाम् होता। कविक्रतुः - क्रान्तं गतं सर्वत्र अप्रतिहतं क्रतुः प्रज्ञानं कर्म वा यस्य स कविक्रतुः। सत्यः अभिसम्पादकः यथाभिलषितफलदः इति यावत्। चायृ पूजानिशामनयोः इति धातुतः चित्रशब्दः व्युत्पन्नः इति स्कन्दस्वामी वदति। चित्र चित्रीकरणे इति अपरः धातुः अस्ति। ततः अपि चित्रशब्दः भवति। अयमेव चित्रशब्दः लोके प्रचलितः अस्ति। तस्य अर्थः विचित्र इति। अर्थात् विविधः, बहुप्रकारकः इति। श्रवः इति अन्नस्य नाम, धनस्य नाम अपि वर्तते। तस्य कीर्तिः इत्यपि अर्थः अस्ति। तमप्-प्रत्ययेन अतिशयः गम्यते। अतः चित्रश्रवस्तम इत्यस्य एकाधिकाः अर्था भवन्ति। तथाहि अतिशयेन पूज्यं विचित्रं विविधं वा अन्नं यस्य स चित्रश्रवस्तमः। अतिशयेन पूज्यं विचित्रं विविधं वा धनं यस्य स चित्रश्रवस्तमः। अतिशयेन पूज्या विचित्रा विविधा वा कीर्तिः यस्य स चित्रश्रवस्तमः। इति इमे अर्थाः सम्भवन्ति।

**सरलार्थः**- अग्निः यज्ञे देवताः आह्वयति। स च उत्कृष्टबुद्धिसम्पन्नः सत्यशीलः कीर्तिमान् च अस्ति। एवं यः अग्निः स देवताभिः सह यज्ञम् आगच्छतु।

**व्याकरणम् -**

- कविक्रतुः- कविः क्रतुः यस्य सः, बहुव्रीहिसमासः। प्रथमैकवचने रूपमिदम्।
- चित्रश्रवस्तमः- चित्रं श्रवः यस्य सः चित्रश्रवाः अतिशायी चित्रश्रवाः इति चित्रश्रवस्तमः, बहुव्रीहिसमासः। चित्रश्रवस्-शब्दात् तमप्प्रत्यये प्रथमैकवचने चित्रश्रवस्तमः इति रूपम्।
- देवेभिः- देवशब्दस्य तृतीयाबहुवचने वैदिकं रूपमिदम्। लौकिके तु देवैः इति रूपम्।
- गमत्- गम्-धातोः लेटि प्रथमपुरुषैकवचने गमत् इति रूपम्। सायणाचार्यमतानुसारेण गम्-धातोः लोटि प्रथमपुरुषैकवचने वैदिकं रूपमिदम्।

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि।**
**तवेत्तत्सत्यमङ्गिरः॥६॥**

**पदपाठः - यत्। अङ्ग। दाशुषे। त्वम्। अग्ने। भद्रम्। करिष्यसि। तव। इत्। तत्। सत्यम्। अङ्गिरः॥६॥**

**अन्वयः** - अङ्ग अग्ने! त्वं दाशुषे यत् भद्रं करिष्यसि, अङ्गिरः! तत् तव इत् सत्यम्।

**व्याख्या-** अङ्ग इत्यभिमुखीकरणार्थो निपातः। अङ्ग अग्ने! हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यत् भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तत् भद्रं तव इत् तवैव। सुखहेतुरिति शेषः। हे अङ्गिरः! अग्ने एतच्च सत्यं, न त्वत्र विसंवादोऽस्ति। यजमानस्य वित्तादिसंपत्तौ सत्याम् उत्तरक्रत्वनुष्ठानेन अग्नेरेव सुखं भवति।



**टिप्पणी -** अङ्ग इति निपातस्य पादपूरणार्थे प्रयोगो भवति। क्षिप्रार्थे अपि प्रयोगः भवति। तदा क्षिप्रं शीघ्रं दाशुषे इति अन्वयः स्यात्। दाशृ दाने इति धातोः क्वसुप्रत्यययोगेन दाश्वस् शब्दः भवति। तस्य चतुर्थी दाशुषे इति। दात्रे इत्यर्थः। प्रकरणाद् अत्र हर्विदानकर्त्रे इति अर्थः भवति। भद् कल्याणे सुखे च धातोः रक्-प्रत्यययोगेन भद्रशब्दः निष्पद्यते। कल्याणम् इति तस्य सामान्यार्थः। कः कदा किं स्वस्य कल्याणं चिन्तयति इति देशकालपात्रभेदेन भिद्यते। अतः अत्र प्रकरणे यजमानः पशु-गृह-प्रजा-वित्तादिकम् कल्याणं मनुते चेत् पश्वादिकम् अत्र कल्याणम्। तदेव तस्य इष्टम्। अतः सायाणाचार्यः तथैव व्याख्याति। वस्तुतः सुखमेव ना वाञ्छति। अतः सुखमेव कल्याणम्। तथापि सुखसाधनमपि अपि कल्याणं कथ्यते। अतः यस्य लाभेन जनः सुखम् अनुभवति तत् कल्याणम् भद्रम्। तच्च प्रसङ्गभेदेन भिन्नं भवितुमर्हति। यास्काचार्यस्तु - भजनीयम्। भूतानाम् अभिद्रवणीयम्। भवद् रमयति। भजनवद्। इत्यादीन् अर्थान् वदति। इत् शब्दः एवर्थे वर्तते। तवेत् तत् इत्यस्य तव एव तद् इत्यर्थो लभ्यते। हे अग्ने त्वं भद्रं करिष्यसि इत्यत्र कृधातोः दानमर्थः गृह्यते। तेन हे अग्ने त्वं भद्रं दास्यसि इत्यर्थो लभ्यते। अङ्गिरस् शब्दः सकारान्तः पुंसि। अङ्गिराः नाम ऋषिः। तस्य उत्पत्तिकारणम् अग्निः इति स्कन्दस्वामी मनुते। कथं तर्हि अग्ने इति अङ्गिरः इति च सम्बोधने। अभेदबोधः खलु स्यात्। तत्रोच्यते कार्यशब्देन कारणस्य अभिधानम्। अर्थात् अङ्गिरः इत्यनेन अङ्गरसः कारणम् अग्निः बोध्यः। शरीरस्य अवयवः अङ्गं कथ्यते। शरीरम् अङ्गि कथ्यते। अङ्गिनः शरिरस्य स्थितिहेतुः शरीरे अशितात् पीताद् रसः जायते। भुक्तात् पीताद् वा पदार्थात् शरीरे रससृष्टिः अग्निवशाद् भवति। अतः शरीरे रसस्य कर्ता अग्निः अङ्गिरस् इति कथ्यते। इत्थं जठराग्निः अङ्गिराः भवति। रसाश्च लोहित-मांस-स्नायु-अस्थि-मज्जा-शुक्राः। भुक्तस्य एतद्रसरूपेण परिणामम् अग्निः करोति।

**सरलार्थः-** अत्र मन्त्रे अग्निं प्रति उच्यते यत् हे अग्ने अङ्गिरो वा त्वं हविदानकारिणां यजमानानां कृते यत् कल्याणं करोषि तत् वस्तुतः तवैव सुखसाधनम् अस्ति।

**व्याकरणम् -**

- अङ्ग- आकृष्टार्थकः सम्बोधनात्मकः निपातः।
- दाशुषे- दाशृ-धातोः क्वसुप्रत्यये चतुर्थ्येकवचने दाशुषे इति रूपम्।

**उप॑ त्वाग्ने दि॒वेदि॑वे दोषा॑वस्तर्धि॒या व॒यम्।**
**नमो॒ भर॑न्त॒ एम॑सि॥७॥**

**पदपाठः- उप॑। त्वा॒। अ॒ग्ने॒। दि॒वेऽदि॑वे। दोषा॑ऽवस्तः। धि॒या। व॒यम्। नमः॑। भर॑न्तः। आ। इ॒म॒सि॒॥७॥**

**अन्वयः-** दोषावस्तः अग्ने वयं दिवेदिवे धिया नमः भरन्तः त्वा उप आ इमसि।



**व्याख्या-** हे अग्ने वयम् अनुष्ठातारः दिवेदिवे प्रतिदिनं दोषावस्तः रात्रौ अहनि च धिया बुद्ध्या नमः भरन्तः नमस्कारं सम्पादयन्तः उप समीपे त्वा एमसि त्वाम् आगच्छामः।

**टिप्पणी** - लौकिकसंस्कृते धातोः अव्यवहितपूर्वम् उपसर्गः प्रयुज्यते। वेदे धातूपसर्गयोः मध्ये व्यवधानं सम्भवति। क्वचिच्च धातोः उत्तरम् अपि उपसर्गप्रयोगः भवति। ते (गत्युपसर्गसंज्ञकाः) प्राग् धातोः। छन्दसि परेऽपि। व्यवहिताश्च। इति त्रिभिः सूत्रैः पाणिनिः इदं प्रतिपादितवान् अष्टाध्याय्याम्। अतः अस्मिन् मन्त्रे उप इति उपसर्गस्य एमसि इति क्रियापदेन सह अन्वयः भवति। समीपम् आगच्छसि इति तदर्थः। दोषावस्तः - वस आच्छादने इति धातुः। दोषा इत्यस्य रात्रिरर्थः। रात्रौ स्वेन ज्योतिषा तमसम् आच्छादयति स दोषावस्ता, ऋकारान्तः शब्दः। तस्य सम्बोधने रूपम् दोषावस्तः। नम्-धातोः असुन्-प्रत्यययोगेन नमस् इति अव्ययम् निष्पद्यते। तत् नपुंसकलिङ्गि गण्यते। स्तुतिः नमस्कारः वा तदर्थः। भृधातोः शतृप्रत्यययोगेन भरत् इति प्रातिपदिकम् लभ्यते। तस्य पुंसि प्रथमाबहुवचनम् भरन्तः इति। नमः भरन्तः इति अन्वयः। नमः अत्र कर्मरूपेण ग्राह्यम्। अर्थात् नमस्कारम् सम्पादयन्तः कुर्वन्तः इति। हे अग्ने प्रतिदिनम् यथा अस्माकं प्रज्ञा तथा नमस्कारं स्तुतिं वा कुर्वन्तः वयं तव समीपम् आगच्छामः इति।

**सरलार्थः-** अस्मिन् मन्त्रे यज्ञकारिणः अग्निं प्रति कथयति यत् वयं दिवा रात्रौ च बुद्धियुक्ताः भवन्तः प्रणमन्तश्च तव समीपम् आगच्छामः।

**व्याकरणम् -**

- भरन्तः- भृधातोः शतृप्रत्यये प्रथमाबहुवचने भरन्तः इति रूपम्।
- इमसि- इधातोः लटि उत्तमपुरुषबहुवचने इमसि इति रूपम्। वेदे कदाचित् इदन्तो मसि इति सूत्रेण मस्य स्थाने मसि इत्यादेशः भवति।

**राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम्।**
**वर्ध॑मान॒ं स्वे दमे॑॥८॥**

**पदपाठः - राज॑न्तम्। अ॒ध्व॒राणा॑म्। गो॒पाम्। ऋ॒तस्य॑। दीदि॑विम्। वर्ध॑मानम्। स्वे। दमे॑॥८॥**

**अन्वयः** - राजन्तम् अध्वराणां गोपाम् ऋतस्य दीदिविं स्वे दमे वर्धमानम्।

**व्याख्या-** पूर्वमन्त्रे त्वाम् उपैम इत्यग्निम् उद्दिश्य उक्तम्। कीदृशं त्वाम्। राजन्तं दीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम् ऋतस्य सत्यस्य अवश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारम् अग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम्॥



**टिप्पणी -** पूर्वमन्त्रे उक्तं यत् त्वाम् अग्निम् आगच्छामः इति। कीदृशं त्वाम्। राजन्तम्। राजृ दीप्तौ इति धातोः शतृप्रत्यययोगेन राजत् इति प्रातिपदिकं लभ्यते। तस्य द्वितीयैकवचने रूपम् राजन्तम् इति। प्रकाशमानम् इत्यर्थः। राजृ ऐश्वर्यकर्मा इति स्कन्दस्वामी। तदा राजत् इत्यस्य ईशान शासनकर्ता इत्यर्थः। कस्य शासनम् अध्वराणाम् यज्ञानाम् इति। गोपाम् - गां पाति इति गोपा। तम्। ऋतम् - ऋ गतौ इति धातोः क्तप्रत्यययोगेन ऋतशब्दः निष्पद्यते। ऋतशब्दस्य नैके अर्थाः वेदे एव परिलक्ष्यन्ते। सायणाचार्यमतेन कर्मफलम् तदर्थो भवति। स्कन्दस्वामिमतेन तदर्थो हि यज्ञः प्रकृते मन्त्रे। वेङ्कटमाधवमतेन तदर्थः सत्यम् इति। वेदे अस्य नैके अर्थाः। तत्र प्रथमोऽर्थः - ऋग्वेदे ऋतशब्दस्यर्थः प्रकृतिः इत्यपि बाहुल्येन लभ्यते। द्वितीयोऽर्थः - जगति सूर्य-चन्द्र-पृथिवी-नक्षत्र-ऋतु-दिन-रात्रीत्यादयः सर्वेऽपि विशिष्टं नियमम् अवलम्ब्य प्रवर्तन्ते। अयं शाश्वतः नियमः। अस्य नियमस्य उल्लङ्घनं न कुर्वन्ति। अयं नियम एव ऋतम्। अतः ऋतम् जगत् शास्ति। जगतः शानकम् ऋतम्। जगतः परिचालकः कश्चित् शाश्वतः नियमः ऋतम्। तृतीयोऽर्थः - यज्ञानाम् अनुष्ठाने देवानाम् आह्वानम् हविर्दानम् देवपूजा इत्यादीनाम् कश्चित् स्थिरः क्रमः दृश्यते। अयमेको नियम एव। अयं नियम ऋतम्। यज्ञकर्मणां नियमितता ऋतम्। चतुर्थोऽर्थः - यज्ञानां चालनम् ऋतेन भवतीति उक्तमेव। क्रमशः ऋतशब्दः यज्ञार्थे अपि प्रयुज्यते। ऋतं यज्ञः। पञ्चमोऽर्थः - यज्ञानुष्ठाने यजमानस्य ऋत्विजाम् च आचरणस्य नियमः हि व्रतम् कथ्यते। ऋतशब्दः ईदृशनैतिकव्रतार्थेऽपि दृश्यते।

**सरलार्थः-** ननु कीदृशस्य अग्नेः समीपं यज्ञकारिणः यान्ति। तदेव अस्मिन् मन्त्रे उच्यते यत् अयम् अग्निः दीप्तियुक्तः, यज्ञानां रक्षकः, कर्मफलानां पुनः पुनः द्योतकः स्मारकः, यज्ञे स्वस्थाने यज्ञगृहे वर्धमानश्च। ईदृशस्य अग्नेः समीपं यज्ञकारिणः यन्ति।

**व्याकरणम् -**

- राजन्तम्- राज्-धातोः शतृप्रत्यये द्वितीयैकवचने राजन्तम् इति रूपम्।
- दीदिविम्- दिव्-धातोः क्विन्प्रत्यये द्वित्वे द्वितीयैकवचने दीदिविम् इति रूपम्।
- वर्धमानम्- वृध्-धातोः शानच्प्रत्यये द्वितीयैकवचने वर्धमानम् इति रूपम्।

**स नः पितेव सूनवेऽग्ने सूपायनो भव।**
**सचस्वा नः स्वस्तये॥९॥**

**पदपाठः - सः। नः। पिताऽइव। सूनवे। अग्ने। सुऽउपायनः। भव। सचस्व। नः। स्वस्तये॥९॥**

अन्वयः- अग्ने ! सः (त्वं) सूनवे पिता इव नः सूपायनः भव। स्वस्तये नः सचस्व।



**व्याख्या-** हे अग्ने सः त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तः भव। तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। तत्रोभयत्र दृष्टान्तः। यथा सूनवे पुत्राय पिता सुप्रापः प्रायेण समवेतो भवति, तद्वत्।

**टिप्पणी** - सूपायनः - सु+उप+इण् गतौ इति धातोः ल्युट्-प्रत्यययोगेन सूपायनशब्दः निष्पद्यते। शोभनम् उपायनम् अस्य असौ सूपायनः। उपैति इति समीपं गच्छति। सुखेन समीपं गन्तुं शक्यम् तादृशः त्वं भव हे अग्ने। सूपगमः सुखोपसर्पो भव। सु+अस् भुवि इति धातोः क्तिन्-प्रत्यययोगेन स्वस्ति इति शब्दः निष्पद्यते। बहुत्र अस्यार्थः संततिपरम्पपरायाः उच्छेदस्य रहित्यम् इति दृश्यते। अविनाशः इत्यर्थः सायणस्य। सच् समवाये इति धातोः आत्मनेपदे लोटि थासि रूपम् सचस्व इति। समवेतो भव, अस्मान् सेवस्व। अर्थात् अस्माकं विनाशराहित्याय प्रवर्तस्व इत्युक्तं भवति।

**सरलार्थः-** अस्मिन् मन्त्रे अग्नेः अनायासेन प्राप्त्यर्थं प्रार्थ्यते। अत्र अग्निं प्रति उच्यते हे अग्ने पिता यथा पुत्रस्य समीपे अनायासेन प्राप्तिविषयः भवति तथैव त्वमपि अस्माकं कल्याणाय अनायासेन प्राप्तिविषयः भव।

**व्याकरणम्-**

- सूपायनः- सुपूर्वकात् उपपूर्वकात् इ-धातोः युच्प्रत्यये सूपायनः इति रूपम्। सुखेन उपायनं यस्य सः सूपायनः।
- भव- भू-धातोः लोटि मध्यमपुरुषैकवचने भव इति रूपम्।
- स्वस्तये- सुपूर्वकात् अस्-धातोः क्तिन्प्रत्यये चतुर्थ्येकवचने स्वस्तये इति रूपम्। लौकिके तु स्वस्ति इति अव्ययपदम्।
- सचस्व- सच्-धातोः आत्मनेपदे लोटि मध्यमपुरुषैकवचने सचस्व इति रूपम्।



## पाठगतप्रश्नाः

१८. कविक्रतुः इत्यस्य कः अर्थः।
१९. कीदृशः अग्निः देवैः सह समागच्छतु।
२०. गमत् इति रूपं कथं सिद्ध्येत्।
२१. अङ्ग- इति कीदृशः निपातः।
२२. अङ्गिरः इत्युक्त्वा कस्य सम्बोधनं क्रियते।
२३. इमसि इत्यत्र कः धातुः।
२४. चित्रश्रवस्तमः इत्यस्य विग्रहं समासं च लिखत।
२५. दाशुषे इत्यस्य प्रकृतिं प्रत्ययं च लिखत।
२६. सूपायनः इत्यत्र कः धातुः।



२७. दोषावस्तः इत्यस्य कः अर्थः।

२८. सचस्व इति रूपं कथं सिद्ध्येत्।

२९. दीदिविम् इति रूपं कथं सिद्ध्येत्।

३०. अध्वराणाम् इत्यस्य कः अर्थः।

३१. भरन्तः इति रूपं कथं सिद्ध्येत्।

३२. श्रवः इत्यस्य कः अर्थः।

## १५.२) अग्निस्वरूपम्

सर्वासु वैदिकदेवतासु अग्निरेव पवित्रतमा देवता। ऋग्वेदे केवलस्य अग्नेः द्विशतसूक्तेषु स्तुतिः कृता दृश्यते। एतद् विहाय अन्येष्वपि सूक्तेषु अन्याभिः देवताभिः सह अग्निरपि स्तूयते। यद्यपि गुरुत्वदृष्ट्या इन्द्रात् परमेव अग्नेः स्थानं तथापि यज्ञप्राधान्यात् वेदस्य प्रत्येकमण्डलारम्भे स सम्बोधनविषयताम् एति।

वेदे द्यावापृथिवी इत्येकं बहुचर्चितं देवतायुगलम्। अनयोः पुत्रत्वेन परिकल्पितः अग्निः पृथिव्याम् अवतिष्ठते। एत एव वैदिकशब्दानां व्युत्पत्तिप्रदर्शने प्रवृत्तः निरुक्तकारः सर्वप्रथमम् अग्निं व्याख्यातुकाम आह – "अग्निं पृथिवीस्थानस्थं प्रथमं व्याख्यास्यामः" इति। अनेन पृथिवीस्थिता इयं देवता देवतानां प्रथमा इति सुस्पष्टं भासते। वेदसंहितासु सर्वपुरातनत्वेन ऐतिहासिकैः समर्थिता अग्निसूक्तादेव आरभते। तथाहि तत्राम्नातम् – "अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। " इति। गीतिप्रधानस्य सामवेदस्यापि अग्न आयाहि वीतये इति अग्नेः आह्वानपर आरम्भो लभ्यते। "अग्निर्वै प्रथमो देवतानाम्", "अग्निर्वै देवानामवमः", इत्यादीनि ब्राह्मणवाक्यानि देवतासु अग्नेः प्राथम्यं निःसन्देहं प्रकटयन्ति।

वैदिकदृशा यज्ञ एव श्रेष्ठतमं वैदिकं कर्म। यद्यपि परवर्तिनि काले यज्ञशब्दो व्यापकार्थपरः प्रयुञ्जानो दृश्यते तथापि यज्ञ इत्युच्यमाने सति अग्निहोत्ररूपार्थः झटिति गम्यते। अयमेव अग्निः होमनिष्पादकः क्रान्तप्रज्ञः अनृतरहितः विविधकीर्तियुक्तः इति कीर्तितः। तथाहि आम्नायते – "अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः"इति। अस्मात् अग्नेः सकाशात् यजमानः सर्वम् अभिलषितम् आसादयति। सर्वोपरि स यजमानस्य पिता भ्राता आत्मीयश्च भवति। तदाम्नातम् ऋक्संहितायाम् – "अग्निं मन्ये पितरमग्निमपिमग्निं भ्रातरं सदमित् सस्वायम् ....”इति।

निरुक्तकारस्य यास्कस्य मते वेदेषु अग्निरेव एकः देवः। स एव इन्द्रवरुणादिनाम्ना बहुभिः प्रकारैः वर्ण्यते। तथाहि आम्नातं – "त्वमग्न इन्द्रो वृषभः .. त्वं विष्णुः ... त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि" इति। ऐतरेयब्राह्मणे अग्निः सर्वाः देवताः इति मन्त्रांशेन अग्नेः सर्वदेवमयत्वं प्रतिपादितम्। अग्नेः सर्वज्ञत्वमपि कीर्तितं यतः स यज्ञविषयकं सर्वं वेत्ति। ततो जातवेदा इति तस्य संज्ञा। स तदुपासकेषु वररूपेण पुत्रवित्तादिकं वर्षति। तथाहि आम्नातम् – "अग्निना रयिमश्नवत् ..” इति। प्रसङ्गे अस्मिन् "आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्”इति पौराणिकी भणितिरपि अनुसन्धेया। अग्नेः



दैत्यविनाशकीर्तिरपि क्वचित् कीर्त्यते। म्याक्डोनल्महोदयस्य मतानुसारम् इन्द-इराणीयमानवानां मध्ये बहुपूर्वकालतः अग्निपूजायाः प्रचलनम् आसीत्। तन्मते इतालीया ग्रीसदेशीयाश्च अग्नौ एव विविधान् देवान् उद्दिश्य होममकुर्वन्।

## १५.३) वेदे अग्निचरितम्

यागो हि आर्याणाम् ऐहिकामुष्मिकाभ्युदयसाधनम् अपूर्वमुत्पादयन् एकमेव धर्मसाधनमिति परिगण्यते। यागे हि अभीष्टदेवमुद्दिश्य हविस्त्यागेन तदानुकूल्याद् इष्टप्राप्तिर्घटते यजमानानाम्। स च यागः अग्निसाध्यः। अग्निर्यदि यजमानेन हुतं हव्यं तत्तद्देवान् न प्रापयेत् तदा कुतोऽभीष्टप्राप्तिः? अतएव वैदिकमन्त्रेषु इन्द्रात् परमेव अग्नेरभ्यर्हितत्वं प्रकटयन्ति अग्निदेवताका द्विशताधिकस्तोत्रनिबद्धा मन्त्राः।

अग्नेर्हि केशास्तस्य ज्वालाः। दन्तास्तस्य हिरन्मयाः। तस्य जिह्वाम् आश्रित्यैव देवा हविर्भुञ्जते। तदुक्तम् 'अग्निर्वै देवानां मुखम्' 'अग्निर्मुखं प्रथमो देवतानामि'ति। अग्निः बहुत्रैव विविधैः पशुभिः सह तुलितः। क्वचित् स तीक्ष्णशृङ्गधारी वृषभ इव वर्णितः। उत्पत्तिसमये स गोवत्स इव भवति। यदा सः अरणिप्रघर्षनाद् उत्पाद्यते तदा स देवानां वाहकस्तथा देवान् प्रति दत्तानां हविषां वाहकः अश्व इव यागरूपेण रथेन सह यजमानैर्युज्यते इत्यपि क्वचिद् वर्णितम्। स हि दिव्यो विहङ्गः। स च नभसः श्येनः। काष्ठं घृतं च तस्य भोज्यम्। गलितं घृतं तस्य प्रियम्। स दिवसस्य त्रिभिः हविर्भिः उपास्यते। स तस्य ज्वालारूपेण चमसेन देवान् हविः प्राशयति।

स सूर्य इव तपति। जीमूतगर्भाया दामिन्या दीप्तिरिव तस्य दीप्तिः। स न केवलं दिवा नक्तमपि तमिस्रामपसार्य सर्वं प्रकाशयति। स कृष्णेन वर्त्मना उपसर्पन् अरण्यानीमाक्रम्य यदा निःशेषं दहति, तदा स नापितवत् क्षुरपत्रेण पृथिव्याः श्मश्रुजातं मुन्तयति। तस्य ज्वालाः गर्जदुर्मय इव रावश्च वज्रानिर्घोष इव प्रतीयते। तस्य लोहिताभधूमाः स्तम्भाकारं परिगृह्य आकाशं स्पृशन्तः नभस आलम्बनतया विराजन्ते। धूमकेतुरिति तस्याभिधान्तरम्। स दीप्तिमद्भिरभयं लोहिताभ्याम् अश्वाभ्यां वाहितं स्यन्दनमेकं समारुह्य सञ्चरति। स सारथिरिव यागरथं चालयन् अभीष्टान् देवान् यागस्थानमावहति। 'आ विश्वेभिः सरथं याहि देवैः' इति 'स्वयं यजस्व दिवि देव देवान्' इति च प्रमाणम् (मण्डलादिषु आग्नेयमैन्द्रात्)। स द्यावापृथिव्योः पुत्रः। क्वचिद् अपां युत इत्यपि कीत्र्यते। देवा आर्याणां मानवानां मध्ये तेषां दीपकतया अंग्नि स्थापयामासुः। इन्द्रो हि अग्नेः सहोदर इत्युच्यते। अत एव अग्निना सह तस्य सम्बन्धो देवान्तरापेक्षया अधिकं दृढः।

तस्योत्पत्तिविषये विविधं पौराणिकं तथ्यं प्राप्यते। अरणिद्वयमन्थनेन उत्पाद्यमानस्य वह्नेः पितरौ हि अरणिद्वयम्। कथ्यते यत् जन्ममात्रमेव शिशुरग्निः तस्य पितरौ भक्षयति। अग्निप्रज्वालकस्य पुंसो दशहस्ताङ्गुलयो हि वह्नेः दश धातृमातरः। यस्माद् बलेनैव उत्पाद्यः स तस्मात् 'सहसः सूनुं बलपुत्रः' इति तस्याभिधान्तरम्। प्रतिदिनं प्रभाते यदा अग्निः प्रज्वाल्यते, तदा स युवा इवाभाति। न कोऽपि यष्टा अग्नेः ज्यायान् यतस्तेनैव प्रथमतो यागः सम्पादितः।



## ॥अग्निसूक्तम्॥

'न हि देवो न मर्त्यो / महस्तव क्रतुं परः। ' उपाख्यानान्तरेण अग्नेरुत्पत्तिविषयकमपरं तथ्यमिदं समर्थ्यते यत् अग्निः वृषभ इव अपामङ्के समुत्पन्नः। अत एव अपां नपादित्याख्यां धारयन् स वैदिकवाङ्मये पृथग् दैवतमिव पृथक् स्तुतिभिः संस्तुतः। अपरमिदं मतमुपन्यस्तं यदग्निं दिवि जातः। मातरिश्वान् इत्याख्यः कोऽपि देवः स्वर्गतोऽग्निं मर्त्यलोकमानयति। सूर्योऽपि अग्नेरन्यतमा मूर्तिरिति कीर्त्यते। एवमग्निस्त्रिधामूर्त्तिः सञ्जातः। तस्य त्रिधा द्युतयः त्रीणि शिरांसि त्रयो देहाः त्रीणि च स्थानानि।

'अग्ने त्री ते वाजिना त्री षधस्था / तिस्रस्ते जिह्वा ऋतजात पूर्वीः

तिस्र उ ते तन्वो देववाता / स्ताभिर्नः पाहि गिरो अप्रयुच्छन्।। '

यतो विश्वमिदं द्विधा विभक्तं द्यावापृथिवीभ्यां तस्मादुभयत्र जायमानोऽग्निः द्विजन्मा इत्युच्यते।

देवान्तरापेक्षया अग्निः अधिकतया मनुष्यजीवनं सम्बध्नाति। अग्निरेव केवला देवता या स्थूलेन चक्षुषा प्रत्यक्षा भवति नृणाम्। अत एव स पृथिवीस्थानदेवेषु अग्रतो गण्यते। स एव केवलं गृहपतिरित्युच्यते, उच्यते यत्, सोऽतिथिरूपेण यजमानानां गृहाद् गृहान्तरं व्रजति। स स्वयममरः सन् मरणधर्माणां गृहेषु आश्रयं स्वीकरोति। स क्वचित् तदुपसकानां पितेव, क्वचित् भ्रतेव क्वचिद् सुत इव वर्णितः। तदुक्तम्-

'अग्निं मन्ये पितरमग्निमापिमग्निं / भ्रतरं सदमित् सखायम्' इति। अपि चोक्तम् - 'स नः पितेव सूनवे / ऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये। ' स मनुष्यैर्दत्तं हविर्देवान् प्रापयति। तथा देवानपि यज्ञस्थलमावहति। अत एव स देवैः दूतत्वेन मनुष्यैश्च हविर्वाहकत्वेन नियोजितः। यतोऽग्नौ हि यागो निष्पाद्यते ततः स यज्ञस्य ऋत्विग्, विप्रः पुरोहित इत्यभिधीयते। एवं क्वचिद् अन्यत्र होता, अध्वर्युः, ब्रह्मण इत्यादिभिरभिधाभिः सोऽभिहितः। अत्र प्रसङ्गत उल्लेखमर्हति अयं मन्त्रः -

'अग्निमीळे पुरोहितं /यज्ञस्य देवमृत्विजम्। / होतारं रत्नधातमम्।। ' इति

अग्नेः सर्वज्ञत्वमपि कीर्त्तितम्, यतः स यज्ञ विषयकं सर्वं वेत्ति। ततो जातवेदा इति तस्य संज्ञा। स तदुपासकेषु वररूपेण पुत्रवित्तादिकं वर्षति। तथाहि आम्नातम् -

'अग्निना रयिमश्नवत्/ पोषमेव दिवेदिवे। / यशसं वीरवत्तमम्।। ' इति।

प्रसङ्गेऽस्मिन् 'आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनादि'ति पौराणिकी भणितिरपि अनुसन्धेया। अग्नेः दैत्यविनाशकीर्तिरपि क्वचित् कीर्त्यते। म्याक्डोनालमहोदयस्य मतानुसारम् इन्दो-इराणीयमानवानां मध्ये बहुपूर्वकालतः अग्निपूजायाः प्रचलनमासीत्। तन्मते इतालीया ग्रीसदेशीयाश्च अग्नौ इव विविधान् देवानुद्दिश्य होममकुर्वन्।

प्राच्यविदुषां मतानुसारमग्निरङ्गतेरिति विग्रहानुसारम् अग्-धातोः निप्रत्यये अग्निशब्दो निष्पाद्यते। अग्निः अङ्गति स्वकीयमङ्गं सन्नममानः प्रह्वीभवन् स्वयमेव काष्ठदाहे हविष्पाके च प्रेरयति इत्यर्थः। म्याक्डोनालमते तु अग्निरिति शब्दः 'एजा इल ..' इति ग्रीक्देवताया नाम्ना अस्य भाषाविज्ञानसमर्थितं सादृश्यं परिलक्ष्यते।

इग्निस् इति लातिनशब्देन संस्कृतस्य अग्निशब्दस्य ध्वनिगतम् अर्थगतञ्च साम्यं परं विस्मयमावहति। नैरुक्तमतानुसारं तु एतिधातुनिष्पन्नाद् अयनशब्दादकारम्, अनक्ति-धातोः ककारं,



नयतेश्च नीरिति आदाय ककारस्य गकारादेशं कृत्वा नीरित्यस्य ईकारस्य ह्रस्वादेशं विधाय अग्निशब्दो निष्पाद्यते प्रत्यक्षवृत्तिं परोक्षवृत्तिम् अतिपरोक्षवृत्तिं चारलम्ब्य इति शम्।



## पाठसारः

अस्मिन् पाठे अग्निसूक्तस्य नव मन्त्राः सन्ति। तत्रादौ अग्निमीळे पुरोहितम्... इति मन्त्रः अग्निसूक्तस्य आदिममन्त्रः विद्यमानः। तत्र उक्तम् अग्निः एव यज्ञे सर्वान् देवान् आह्वयति। स एव यज्ञस्य पुरोहितः। ततः द्वितीये मन्त्रे उक्तं यत् अग्निः कैः स्तुत्यः। के तस्य स्तुतिं कुर्वन्ति। उक्तं प्राचीनैः पुरातनैः च ऋषिभिः स स्तुत्यः। ततः तृतीये मन्त्रे यजमानः अग्निना किं लभते। उक्तं- धनं लभते। तच्च प्रतिदिनं वर्धमानम्। एवं दानादिकर्मणा यजमानः यशश्च लभते। ततः चतुर्थे मन्त्रे अग्निं प्रति उच्यते यत् त्वं यथा हिंसारहितं यज्ञं परितः व्याप्नोषि तेन अवश्यं यज्ञः देवान् प्रति गच्छति। पञ्चमे मन्त्रे उच्यते कीदृशः अग्निः देवताभिः सह आगच्छति। उक्तं-स अग्निः उत्कृष्टबुद्धिसम्पन्नः सत्यशीलः कीर्तिमान्। ततः षष्ठे मन्त्रे अग्निं प्रति उच्यते यत् त्वं यत् कल्याणं करोषि तत् वस्तुतः तवैव कल्याणं भवति। ततः सप्तमे मन्त्रे अग्निं प्रति यज्ञकारिणां गमनम् उच्यते। ते अग्निं प्रति गन्तुम् इच्छन्ति। अधुना प्रश्नः भवितुम् अर्हति यत् कीदृशः अग्निः। अस्य उत्तरं ततः परस्मिन् मन्त्रे एव उच्यते यत् दीप्तियुक्तः, यज्ञानां रक्षकः, कर्मफलानां द्योतकः, यज्ञे स्वस्थाने वर्धमानश्च। ततः नवमे मन्त्रे अग्नेः सुप्राप्त्यर्थम् उच्यते। तत्र उपमया उच्यते यत् पिता यथा पुत्रस्य समीपे अनायासेन प्राप्तिविषयः भवति तथैव हे अग्ने त्वमपि भव। एवं प्रकारेण अग्नेः स्वरूपं माहात्म्यं च उक्ते।



## पाठान्तप्रश्नाः

**(अग्निसूक्ते)**

१. अग्निस्वरूपं वर्णयत।

अग्निमीळे पुरोहितम्... इत्यादिमन्त्रं व्याख्यात।

अग्नः पूर्वेभि... इत्यादिमन्त्रं व्याख्यात।

अग्निना रयि... इत्यादिमन्त्रं व्याख्यात।

अग्ने यं यज्ञ... इत्यादिमन्त्रं व्याख्यात।

२. अग्निसूक्तस्य सारं लिखत।

अग्निर्होता कविक्रतुः... इत्यादिमन्त्रस्य व्याख्यात।

यदङ्गदाशुषे... इत्यादिमन्त्रस्य व्याख्यात।



उप त्वाग्ने... इत्यादिमन्त्रस्य व्याख्यात।

राजन्तमध्वराणाम्...... इत्यदिमन्त्रस्य व्याख्यात।

स नः पितेव... इत्यादिमन्त्रस्य व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरपूगः-१ (अग्निसूक्ते)**

१. प्राचीनैः नूतनैश्च ऋषिभिः।

२. अज्मध्यस्थस्य डकारस्य।

३. वेदे।

४. यज्ञस्य पुरोहितं, ऋत्विजं, रत्नधातमम्।

५. लृटि लेटि च।

६. दिवेदिवे।

७. पोषं यशसं वीरवत्तमम्।

८. अश्-धातोः।

९. देवशब्दस्य द्वितीयाबहुवचने रूपमिदम्। पदान्ते स्थितात् नकारात्पूर्वं आकारः किञ्च परं यः कोऽपि स्वरः तिष्ठति चेत् नकारस्य लोपः भवति। अपि तु पूर्ववर्णस्य अनुनासिकादेशः भवति।

१०. पुरुषाः।

११. वीरशब्दस्य मतुप्प्रत्यये तमप्प्रत्यये च द्वितीयैकवचने।

१२. पुष्-धातोः घञ्प्रत्यये द्वितीयैकवचने।

१३. परिपूर्वकात् भू-धातोः क्विप्प्रत्यये।

१४. स्तुत्यः।

१५. प्राप्नोति।

१६. यशश्शब्दस्य अच्प्रत्यये द्वितीयैकवचने।

१७. ईड्धातुः।

**उत्तरपूगः-२ (अग्निसूक्ते)**

१८. क्रान्तप्रज्ञः क्रान्तकर्मा वा।

१९. होता कविक्रतुः सत्यः चित्रश्रवस्तमः।

२०. गम्-धातोः लेटि प्रथमपुरुषैकवचने गमत् इति रूपम्। सायणाचार्यमतानुसारेण गम्-धातोः लोटि प्रथमपुरुषैकवचने वैदिकं रूपमिदम्।

२१. अभिमुखीकरणार्थो निपातः।



२२. अग्नेः।

२३. इधातुः।

२४. चित्रं श्रवः यस्य सः चित्रश्रवाः अतिशायी चित्रश्रवाः इति चित्रश्रवस्तमः, बहुव्रीहिसमासः।

२५. दाशृ-धातोः क्वसुप्रत्यये चतुर्थ्येकवचने दाशुषे इति रूपम्।

२६. इधातुः।

२७. रात्रावहनि च।

२८. सच्-धातोः आत्मनेपदे लोटि मध्यमपुरुषैकवचने।

२९. दिव्-धातोः क्विन्प्रत्यये द्वित्वे द्वितीयैकवचने।

३०. राक्षसकृतहिंसारहितानां यज्ञानाम्।

३१. भृ-धातोः शतृप्रत्यये प्रथमाबहुवचने।

३२. कीर्तिः।

॥इति पञ्चदशः पाठः॥



१६

# ॥इन्द्रसूक्तम्॥

## प्रस्तावना

शब्दराशिः ज्ञानखनिश्च वेदः। ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः चेति चतुर्धा विभक्तः वेदः। प्रत्यक्षप्रमाणेन अनुमानेन वा यो विषयो न ज्ञायते तस्य ज्ञानम् वेदाद् भवति। अर्थात् वेदः शाब्दं प्रमाणम्। जनानां सुखं केन अलौकिकेन उपायेन भवितुमर्हति इति वेदयति वेदः। वेदे नैका देवताः स्तुताः। तासु इन्द्रो देवः प्रधानतां भजते। इन्द्रस्य स्तुतिः यस्मिन् सूक्ते तदिम् इन्द्रसूक्तम्।

इन्द्रसूक्तम् अतीव महत्त्वपूर्णम्। यथा अग्निसूक्ते अग्नेः स्तुतिः विहिता तथैव इन्द्रसूक्ते अपि इन्द्रस्य माहात्म्यं वर्णितम्। इन्द्रसूक्ते विद्यमानेषु मन्त्रेषु इन्द्रस्य पराक्रमः दृश्यते। अस्य सूक्तस्य ऋषिः हिरण्यस्तूपः, त्रिष्टुप् छन्दः इन्द्रश्च देवता। इन्द्रः ऋग्वेदे सर्वाधिकजनप्रियः महत्त्वपूर्णदेवता अस्ति। ऋग्वेदे २५० सूक्तेषु इन्द्रस्य स्तुतिः स्वतन्त्ररूपेण कृता। किञ्च ५० सूक्तेषु अन्यदेवताभिः सह स्तुतिः विहिता। एवम् ऋग्वेदे प्रायः चतुर्थांशः इन्द्रस्यैव गुणः वर्णितः। यथा अग्निः सूर्यश्च यथाक्रमं पृथिवीलोके किञ्च द्युलोके अधिपती स्तः तथैव इन्द्रः अपि अन्तरिक्षलोके अधिपतिः अस्ति।



## उद्देश्यानि

एतं पाठं पठित्वा भवान्

- इन्द्रसूक्तं ज्ञातुं शक्नुयात्।
- इन्द्रस्य माहात्म्यं ज्ञातुं शक्नुयात्।
- इन्द्रस्य कीर्तिं ज्ञातुं शक्नुयात्।
- मनुष्याणां रक्षकस्य इन्द्रस्य विषये ज्ञानं स्यात्।
- इन्द्रसूक्ते विद्यमानानां वैदिकशब्दानां प्रयोगं ज्ञातुं शक्नुयात्।
- लौकिकवैदिकप्रयोगयोः मध्ये भेदं कर्तुं शक्नुयात्।
- वेदे विविधस्वराणां प्रयोगं ज्ञातुं शक्नुयात्।

## १६.१) सम्प्रति मूलपाठं पठाम-

**इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री।**
**अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम्॥१॥**



अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः॥२॥

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम्॥ ३॥

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से॥४॥

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः॥५॥

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम्।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः॥६॥

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः॥७॥

नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव॥८॥

नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः॥९॥

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः॥१०॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥११॥



**अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः।**
**अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून्॥१२॥**

**नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च।**
**इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये॥१३॥**

**अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत्।**
**नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि॥१४॥**

**इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः।**
**सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव॥१५॥**

## १६.१.१) इदानीं मूलपाठम् अवगच्छाम।

**इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री।**
**अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम्॥१॥**

**पदपाठः- इन्द्रस्य। नु। वीर्याणि। प्र। वोचम्। यानि। चकार। प्रथमानि। वज्री॥अहन्। अहिम्। अनु। अपः। ततर्द। प्र। वक्षणाः। अभिनत्। पर्वतानाम्॥१॥**

**अन्वयः-** नु इन्द्रस्य वीर्याणि प्रवोचं यानि वज्री प्रथमानि चकार। अहिम् अहन्, अनु अपः ततर्द। पर्वतानां वक्षणा अभिनत्।

**व्याख्या-** वज्री वज्रयुक्तः इन्द्रः प्रथमानि पूर्वसिद्धानि मुख्यानि यानि वीर्याणि पराक्रमयुक्तानि कर्माणि चकार तस्य इन्द्रस्य तानि वीर्याणि नु क्षिप्रं प्रब्रवीमि। कानि वीर्याणीति तदुच्यते। अहिं मेघम् अहन् हतवान्। तदेतदेकं वीर्यम्। अनु पश्चात् अपः जलानि ततर्द हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। पर्वतानां संबन्धिनीः वक्षणाः प्रवहणशीलाः नदीः प्र अभिनत् भिन्नवान् कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम्। एवमुत्तरत्रापि द्रष्टव्यम्॥

**सरलार्थः-** अस्मिन् मन्त्रे इन्द्रस्य पराक्रमयुक्तकार्याणि वर्णितानि। प्रथमं स इन्द्रः मेघं हतवान्। द्वितीयं जलानि भूमौ पातितवान्। तृतीयं च वृष्ट्या पर्वतान् खण्डितवान्। एवं नदीनां गमनमार्गं रचितवान्। तेन मार्गेण नद्यः प्रवहन्ति।

**व्याकरणम्-**



- वीर्याणि- वीर्-धातोः यतिप्रत्यये वीर्यम् इति रूपम्। ततः प्रथमाबहुवचने वीर्याणीति।
- वोचम् - वच्-धातोः लुङ्लकलेटि उत्तमपुरुषैकवचने रूपम्।
- अहन् - हन्-धातोः लङि प्रथमपुरुषैकवचने रूपम्।
- चकार - कृ-धातोः लिटि प्रथमपुरुषैकवचने रूपम्।
- ततर्द - तृद्-धातोः लिटि प्रथमपुरुषैकवचने रूपम्।
- अभिनत् - भिद्-धातोः लङि प्रथमपुरुषैकवचने रूपम्।

**अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष।**
**वाश्राइव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः॥२॥**

**पदपाठः - अहन्। अहिम्। पर्वते। शिश्रियाणम्। त्वष्टा। अस्मै। वज्रम्। स्वर्यम्। ततक्ष॥ वाश्राःऽइव। धेनवः। स्यन्दमानाः। अञ्जः। समुद्रम्। अव। जग्मुः। आपः॥२॥**

**अन्वयः-** (इन्द्रः) पर्वते शिश्रियाणम् अहिम् अहन्। त्वष्टा अस्मै स्वर्यं वज्रं ततक्ष। वाश्राः धेनवः इव स्यन्दमाना आपः अञ्जः समुद्रम् अव जग्मुः।

**व्याख्या-** पर्वते शिश्रियाणम् आश्रितम् अहिं मेघम् अहन् हतवान्। अस्मै इन्द्राय स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं त्वष्टा विश्वकर्मा वज्रं ततक्ष तनूकृतवान्। तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ताः आपः समुद्रम् अञ्जः सम्यक् अव जग्मुः प्राप्ताः। तत्र दृष्टान्तः। वाश्राः वत्सान्प्रति हम्भारवोपेताः, धेनवः इव। यथा धेनवः सहसा वत्सगृहे गच्छन्ति तद्वत्॥

**सरलार्थः-** पर्वते आश्रितान् मेघान् इन्द्रः हतवान्। तस्मात् विश्वकर्मा गर्जनं कुर्वन्तं वज्रं निर्मितवान्। तेन वज्रेण मेघे भिन्ने सति शब्दायमानाः धेनवः इव जलानि शीघ्रं समुद्रं प्रति अगच्छन्।

**व्याकरणम् -**

- शिश्रियाणम् - श्रि-धातोः लिडर्थे कानचि इयङादेशे नस्य णत्वे शिश्रियाणम् इति रूपम्।
- स्वर्यम् - सुपूर्वकात् ऋ-धातोः ण्यति स्वर्यम् इति रूपम्। अथवा स्वृ (शब्दोपनापयोः) इत्यतः ण्यति स्वर्यम् इति रूपम्।
- ततक्ष - तक्ष्-धातोः लिटि प्रथमपुरुषैकवचने ततक्ष इति रूपम्।
- स्यन्दमानाः - स्यन्द्-धातोः शानचि स्यन्दमाना इति रूपम्।
- जग्मुः - गम्-धातोः लिटि प्रथमपुरुषबहुवचने रूपम्।



**वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य।**
**आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम्॥। ३॥**

**पदपाठः- वृषऽयमाणः। अवृणीत। सोमम्। त्रिऽकद्रुकेषु। अपिबत्। सुतस्य॥आ। सायकम्। मघऽवा। अदत्त। वज्रम्। अहन्। एनम्। प्रथमऽजाम्। अहीनाम्॥३॥**

**अन्वयः** - वृषायमाणः सोमम् अवृणीत। त्रिकद्रुकेषु सुतस्य अपिबत्। मघवा सायकं वज्रम् आ अदत्त, अहीनां प्रथमजाम् एनम् अहन्॥३॥

**व्याख्या-** वृषायमाणः वृष इवाचरन् सोमम् अवृणीत वृतवान्। त्रिकद्रुकेषु ज्योतिः गौः आयुः इत्येतन्नामकाः त्रयो यागाः त्रिकद्रुकाः उच्यन्ते। तेषु सुतस्य अभिषुतस्य सोमस्यांशम् अपिबत् पीतवान्। मघवा धनवान् इन्द्रः सायकं बन्धकं वज्रम् आ हतवान्॥

**सरलार्थः-** बलवान् वृष इव आचरन् इन्द्रः स्वाहाराय स्वप्रियं पानीयं सोमं गृहीतवान्। किञ्च ज्योत्यादिषु त्रिषु यज्ञेषु स्नानीयं सोमम् अपिबत्। धनवान् इन्द्रः वज्रं स्वीचकार। तेन च वज्रेण मेघेषु प्रथमजं मेघं जघान।

**व्याकरणम् -**

- वृषायमाणः - वृष इव आचरन् इत्यर्थे क्यङि दीर्घे शानचि मुगाग१४४मे वृषायमाणः इति रूपम्।
- सायकम् - षिञ्-धातोः ण्वुलि अकादेशे वृद्धौ ऐकारे तस्य आयादेशे नस्य णत्वे सायकमिति रूपम्।
- मघवा - मघः अस्य अस्तीति वतुपि मघवत् इत्यस्य प्रथमैकवचने मघवा इति रूपम्।

**यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः।**
**आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से॥४॥**

**पदपाठः - यत्। इन्द्र। अहन्। प्रथमऽजाम्। अहीनाम्। आत्। मायिनाम्। अमिनाः। प्र। उत। मायाः॥आत्। सूर्यम्। जनयन्। द्याम्। उषसम्। तादीत्ना। शत्रुम्। न। किल। विवित्से॥४॥**

**अन्वयः** - उत इन्द्र! यत् अहीनां प्रथमजाम् अहन्, आत् मायिनां मायाः प्र अमिनाः, आत् सूर्यम् उषसं द्यां जनयन् तादीत्ना किल शत्रुं न विवित्से॥४॥

**व्याख्या-** उत अपि च हे इन्द्र यत् यदा अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवानसि आत् तदनन्तरं मायिनां मायोपेतानामसुराणां सम्बन्धिनीः मायाः प्र अमिनाः प्रकर्षेण



नाशितवानसि। अनन्तरं सूर्यम् उषसम् उषःकालं द्याम् आकाशं च जनयन् उत्पादयन् आवरकमेघनिवारणेन प्रकाशयन् वर्तसे। तादीत्ना तदानीम् आवश्यकान्धकाराभावात् शत्रुं घातकं वैरिणं न विवित्से किल त्वं न लब्धवान् खलु॥

**सरलार्थः-** अस्मिन् मन्त्रे इन्द्रं प्रति उच्यते यत् हे इन्द्र त्वं अहीनां प्रथमोत्पन्नं हतवान् तदनन्तरं मायाविनः राक्षसान् हतवान्। तदनन्तरं सूर्यं, उषःकालम्, आकाशं च सृष्टवान्। एवं चेत् निश्चयेन कश्चिदपि शत्रुः न विद्यते।

**व्याकरणम् -**

- मायिनाम् - मायाशब्दात् तदस्यास्तीत्यर्थे इनिप्रत्यये मायिन् इति जाते तस्य षष्ठीबहुवचने मायिनाम्।
- अहन् - हन्-धातोः लङि मध्यमपुरुषैकवचने अहन् इति रूपम्।
- अमिनाः - मी-धातोः लङि मध्यमपुरुषैकवचने अमिनाः इति रूपम्।
- जनयन् - जन्-धातोः शतृप्रत्यते प्रथमैकवचने जनयन् इति रूपम्।
- विवित्से - विद्-धातोः आत्मनेपदिनः लिटि मध्यमपुरुषैकवचने विवित्से इति रूपम्।

**अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।**
**स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः॥५॥**

**पदपाठः- अहन्। वृत्रम्। वृत्रऽतरम्। विऽअंसम्। इन्द्रः। वज्रेण। महता। वधेन॥**
**स्कन्धांसिऽइव। कुलिशेन। विऽवृक्णा। अहिः। शयते। उपऽपृक्। पृथिव्याः॥५॥**

**अन्वयः-** इन्द्रः महता वधेन वज्रेण वृत्रम् अहन् वृत्रतरं व्यंसम् (अहन्)। कुलिशेन स्कन्धांसि विवृक्णा इव अहिः पृथिव्याः उपपृक् शयते॥५॥

**व्याख्या-** अयम् इन्द्रः वज्रेण सम्पादितो यो महान् वज्रः तेन वज्रेण वृत्रतरम् अतिशयेन लोकानाम् आवरकम् अन्धकाररूपम्। यद्वा। वृत्रैः आवरणैः सर्वान् शत्रून् तरति तं वृत्रम् एतन्नामकमसुरं व्यंसं विगतासं छिन्नबाहुः यथा भवति तथा अहन् हतवान्। अंसच्छेदे दृष्टान्तः। कुलिशेन कुठारेण विवृक्णा विशेषतश्छिन्नानि स्कन्धांसीव। यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत्। तथा सति अहिः वृत्रः पृथिव्याः उपरि उपपृक् सामीप्येन संपृक्तः शयते शयनं करोति छिन्नकाष्ठवत् भूमौ पततीत्यर्थः॥

**सरलार्थः-** इन्द्रः महता वज्रेण वृत्रं हतवान्। तदनन्तरं वृत्रादपि महान्तं व्यंसनामधेयं राक्षसं जघान। यथा कुठारेण छिन्नाः वृक्षाणां शाखाः भूमौ पतन्ति तथैव राक्षसाः पृथिव्याः समीपे अथवा अङ्के शयिताः सन्ति।

**व्याकरणम्-**



- वृत्रतरम् - अतिशयने वृत्रम् इति अर्थे तरपि वृत्रतरम् इति रूपम्। अथवा वृत्रैः तरति इति वृत्रतरम्।
- व्यंसम् - विगतौ अंसौ यस्य तम् इति बहुव्रीहिसमासः।
- वधेन - वधः येन स वधः, तेन इति तृतीया तत्पुरुषसमासः।
- विवृक्णा - विपूर्वकात् व्रश्चधातो क्तप्रत्यये विवृक्ण इति रुपम्। तस्य प्रथमाबहुवचने वैदिकरूपम् विवृक्णा इति।



## पाठगतप्रश्नाः

१. इन्द्रसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।
२. इन्द्रस्य प्रथमं वीर्यं किम् आसीत्।
३. इन्द्रस्य तृतीयं वीर्यं किम् आसीत्।
४. वाश्राः इत्यस्य कः अर्थः।
५. शिश्रियाणम् इत्यस्य कः अर्थः।
६. वृषायमाणः इत्यस्य कः अर्थः।
७. प्र अमिनाः इत्यस्य कः अर्थः।
८. विवृक्णा इति रूपं साधयत।
९. महता वधेन इति मन्त्रांशे वधशब्दस्य कः अर्थः।
१०. विवृक्णा इत्यस्य कः अर्थः।

## १६.१.२) इदानीं मूलपाठम् अवगच्छाम

**अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम्।**
**नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः॥६॥**

**पदपाठः - अयोद्धाऽइव। दुःऽमदः। आ। हि। जुह्वे। महाऽवीरम्। तुविऽबाधम्। ऋजीषम्॥न। अतारीत्। अस्य। सम्ऽऋतिम्। वधानाम्। सम्। रुजानाः। पिपिषे। इन्द्रऽशत्रुः॥६॥**



**अन्वयः -** दुर्मदः महावीरं तुविबाधम् ऋजीषम् अयोद्धा इव हि आ जुह्वे। अस्य बधानां समृतिं न अतारीत्। इन्द्रशत्रुः रुजानाः सं पिपिषे।

**व्याख्या-** दुर्मदः दुष्टमदोपेतो दर्पयुक्तो वृत्रः अयोद्धेव योद्धृरहित इव इन्द्रम् आ जुह्वे हि आहूतवान् खलु। कीदृशमिन्द्रम्। महावीरं गुणैः महान् भूत्वा शौर्योपेतं तुविबाधं बहूनां बाधकम् ऋजीषं शत्रूणामपार्जकम्। अस्य ईदृशस्य इन्द्रस्य संबन्धिनः ये शत्रुवधाः सन्ति तेषां वधानां समृतिं संगमं नातारीत् पूर्वोक्तो दुर्मदः तरीतुं नाशक्नोत्। इन्द्रशत्रुः इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतो नदीषु पतितः सन् रुजानाः नदीः सं पिपिषे सम्यक् पिष्टवान्। सर्वान् लोकनावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यं पाषाणादिकं च चूर्णीभूतमित्यर्थः॥

**सरलार्थः-** दर्पयुक्तः वृत्रः महद्गुणसम्पन्नं वीरं बहुशत्रुघातकं असमर्थम् इव युद्धे आहूतवान्। परन्तु वृत्रः तं शस्त्रेण हन्तुमसमर्थः इन्द्रस्यैव वज्रेण हतः। स च नदीः सम्यक् पिष्टवान्।

**व्याकरणम् -**

- अयोद्धा - न योद्धा इति अयोद्धा इति नञ्तत्पुरुषसमासः। अथवा न विद्यते योद्धा अस्य सः अयोद्धा इति बहुव्रीहिसमासः।
- दुर्मदः - दुष्टः मदः यस्य सः इति बहुव्रीहिसमासः।
- तुविबाधम् - तुवीन् बाधते इत्यर्थे अच्प्रत्यये तुविबाध इति रूपम्। तस्य द्वितीयैकवचने तुविबाधम् इति।
- समृतिम् - सम्पूर्वकात् ऋ-धातोः क्तिन्प्रत्यये रूपम्।
- रुजानाः - रुज्-धातोः शानच्प्रत्यये रुजान इति। रुजानि कूलानि इति रुजानाः नद्यः।
- पिपिषे - आत्मनेपदिनः पिष्-धातोः लिटि प्रथमपुरुषैकवचने रूपम्।
- अतारीत् - तृ-धातोः लुङि प्रथमपुरुषैकवचने रूपम्।
- इन्द्रशत्रुः - इन्द्रः शत्रुः यस्य सः इति बहुव्रीहिसमासः।

**अ॒पाद॑ह॒स्तो अ॑पृतन्य॒दिन्द्र॒मास्य॒ वज्र॒मधि॒ सानौ॑ जघान।**
**वृष्णो॒ वध्रिः᳚ प्रति॒मानं॒ बुभू॑षन्पुरु॒त्रा वृ॒त्रो अ॑शय॒द्व्य॑स्तः॥७॥**

**पदपाठः - अ॒पात्। अ॒ह॒स्तः। अ॒पृ॒त॒न्य॒त्। इन्द्र॑म्। आ। अ॒स्य॒। वज्र॑म्। अधि॑। सानौ॑। ज॒घा॒न॥ वृष्णः᳚। वध्रिः᳚। प्र॒ति॒ऽमान॑म्। बुभू॑षन्। पु॒रु॒ऽत्रा। वृ॒त्रः। अ॒श॒य॒त्। विऽअ॑स्तः॥७॥**

**अन्वयः -** अपात् अहस्तः इन्द्रम् अपृतन्यत्। अस्य सानौ अधि वज्रम् आ जघान। वृष्णः प्रतिमानं बुभूषन् वध्रिः वृत्रः पुरुत्रा व्यस्तः अशयत्॥७॥



**व्याख्या-** अपात् वज्रेण च्छिन्नत्वात् पादरहितः अहस्तः हस्तरहितः वृत्रः इन्द्रम् उद्दिश्य अपृतन्यत् पृतनां युद्धम् ऐच्छत्। द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः। अस्य हस्तपादहीनस्य वृत्रस्य सानौ पर्वतसानुसदृशे प्रौढस्कन्धे अधि उपरि वज्रम् आ जघान इन्द्रः आभिमुख्येन प्रक्षिप्तवान्। अशक्तस्यापि युद्धेच्छायां दृष्टान्तः। वध्रिः छिन्नमुष्कः पुरुषः वृष्णः रेतःसेचनसमर्थस्य पुरुषान्तरस्य प्रतिमानं सादृश्यं बुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः। सः वृत्रः पुरुत्रा बहुष्ववयवेषु व्यस्तः विविधं क्षिप्तः ताडितः सन् अशयत् भूमौ पतितवान्॥

**सरलार्थः -** पादरहितः हस्तरहितश्च वृत्रः इन्द्रं प्रति युद्धाय ऐच्छत्। तदा इन्द्रः पर्वतशिखरतुल्यस्कन्धे वज्रेण प्रहारं कृतवान्। पुनः वृष इव गमने इच्छासत्त्वेऽपि छिन्नमुष्कः पुरुष इव छिन्नाङ्गः वृत्रः भूमौ अपतत्।

**व्याकरणम् -**

- अपात् - न पादौ यस्य सः (बहुव्रीहिः)।
- अहस्तः - न हस्तौ यस्य सः (बहुव्रीहिः)।
- अपृतन्यत् - पृतनाशब्दात् क्यच्प्रत्यये पृतन्य इति जाते लङि प्रथमपुरुषैकवचने रूपम्।
- प्रतिमानम् - प्रतिपूर्वकात् मा-धातोः ल्युट्प्रत्यये प्रतिमानम् इति रूपम्।
- बुभूषन् - भवितुम् इच्छति इत्यर्थे सनि प्रथमैकवचने रूपम्।
- पुरुत्रा - पुरु इत्यस्मात् सप्तम्यर्थे त्राप्रत्यये पुरुत्रा इति रूपम्।

**नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः।**
**याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव॥८॥**

**पदपाठः - नदम्। न। भिन्नम्। अमुया। शयानम्। मनः। रुहाणाः। अति। यन्ति। आपः॥ याः। चित्। वृत्रः। महिना। परिऽअतिष्ठत्। तासाम्। अहिः। पत्सुतःऽशीः। बभूव॥८॥**

**अन्वयः -** मनः रुहाणाः आपः भिन्नं नदं न अमुया शयानम् अति यन्ति। वृत्रः महिना याश्चित् पर्यतिष्ठत्, अहिः तासां पत्सुतःशीः बभूव।

**व्याख्या-** अमुया अमुष्यां पृथिव्यां शयानं पतितं मृतं वृत्रम् आपः जलानि यन्ति अतिक्रम्य गच्छन्ति। तत्र दृष्टान्तः। भिन्नं बहुधा भिन्नकूलं नदं न सिन्धुमिव। यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्त्वा अतिक्रम्य गच्छन्ति तद्वत्। कीदृशस्य आपः। मनो रुहाणाः नृणां चित्तमारोहन्त्यः। पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपो भूमौ वृष्टा न भवन्ति तदानीं नृणां मनः खिद्यते। मृते तु वृत्रे विरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति। तदा वृष्टिलाभेन मनुष्यास्तुष्यन्तीत्यर्थः। तदेतदुत्तरार्धेन स्पष्टीक्रियते। वृत्रः जीवनदशायां महिना स्वकीयेन महिम्ना याश्चित् या एव मेघगताः अपः पर्यतिष्ठत्



परिवृत्य स्थितवान्, अहिः वृत्रो मेघः तासाम् अपां पत्सुतःशीः पादस्याघःशयानः बभूव। यद्यप्यपां पादो नास्ति तथाप्यद्भिर्वृत्रस्य अभिलङ्घितत्वात् पादस्याधः शयनमुपपद्यते॥

**सरलार्थः** - मनुष्याणां मनोहारि वारि यथा वृष्टिसमये कदाचित् नदीम् अतिक्रम्य गच्छति तथैव पृथिव्यां आपः पतितः वृत्रस्य शरीरम् अतिक्राम्यन्ति। वृत्रेण स्वमहिम्ना ये आपः निरुद्धाः अधुना तस्यैव शरीरम् उल्लङ्घ्य गच्छन्ति ताः आपः इत्यर्थः।

**व्याकरणम् -**

- भिन्नम् - भिद्-धातोः क्तप्रत्यये तस्य नादेशे भिन्नम् इति रूपम्।
- अमुया - अमुष्याम् इत्यस्मिन्नर्थे याच्प्रत्यये अमुया इति रूपम्।
- रुहाणाः - रुह्-धातोः शानच्प्रत्यये रूपम्।
- महिना - मह्-धातोः इन्प्रत्यये महिन् इति जाते तृतीयैकवचने वैदिकरूपम्।
- पत्सुतःशीः - पादेषु इत्यस्मिन्नर्थे पादशब्दस्य पदादेशे पत्सु इति जाते सप्तम्यर्थे तसिल्प्रत्यये विभक्तिलोपाभावे पत्सुतः इति रूपम्। पत्सुतः शेते इत्यर्थे क्विपि पत्सुतःशीः इति रूपम्।
- बभूव - भूधातोः लिटि प्रथमपुरुषैकवचने रूपम्।
- पर्यतिष्ठत् - पर्युपसर्गपूर्वकात् स्था-धातोः लङि प्रथमपुरुषैकवचने रूपम्।

**नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार।**
**उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः॥९॥**

**पदपाठः- नीचाऽवयाः। अभवत्। वृत्रऽपुत्रा। इन्द्रः। अस्याः। अव। वधः। जभार॥**
**उत्ऽतरा। सूः। अधरः। पुत्रः। आसीत्। दानुः। शये। सहऽवत्सा। न। धेनुः॥९॥**

**अन्वयः**- वृत्रपुत्रा नीचावया अभवत्। इन्द्रः अस्या अव बधः जभार। सूः उत्तरा पुत्र अधर आसीत्। दानुः सहवत्सा धेनुः न शये॥९॥

**व्याख्या**- वृत्रपुत्रा वृत्रः पुत्रो यस्याः मातुः सेयं माता वृत्रपुत्रा नीचावयाः न्यग्भावं प्राप्ता हता अभवत् पुत्रं प्रहाराद्रभितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः। तदानीम् अयम् इन्द्रः अस्याः मातुः अव अधोभागे वृत्रस्योपरि वधः हननसाधनमायुधं जभार प्रहृतवान्। तदानीं सूः माता उत्तरा उपरिस्थिता आसीत्। पुत्रः तु अधोभागस्थितः आसीत्। सा च दानुः दानवी वृत्रमाता शये मृता शयनं कृतवती। तत्र दृष्टान्तः। धेनुः लोकप्रसिद्धा गौः सहवत्सा न यथा वत्ससहिता शयनं करोति तद्वत्॥

**सरलार्थः**- अपमानिता वृत्रमाता स्वपुत्रं रक्षितुं स्वहस्तं प्रसारितवती। तदा इन्द्रः स्वायुधेन प्रहृतवान्। तदैव वृत्रजननी मृता। अत्र दृष्टान्तः दीयते यथा वत्सेन सह गौः शेते तथैव मृतः वृत्रोऽपि स्वजनन्या शयानः आसीत्।



**व्याकरणम्-**

- नीचावयाः - वेति खादति इत्यर्थे वे-धातोः असिप्रत्यये वयस् इति जाते ततः नीचौ वयसौ यस्याः सा नीचवयाः इति बहुव्रीहिसमासः, छान्दसो दीर्घः।
- वृत्रपुत्रा - वृत्रः पुत्रः यस्याः सा इति बहुव्रीहिसमासः।
- वधः - हन्यते अनेन इति वधः। हनः वधादेशः।
- सूः - षूङ् प्राणिगर्भविमोचने इति धातोः क्विपि सूः इति रूपम्।
- दानुः - दो अवखण्डने इति धातोः नुप्रत्यये दानुः इति रूपम्।
- जभार - भृधातो लिटि प्रथमपुरुषैकवचने रूपम्।

**अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।**
**वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः॥१०॥**

**पदपाठः - अतिष्ठन्तीनाम्। अनिऽवेशनानाम्। काष्ठानाम्। मध्ये। निऽहितम्। शरीरम् ॥ वृत्रस्य। निण्यम्। वि। चरन्ति। आपः। दीर्घम्। तमः। आ। अशयत्। इन्द्रऽशत्रुः॥१०॥**

**अन्वयः** - अतिष्ठन्तीनाम् अनिवेशनानां काष्ठानां मध्ये निहितं वृत्रस्य निण्यं शरीरम् आपःविचरन्ति। इन्द्रऽशत्रुः दीर्घं तम आ अशयत्।

**व्याख्या-** वृत्रस्य शरीरम् आपः विचरन्ति विशेषणोपरि आक्रम्य प्रवहन्ति। कीदृशं शरीरम्। निण्यं निर्नामधेयम्। अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते। एतदेव स्पष्टीक्रियते। काष्ठानाम् अपां मध्ये निक्षिप्तम्। कीदृशानां काष्ठानाम्। अतिष्ठन्तीनां स्थितिरहितानाम् अनिवेशनानाम् उपवेशनरहितानां प्रवहणस्वभावत्वात् एतानां मनुष्यवन्न क्वापि स्थितिः सम्भवति। इन्द्रशत्रुः वृत्रः जलमध्ये शरीरे प्रक्षिप्ते सति दीर्घं तमः दीर्घं निद्रात्मकं मरणं यथा भवति तथा आशयत् सर्वतः पतितवान्॥

**सरलार्थः** - अतिष्ठतः उपवेशनरहितस्य जलमध्ये पततः नामरहितस्य वृत्रस्य शरीरं जलम् अतिक्रामति। इन्द्रेण हतः वृत्रः अनन्ततमसि अपतत्।

**व्याकरणम् -**

- अतिष्ठन्तीनाम् - स्थाधातोः शतृप्रत्यये ङीपि तिष्ठन्ती इति रूपम्। ततः न तिष्ठन्तीति नञ्तत्पुरुषसमासे षष्ठीबहुवचने अतिष्ठन्तीनामिति रूपम्।
- अनिवेशनानाम् - निपूर्वकात् विश्-धातोः ल्युटि अनादेशे निवेशनमिति जाते ततः न निवेशनमिति नञ्तत्पुरुषसमासे षष्ठीबहुवचने अनिवेशनानाम् इति रूपम्।
- निहितम् - निपूर्वकात् धा-धातोः क्तप्रत्यये निहितम् इति रूपम्।



- काष्ठानाम् - क्रान्त्वा स्थिता इत्यर्थे क्रमपूर्वकस्था-धातोः क्विपि काष्ठा इति जाते षष्ठीबहुवचने काष्ठानामिति रूपम्।



## पाठगतप्रश्नाः

११. इन्द्रशत्रुः इत्यस्य कः विग्रहः।
१२. रुजानाः इत्यस्य कः अर्थः।
१३. वध्रिः इत्यस्य कः अर्थः।
१४. कीदृशः वृत्रः इन्द्रम् अपृतन्यत्।
१५. पत्सुतःशी इति रूपं साधयत।
१६. नीचावयाः इत्यस्य कः अर्थः।
१७. दानुः इत्यस्य कः अर्थः।
१८. सूः इत्यत्र कः धातुः।
१९. निवेशनम् इत्यत्र कस्मिन् अर्थे ल्युट्।
२०. महिना इत्यस्य लौकिकं रूपं किम्।

### १६.१.३) इदानीम् इन्द्रसूक्तस्य मूलपाठम् अवगच्छाम

**दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।**
**अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥११॥**

**पदपाठः - दासऽपत्नीः। अहिऽगोपाः। अतिष्ठन्। निऽरुद्धाः। आपः। पणिनाऽइव। गावः॥ अपाम्। बिलम्। अपिऽहितम्। यत्। आसीत्। वृत्रम्। जघन्वान्। अप। तत्। ववार॥११॥**

**अन्वयः** -दासपत्नीः अहिगोपा आपः पणिना गावः इव निरुद्धाः अतिष्ठन्, वृत्रं जघन्वान्। अपां यत् बिलम् अपिहितम् आसीत्, तत् अपववार॥११॥

**व्याख्या-** दासपत्नीः दासः विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासाम् अपां ताः दासपत्नीः। अत एव अहिगोपाः। अहिर्वृत्रो गोपा रक्षको यासां ताः। गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा नरोधनम्। एतदेव स्पष्टीक्रियते यद् आपः निरुद्धाः अतिष्ठन् इति। तत्र दृष्टान्तः। पणिनेव गावः।

पणिनामकोऽसुरो गाः अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवान् तथा इत्यर्थः। अपां यत् बिलं प्रवहणद्वारम् अपिहितं वृत्रेण निरुद्धम् आसीत्। तत् बिलं प्रवहणद्वारं वृत्रं जघन्वान्, हतवान् इन्द्रः अपववार अपवृत्रमकरोत् वृत्रकृतम् अपां निरोधं परिहृतवान्।

**सरलार्थः-** स्वामित्वे स्थित्वा मेघैः रक्षिताः आपः वृत्रेण निरुद्धाः यथा पणिनामकराक्षसः गाः अगोपायत्। इन्द्रः वृत्रं हत्वा जलप्रवाहस्य पिहितद्वारम् उद्घाटितवान्।

**व्याकरणम् -**

- दासपत्नीः - दासः पतिः यासां ताः दासपत्नीः इति बहुव्रीहिसमासः। दासयति इत्यर्थे घञि निष्पन्नः दासशब्दः।
- अहिगोपाः - अहिः गोपाः यासां ताः अहिगोपाः इति बहुव्रीहिसमासः।
- निरुद्धाः - निपूर्वकात् रुध्-धातोः क्तप्रत्यये प्रथमाबहुवचने निरुद्धाः इति।
- अपिहितम् - अपिपूर्वकात् धाधातोः क्तप्रत्यये अपिहितिम् इति।
- जघन्वान् - हन्-धातोः लिट्यर्थे क्वसुन्प्रत्यये प्रथमपुरुषैकवचने जघन्वान् इति रूपम्।
- आसीत् - अस्-धातोः लङि प्रथमपुरुषैकवचने आसीत् इति रूपम्।
- अतिष्ठन् - स्थाधातोः लङि प्रथमपुरुषबहुवचने अतिष्ठन् इति रूपम्।
- अपववार - अपपूर्वकात् वृ-धातोः लिटि प्रथमपुरुषैकवचने रूपम्।

**अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः।**
**अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून्॥१२॥**

**पदपाठः - अश्व्यः। वारः। अभवः। तत्। इन्द्र। सृके। यत्। त्वा। प्रतिऽअहन्। देवः। एकः॥अजयः। गाः। अजयः। शूर। सोमम्। अव। असृजः। सर्तवे। सप्त। सिन्धून्॥१२॥**

**अन्वयः -** देवः एकः यत् त्वा सृके प्रत्यहन् तत् इन्द्र, अश्व्यः वारः अभवः। शूर, गाः अजयः सोमम् अजयः। सर्तवे सप्त सिन्धून् अवासृजः।

**व्याख्या-** देवः दीप्यमानः सर्वायुधकुशलः एकः अद्वितीयः वृत्रः यत् यदा त्वा त्वां प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् तत् तदानीं त्वम् अश्व्यो वारः अश्वसंबन्धी वालः अभवः। अथाश्वस्य वालोऽनायासेन मोक्षाकादीन्निवारयति तद्वत् वृत्रमगणयित्वा निराकृतवानित्यर्थः। किं च, गाः पणिनामाहृताः त्वं जितवान्। हे शूर शौर्ययुक्त इन्द्र सोमम् अजयः जितवान्। तथा च तैत्तिरीयाः 'त्वष्टा हतपुत्रः' इत्येतस्मिन्नुपाख्याने समामनन्ति - 'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' (तैः - २.४.१२.१) इति। सप्त सिन्धून् 'इमं मे गङ्गे' (ऋ - सं - १०.७५.१) इत्यस्यामृच्याम्नाता गङ्गाद्याः सप्तसङ्ख्याका नदीः सर्तवे सर्तुं प्रवाहरूपेण गन्तुम् अवासृजः त्यक्तवान्। वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थः।



**सरलार्थः-** अस्मिन् मन्त्रे इन्द्रं प्रति उच्यते यत् हे इन्द्र यदा अद्वितीयः दीप्यमानः वृत्रः प्रहारं कृतवान् तदा त्वं तु अश्वपुच्छकेशतुल्यः अभवः। हे शौर्यसम्पन्न इन्द्र! त्वं गाः अजयः, सोमं जीतवान्, सप्त नदीः मुञ्चसि स्म।

**व्याकरणम् -**

- अश्व्यः - अश्वे भवः इत्यर्थे भवेच्छन्दसि इति सूत्रेण यति प्रथमैकवचने अश्व्यः इति रूपम्।
- वारः - वारयति इत्यर्थे वृ-धातोः णिचि अचि प्रथमैकवचने वारः इति रूपम्।
- सर्तवे - सृ-धातोः तुमर्थके तवेन्प्रत्यये सर्तवे इति रूपम्।
- अभवः - भूधातोः लङि मध्यमपुरुषैकवचने अभवः इति रूपम्।
- प्रत्यह्न - प्रतिपूर्वकात् ह्न-धातोः लङि प्रथमपुरुषैकवचने रूपम्।
- असृजः - सृज्-धातोः लङि मध्यमपुरुषैकवचने रूपम्।
- अजयः - जी-धातोः लङि मध्यमपुरुषैकवचने रूपम्।

**नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च।**
**इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये॥१३॥**

**पदपाठः - न। अस्मै। विऽद्युत्। न। तन्यतुः। सिषेध। न। याम्। मिहम्। अकिरत्। ह्रादुनिम्। च॥ इन्द्रः। च। यत्। युयुधाते इति। अहिः। च। उत। अपरीभ्यः। मघवा। वि। जिग्ये॥१३॥**

**अन्वयः -** यत् इन्द्रः अहिः च युयुधाते अस्मै विद्युत् न सिषेध, न तन्यतुः, यां मिहं ह्रादुनिं च न अकिरत्। उत मघवा अपरीभ्यः विजिग्ये।

**व्याख्या-** इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेप्येनं निषेद्धुमशक्ताः। सोऽयमर्थोऽनेन मन्त्रेणोच्यते। अस्मै इन्द्रार्थं निर्मिता विद्युत् न सिषेध इन्द्रं न प्राप्नोत्। तथा तन्यतुः गर्जनं यां मिहं यां वृष्टिम् अकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टिः न सिषेध। ह्रादुनि च अशनिमपि यां वृत्रः प्रयुक्तवान् सापि न सिषेध। इन्द्रश्च अहिश्च इन्द्रवृत्रावुभावपि यत् यदा युयुधाते युद्धं कृतवन्तौ। तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः। उत अपि च मघवा धनवानिन्द्रः अपरीभ्यः अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् वि जिग्ये विशेषेण जितवान्॥

**सरलार्थः-** इन्द्रं हन्तुं याः शक्तयः वृत्रेण प्रयुक्ताः ताः सर्वाः अपि विफलाः अभवन्। तदेव अस्मिन् मन्त्रे उच्यते। यदा इन्द्रवृत्रयोः मध्ये युद्धं चलत् आसीत् तदा वृत्रेण मायया या विद्युत् प्रयुक्ता सा इन्द्रं प्रति न गता, गर्जनं न गतं, वृत्रेण प्रेरिता वृष्टिः प्रेरतं च वज्रम् अपि इन्द्रं न सिषिधतुः। परन्तु ऐश्वर्यवान् इन्द्रः भिन्नमायया वृत्रम् अजयत्।



**व्याकरणम् -**

- विद्युत् - विशेषेण द्योत्यते इत्यर्थे विपूर्वकात् द्युद्-धातोः क्विपि विद्युत् इति रूपम्।
- सिषेध - षिध्-धातोः लिटि प्रथमपुरुषैकवचने सिषेध इति रूपम्।
- मिहम् - मिह्-धातोः क्विपि द्वितीयैकवचने मिहम् इति रूपम्।
- अकिरत् - कृ-धातोः लङि प्रथमपुरुषैकवचने अकिरत् इति रूपम्।
- युयुधाते - युध्-धातोः आत्मनेपदिनः क्विपि लिटि प्रथमपुरुषैकवचने रूपम्।
- विजिग्ये - विपूर्वकात् जि-धातोः आत्मनेपदिनः लिटि प्रथमपुरुषैकवचने रूपम्।

**अहे॑र्या॒तारं॑ कम॑पश्य इन्द्र हृ॒दि यत्ते॑ ज॒घ्नुषो॒ भीरग॑च्छत्।**
**नव॑ च॒ यन्न॑व॒तिं च॒ स्रव॑न्तीः श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि॥१४॥**

**पदपाठः - अहेः॑। या॒तार॑म्। कम्। अ॒प॒श्यः॒। इ॒न्द्र॒। हृ॒दि। यत्। ते॒। ज॒घ्नुषः॑। भीः। अग॑च्छत्॥ नव॑। च॒। यत्। न॒व॒तिम्। च। स्रव॑न्तीः। श्ये॒नः। न। भी॒तः। अत॑रः। रजां॑सि॥१४॥**

**अन्वयः -** इन्द्र! अहेः कम् यातारम् अपश्यः, यत् जघ्नुषः ते हृदि भीः अगच्छत्, यत् श्येनः न नव च नवतिं च स्रवन्तीः रजांसि अतरः॥१४॥

**व्याख्या-** हे इन्द्र जघ्नुषः वृत्रं हतवतः तव हृदि चित्ते यत् यदि भीरगच्छत् न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्हि अहेः वृत्रस्य यातारं हन्तारं कमपश्यः त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि। तादृशस्य पुरुषान्तरस्याभावात् मा भुत् तव भयमित्यर्थः। यत् यस्मात् कारणात् त्वं नव च नवतिं च स्रवन्तीः एकोनशतसङ्ख्यकाः प्रवहन्तीर्नदीः प्राप्य रजांसि तत्रत्यान्युदकानि अतरः तीर्णवानसि। तत्र दृष्टान्तः। श्येनो न। श्येननामको बलवान् पक्षीव दूरगमनात्तव भयमासीदिति गम्यते। तद्भयं मा भूदित्यभिप्रायः। तच्च दूरगमनं ब्राह्मणे समाम्नातम् - 'इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत्'(ऐतरेयब्राह्मणे - ३.१५) इति। तैत्तिरीयाश्चामनन्ति - 'इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमानः'(तै - सं - २.५.३.६) इति॥

**सरलार्थः-** अत्र इन्द्रं प्रति उच्यते यत् हे इन्द्र वृत्रस्य कश्चित् सहायकः त्वां दृष्टवान् यत् तव हृदयं वृत्रहनस्य भयं प्रविष्टम्। भयं प्राप्य त्वं नवनवतीनां नदीनां पारं जगाम श्येनविहगस्य भयम् इव।

**व्याकरणम् -**

- यातारम् - याधातोः तृचि द्वितीयैकवचने रूपम्।
- अपश्यः - दृश्-धातोः लङि मध्यमपुरुषैकवचने अपश्यः इति रूपम्।
- जघ्नुषः - हन्-धातोः क्वसुप्रत्यये जघन्वस् इति जाते ततः षष्ठ्येकवचने जघ्नुषः इति रूपम्।
- अगच्छत् - गम्-धातोः लङि प्रथमपुरुषैकवचने रूपम्।



- स्रवन्तीः - स्रु-धातोः शतृप्रत्यये ङीपि द्वितीयाबहुवचने स्रवन्तीः इति रूपम्।
- भीतः - भीधातोः क्तप्रत्यये प्रथमैकवचने भीतः इति रूपम्।
- अतरः - तृ-धातोः लङि मध्यमपुरुषैकवचने रूपम्।

**इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः।**
**सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव॥१५॥**

**पदपाठः - इन्द्रः। यातः। अवऽसितस्य। राजा। शमस्य। च। शृङ्गिणः। वज्रबाहुः॥**
**सः। इत्। ऊँ इति। राजा। क्षयति। चर्षणीनाम्। अरान्। न। नेमिः। परि। ता।**
**बभूव॥१५॥**

**अन्वयः** - वज्रबाहुः इन्द्रः यातः अवसितस्य शमस्य शृङ्गिणः च राजा। स इत् उ चर्षणीनां राजा क्षयति। नेमिः अरान् न ता परिबभूव॥१५॥

**व्याख्या-** वज्रबाहुः इन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा यातः गच्छतो जङ्गमस्य अवसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजा अभूत्। सेदु स एवेन्द्रः चर्षणीनां मनुष्याणां राजा भूत्वा क्षयति निवसति। ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान्। तत्र दृष्टान्तः। अरान् न नेमिः। यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत्॥

**सरलार्थः-** अस्मिन् मन्त्रे इन्द्रस्य स्तुतिः क्रियते यत् वज्रधारी इन्द्रः स्थावराणां जङ्गमानां शान्तप्राणिनां शृङ्गिनां च राजा अस्ति। स एव मनुष्यानां सम्राट् भूत्वा निवसन् तेषां रक्षामपि करोति। ननु कथं रक्षति। उच्यते यथा अराः रथचक्रं रक्षन्ति तथैव राजा अपि मनुष्यान् रक्षति।

**व्याकरणम् -**

- यातः - या-धातोः क्विपि तुगागमे यातृ इति रूपम्। तस्य षष्ठ्येकवचने यातः इति रूपम्।
- अवसितस्य - अवपूर्वकात् साधातोः क्तप्रत्यये अवसित इति रूपम्। तस्य षष्ठ्येकवचने अवसितस्य इति रूपम्।
- शृङ्गिणः - शृङ्गशब्दात् इनिप्रत्यये शृङ्गिन् इति जाते षष्ठ्येकवचने शृङ्गिणः इति रूपम्।
- क्षयति - क्षि-धातोः लटि प्रथमपुरुषैकवचने क्षयति इति रूपम्।
- परिबभूव - परिपूर्वकात् भूधातोः लिटि प्रथमपुरुषैकवचने परिबभूव इति रूपम्।



## पाठगतप्रश्नाः

२१. पणिनामकः असुरः गाः गोपायित्वा किं कृतवान्।
२२. अकिरत् इत्यत्र केन सूत्रेण इत्वम्।
२३. जिग्ये इत्यत्र केन सूत्रेण अभ्यासादुत्तरस्य अकारस्य कुत्वम्।
२४. जघ्नुषः इति रूपं कथं सिद्ध्येत्।
२५. सर्तवे इत्यत्र कथम् आद्युदात्तत्वम्।
२६. यातारम् इत्यत्र कः धातुः।
२७. यातारम् इत्यस्य कः अर्थः।
२८. अश्व्यः केन सूत्रेण यत्प्रत्ययः।
२९. अतरः इति कस्य धातोः कस्मिन् लकारे रूपम्।
३०. श्येनविहगेन सह कस्य तुलना कृता।

## १६.२) इन्द्रस्वरूपम्।

वेदे अन्तरिक्षस्थानीयः सर्वश्रेष्ठः देवः भवति इन्द्रः। लौकिकमानववत् तस्यापि हस्तौ पादौ शिरः -इत्यादिकम् अत्र वर्णितम्। तस्य उदरः सोमरसेन परिपूर्णः सरोवर इव। इन्द्रस्य प्रियः पेयः भवति सोमः, अतः स सोमपा इत्युच्यते। जन्मदिवसाद् आरभ्य एव एनम् अस्य माता सोमरसं पाययति स्म। सोमरसे अयम् एवमासक्तः यद् एकदा स सोमार्थं चौर्यम् अपि कृतवान्। सोमपानानन्तरम् एष इन्द्रः महान्तमपि कार्यम् अनायासेनैव साधयति। वृत्तयुद्धसमये इन्द्रः सोमपूर्णं ह्रदत्रयमपि निश्शेषेण रिक्तं चकार।

इन्द्रस्य मुख्यम् अस्त्रं भवति वज्रः, यस्य निर्माता भवति त्वष्टा इति। वज्रस्य धारणादेव अयम् इन्द्रः वज्रिन् वज्रबाहुः वज्रहस्तः-इत्यादिनाम्ना अभिधीयते। इन्द्रस्य जन्म अस्वाभाविकरूपेण जातम् इति ऋग्वेदे वर्ण्यते। जन्मसमये स स्वमातारं हत्वा तस्याः बाहुमूलाद् बहिः आगन्तुम् ऐच्छत्। जन्मानन्तरमेव अनेन अपूर्वपराक्रमं प्रदर्शितम्। अस्य पराक्रमेण पृथिव्याकाशौ कम्पमानौ सञ्जातौ देवाश्च भयभीताः अभवन्। तथाहि-

**यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्।**

**यस्य सुष्माद् रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः।।**

**-(ऋग्वेद।।२.१२.१)**

ऋग्वेदस्य पुरुषसूक्ते यः विराट् पुरुषः वर्णितः तस्य मुखाद् इन्द्रः जातः इति पुरुषसूक्ताद् ज्ञायते।

**मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायुरजायत।।(ऋग्वेद।।१०.९०.१३)**



इन्द्रस्य भोजनं भवति वृषभाणां मांसम् इत्युच्यते। अग्निना पक्वं त्रिशतमहिषाणां मांसमपि अस्य भोजनत्वेन वर्ण्यते। इन्द्रस्य सम्बन्धः प्रत्यक्षरूपेण परोक्षरूपेण वा सर्वैः देवैः सह वर्तते। मरुत् इन्द्रस्य मित्रं भवति। मरुत् सर्वदा इन्द्रस्य युद्धे सहायतां विदधाति अतः इन्द्रः मरुत्सखा मरुत्वान् इत्यादिनाम्ना अपि उच्यते। सूक्तेषु अग्निना सह इन्द्रस्यापि स्तुतिः प्राप्यते। विष्णु-वरुण-वायु-वृहस्पति-इत्यादिभिः सहापि इन्द्रस्य स्तुतिः दृश्यते। इन्द्रस्य पत्नी भवति शची या शक्तेः प्रतीकम् इत्युच्यते। अग्निः इन्द्रस्य यमजभ्राता इत्युच्यते। पूषा अपि अस्य भ्राता इत्युच्यते। अस्य पिता भवति द्यौः। इन्द्रः हस्ते सर्वदा स्वर्णिमं रक्तिमं वा वस्त्रं धारयति। अस्य रथस्य तथा अश्वस्य निर्माता भवति ऋभुः। अयम् इन्द्रः अस्त्रत्वेन मध्ये मध्ये बाणमपि धारयति।

इन्द्रस्य माहात्म्यं सुविशालमस्ति। द्युलोक-अन्तरिक्षलोक-पृथ्वीलोकाः मिलित्वा अपि तावद् यशः न प्राप्तवन्तः यावदिन्द्रस्य विद्यते। इन्द्रः कम्पमानां पृथिवीं दृढां चकार, उड्डीयमानं पर्वतम् अपि स्थिरम् अकरोत्, आकाशं पृथिवीं च व्यतनोत्। वृत्रस्य हननमपि अनेन विहितम् अतः अयं वृत्रघ्नः वृत्रहा इत्यादिनाम्ना अपि व्यपदिश्यते। अनेन पणिगणं हत्वा गवां मोचनं विहितम्। अस्यैव आधीने सर्वे अश्वाः गावः रथाः सर्वाः दिशश्च सन्ति। अयमिन्द्रः सूर्यस्य उषसः च जनकः अपां वर्षकः च अस्ति।

**यस्याश्वासः प्रदिशि यस्य गावः, यस्य ग्रामा यस्य विश्वेरथासः।**

**य सूर्यं य उषसं जजान, यो अपां नेता स जनास इन्द्रः।।**

**-(ऋग्वेद।।२.१२.७)**

इन्द्रस्य सहायतां विना युद्धे जयः असम्भवः अतः युद्धे योद्धारः एनमेव आह्वयन्ति। इन्द्र एव द्वाभ्यां पाषाणखण्डाभ्याम् अग्निं समुत्पादितवान्।

एवम्भूतस्य इन्द्रस्य लाभेऽपि तस्य प्रकृतस्वरूपविषये मतभेदाः सन्ति। कोऽयम् इन्द्रः इति विषये यथा अस्मद्देशीयानां पण्डितानां तथा वैदेशिकानां पण्डितानाम् अपि महान् सन्देहो विद्यते इति शिवम्।

## १६.३) इन्द्रसूक्तस्य सारः।

इन्द्रः ऋग्वेदस्य सर्वाधिकः लोकप्रियः देवः अस्ति। निरुक्तकर्तुः यास्कस्य मते इन्द्रः अन्तरीक्षस्थानीयः देवः। अस्मिन्

इन्द्रसूक्ते इन्द्रस्य शौर्ययुक्तानि कर्माणि वर्णितानि। स मेघं हतवान् जलानि भूमौ पातितवान् तथा पर्वतानां मध्ये नदीः प्रवाहितवान्। पर्वते निवसतः मेघान् ताडितवान् इत्यतः त्वष्टा इन्द्राय गर्जन्तं वज्रं सृष्टवान्। तेन वज्रेण मेघे भिन्ने सति गौः स्ववत्सं प्रति यथा धावति तथा जलमपि सवेगं नीचैः समुद्रं प्रति गन्तुम् आरभत। वृषभः इव आचरन् इन्द्रः त्रिकद्रुकसंज्ञकयागे अभिषुतं सोमं अपिबत। ततः वज्रं स्वीकृत्य मेघानां प्रथमं मेघं हतवान्। मेघानां प्रथमं मेघं यदा हतवान् तदनन्तरं मायोपेतानाम् असुराणां मायाः अपि हतवान्। तदा सूर्यम् उषसं च जनयन् कमपि शत्रुं न प्राप्तवान्। इन्द्रः रक्षसां प्रथमं वृत्रासुरम् आहवे आह्वयामास। तं वृत्रं तथा ततः अधिकशक्तिमन्तं राक्षसं नाशितवान्। कुठारेण छिन्ना वृक्षशाखा इव वृत्रासुरं



पृथिव्याः क्रोडे शयितवान सः। अभिमानाविष्टः वृत्रः इन्द्रं युद्धे आमन्त्रयामास। इन्द्रः वज्रेण वृत्रस्य हस्तपादौ कर्तितवान्। ततः अपि वृत्रः इन्द्रेण साकं युद्धे प्रवर्तितवान्। ततः इन्द्रः तस्य स्कन्धोपरि वज्रेण प्रहारं कृतवान्। एवंरूपेण वृत्रस्य निधनं चकार इन्द्रः। वर्षाकाले वारि यथा नदीम् उल्लङ्घ्य सर्वत्र प्रसरति तथा वृत्रेण रुद्धं जलमेव वृत्रम् उल्लङ्घ्या सर्वत्र विस्तृतम् अभवत्। वृत्रस्य माता यदा स्वपुत्रं रक्षितुं प्रचेष्टितवती तदा सा अपि इन्द्रेण हता। एवं क्रमेण जलं तस्य शरीरं व्यापृणोत्।वृत्रं हत्वा इन्द्रः पिहितं जलमार्गं मुमोच। आदौ वृत्रेण प्रहारे कृते सति इन्द्रः भयेन देवानाम् अश्वस्य पुच्छतुल्यः अभवत्। परन्तु परं इन्द्रः सोमं जितवान् तथा सप्त नदीः मुक्तवान्। वृत्रेण सृष्टा विद्युत् मेघः वज्रः वा इन्द्रं रोद्धुं न शशाक। ततश्च भीतः नवनवतिः(९९) नद्यः किञ्च अन्तरिक्षं श्येनपक्षी इव तीर्त्वा गतः। वज्रधारी सः सर्वेषां नृपः सर्वेषां मनुष्याणां शासकः। यथा अराः रथचक्रं रक्षन्ति तथा सर्वेषां राजा इन्द्रः अस्मान् रक्षन्ति।

##  पाठसारः

ऋग्वेदस्य प्रथममण्डले विद्यमाने इन्द्रसूक्ते पञ्चदश मन्त्राः सन्ति। तत्र प्रथममन्त्रे इन्द्रस्य पराक्रमयुक्तकार्याणि उक्तानि। यथा मेघहननं, वर्षणम् इत्यादि। ततः द्वितीये मन्त्रे विश्वकर्मा गर्जन्तं वज्रं निर्मितवान्। तेन मेघे भिन्ने जलानि समुद्रम् अगच्छन्। ततः तृतीये मन्त्रे उक्तम् इन्द्रस्य सोमपानविषये। ततः चतुर्थे मन्त्रे इन्द्रेण किमुत्पादितमित्येतत् उच्यते। इन्द्रः कपटासुराणां हननानन्तरं सूर्यम् उषःकालम् आकाशं च उत्पादितवान्। ततः पञ्चमे मन्त्रे उक्तं यत् इन्द्रः महता वज्रेण वृत्रं हतवान्। षष्ठे मन्त्रे उक्तं यत् मिथ्याभिमानी वृत्रः यद्यपि इन्द्रं युद्धाय आहूतवान् तथापि स्वयमेव इन्द्रेण हतः। सप्तमे मन्त्रे वृत्रस्य युद्धात् परं किं सञ्जातमिति दर्शितम्। तत्र हस्तरहितं पादरहितं वृत्रम् इन्द्रः प्रहृतवान्। किञ्च वृत्रः भूमौ पतितवान्। एवम् अष्टमे मन्त्रे उक्तं यत् इन्द्रः युद्धात् अनन्तरं किं कार्यं कृतवान्। ततः नवमे मन्त्रे वृत्रस्य जनन्याः कथं मरणं जातमिति उक्तम्। दशमे मन्त्रे उक्तं युद्धात् अनन्तरं वृत्रस्य किं जातमिति।

एकादशे मन्त्रे उक्तम् इन्द्रः वृत्रेण आबद्धं जलं कथं प्रकाशितवान्। द्वादशे मन्त्रे उक्तं कथम् इन्द्रः गाः, सोमं, प्रवहिताः नदीः विमुक्तवान्। त्रयोदशे मन्त्रे इन्द्रवृत्रयोः युद्धविषये उक्तम्। तत्र कथम् इन्द्रः वृत्रं जीतवान् इत्यपि उक्तम्। चतुर्दशे मन्त्रे इन्द्रस्य भयविषये उक्तम्। परन्तु इदम् अहेः कस्यचित् अनुयायिनः मतम्। पञ्चदशे मन्त्रे इन्द्रस्य स्वामित्वं प्रकटितम्। किञ्च प्राणिनां कृते तस्य कर्तव्यमपि प्रकाशितम्। एवं सम्पूर्णे इन्द्रसूक्ते इन्द्रस्य वीर्याणि, इन्द्रवृत्रयोः युद्धम्, इन्द्रस्य माहात्म्यं च वर्णितानि।

##  पाठान्तप्रश्नाः

१. इन्द्रसूक्तस्य सारं लिखत।

२. इन्द्रस्य पराक्रमयुक्तकार्याणि वर्णयत।



३. अपादहस्तो अपृतन्यदित्यादिमन्त्रं पूरयित्वा सायणभाष्यानुसारि व्याख्यात।

४. इन्द्रस्य स्वामित्वम् इन्द्रो यतोवसितस्य... इत्यादिमन्त्रानुसारेण व्याख्यात।

५. कथं वृत्रं वृत्रमातरं च इन्द्रः हतवान् इति मन्त्रानुसारेण व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तरपूगः-१

१. हिरण्यस्तूपः ऋषिः, त्रिष्टुप् छन्दः, इन्द्रश्च देवता।

२. मेघं हतवान्।

३. पर्वतानां संबन्धिनीः प्रवहणशीलाः नदीः कूलद्वयकर्षणेन प्रवाहितवान्।

४. शब्दायमानाः।

५. आश्रितम्।

६. वृष इव आचरन्।

७. प्रकर्षेण नाशितवान्।

८. विपूर्वकात् व्रश्चधातो क्तप्रत्यये विवृक्ण इति रुपम्। तस्य प्रथमाबहुवचने वैदिकरूपम् विवृक्णा इति।

९. वधः येन स वधः।

१०. विशेषतः छिन्नानि।

### उत्तरपूगः-२

११. इन्द्रः शत्रुर्घातको यस्य सः।

१२. रुजन्ति कुलानि इति।

१३. छिन्नमुष्कः पुरुषः।

१४. अपात् अहस्तः।

१५. पादेषु इत्यस्मिन्नर्थे पादशब्दस्य पदादेशे पत्सु इति जाते सप्तम्यर्थे तसिल्प्रत्यये विभक्तिलोपाभावे पत्सुतः इति रूपम्। पत्सुतः शेते इत्यर्थे क्विपि पत्सुतःशीः इति रूपम्।

१६. न्यग्भावं प्राप्ताः हताः।

१७. दानवी।

१८. षूञ् प्राणिगर्भविमोचने।

१९. अधिकरणार्थे।

२०. महिम्ना।



**उत्तरपूगः - ३**

२१. बिले स्थापयित्वा बिलद्वारमाच्छाद्य निरुद्धवान्।

२२. ऋत इद्-धातोः।

२३. सन्लिटोर्जेः।

२४. हन्-धातोः क्वसुप्रत्यये जघन्वस् इति जाते ततः षष्ठ्येकवचने।

२५. नित्त्वाद्।

२६. यर्धातुः।

२७. हन्तारम्।

२८. भवे छन्दसि।

२९. तृ-धातोः लङि मध्यमपुरुषैकवचने।

३०. इन्द्रस्य।

## ॥ इति षोडशः पाठः ॥



# १७

# ॥हिरण्यगर्भसूक्तम्॥

## प्रस्तावना

ऋषिभिः तपसा दिव्यचक्षुर्भ्यां यद् ज्ञानं लब्धं यः शब्दराशिः अधिगतः, स वेदः। इन्द्रियाणां वैकल्यवशात् इन्द्रियजन्यज्ञाने भ्रमप्रमादादिकं सम्भवति परन्तु इन्द्रियातीतं ज्ञानं न केनापि दुष्टेन इन्द्रियेण भवति। अतः तद् ज्ञानं भ्रमप्रमादादिदोषवर्जितमेव भवति। अत एव वैदिकज्ञानम् अद्यापि भ्रमरहितं वर्तते। इदमेव आश्चर्यं यत् कथं ते ऋषयः पुरा इदं ज्ञानं लब्धवन्तः। स्यादेतत्। चतुर्षु भेदेषु भिन्नो वेदः ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदश्चेति। तेषु ऋग्वेदे देवतास्तुतिः वर्तते। तस्यैव अंशभूतमिदं हिरण्यगर्भसूक्तम् अत्र उपादीयते।

हिरण्यगर्भसूक्तम् (ऋ.वे. म-१०.१२१) अस्मिन् पाठे पठिष्यते। ऋग्वेदीयदेवतास्वरूपाणाम् अध्ययनकाले स्पष्टमेव ज्ञायते यत् ऋग्वेदे एकस्याः एव परमसत्तायाः स्तुतिः विविधनाम्ना अक्रियत। एतत् किमर्थं भवति इति चेत् वक्तुं शक्यते यत् सर्वेषां देवानां गुणसाम्यात्। हिरण्यगर्भस्य स्वरूपमपि अस्य तत्त्वस्य अपवादभूतं नास्ति। बहुयुगेभ्यः पूर्वं सम्पूर्णा सृष्टिः एकेन महता जलसमूहेन व्याप्ता आसीत्। तस्मात् देवतास्वरूपः तथा बीजभूतः हिरण्यगर्भः नूतनसृष्ट्यर्थं आविर्बभूव। हिरण्यगर्भ एव प्रजापतिः इति नाम्ना विख्यातः। वैदिकाः ऋषयः स्वस्य उपास्यदेवं सदैव अपूजयन्। ते सर्वकार्यसिद्ध्यर्थं स्वोपास्यदेवम् आह्वयन्ति। ते प्रजापतिम् आह्वयन्तः वदन्ति हे सत्यधर्मन् प्रजापते, त्वं पृथिवीं तथा द्युलोकं च उत्पादितवान्, आनन्दकारिणं चन्द्रमसं समस्तजलसमूहं च उत्पादितवान्, अतः अस्मान् मा पीडय। हे प्रजापते, अन्यः कश्चित् एनं समग्रम् उत्पन्नं पदार्थं न व्याप्तवान्। वयं याम् इच्छाम् आधारीकृत्य हविः ददामः सा इच्छा पूरिता भवेत्। एवमेव आसीत् प्रजापतेः तथा हिरण्यगर्भस्य पूजनीयता। तद्विषयकम् एव एतत् सूक्तम्। अस्य सूक्तस्य हिरण्यगर्भः प्राजापत्य ऋषिः, त्रिष्टुप् छन्दः, प्रजापतिर्देवता। ऋग्वेदीयम् इदं सूक्तं दशममण्डले अन्तर्भवति। अस्मिन् दश ऋचः सन्ति। अतः दशर्चमिदं सूक्तम्।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन भवान् -

- वेदे विद्यमानस्य दार्शनिकसूक्तस्य परिचयं प्राप्नुयात्।
- हिरण्यगर्भसूक्तस्य मूलमन्त्रान् सस्वरं ज्ञास्यति।



- हिरण्यगर्भसूक्तस्य पदपाठं जानीयात्।
- हिरण्यगर्भसूक्तस्य मन्त्राणाम् अन्वयं कर्तुम् समर्थो भविष्यति।
- सायणाचार्यमतानुसारेण हिरण्यगर्भसूक्तस्य व्याख्यां पठिष्यति।
- ऋजुतया हिरण्यगर्भसूक्तस्य अर्थम् अधिगमिष्यति।
- हिरण्यगर्भसूक्तस्य केषाञ्चित् शब्दानाम् व्याकरणं ज्ञास्यति।
- हिरण्यगर्भस्वरूपं ज्ञास्यति।
- हिरण्यगर्भस्य महिमानं ज्ञास्यति।
- वैदिकसमाजस्य चिन्तनस्य उच्चतमं स्तरम् अवगन्तुम् प्रवर्तेत।

## १७.१) इदानीं मूलपाठं पठाम (हिरण्यगर्भसूक्तम् समग्रम्।)

**हि॒र॒ण्य॒ग॒र्भः सम॑वर्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ आसीत्।**
**स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥१**

**य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒शिषं॒ यस्य॑ दे॒वाः।**
**यस्य॑ छा॒यामृतं॒ यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥२**

**यः प्रा॑ण॒तो नि॑मिष॒तो म॑हि॒त्वैक॒ इद्राजा॒ जग॑तो ब॒भूव॑।**
**य ईशे॑ अ॒स्य द्वि॒पद॒श्चतु॑ष्पदः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥३**

**यस्ये॒मे हि॒मव॑न्तो महि॒त्वा यस्य॑ समु॒द्रं र॒सया॑ स॒हाहुः।**
**यस्ये॒माः प्र॒दिशो॒ यस्य॑ बा॒हू कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥४**

**येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ळ्हा येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑।**
**यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥५**

**यं क्रन्द॑सी॒ अव॑सा तस्तभा॒ने अ॒भ्यैक्षे॑तां॒ मन॑सा॒ रेज॑माने।**
**यत्राधि॒ सूर॒ उदि॑तो वि॒भाति॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥६**

**आपो॑ ह॒ यद्बृ॑ह॒तीर्विश्व॒माय॒न्गर्भं॒ दधा॑ना ज॒नय॑न्तीर॒ग्निम्।**
**ततो॑ दे॒वानां॒ सम॑वर्त॒तासु॒रेकः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥७**



**यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।**
**यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम॥८**

**मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।**
**यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम॥९**

**प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥१०॥**

## १७.२) इदानीं मूलपाठम् अवगच्छाम

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥१॥**

**पदपाठः - हिरण्यऽगर्भः। सम्। अवर्तत। अग्रे। भूतस्य। जातः। पतिः। एकः। आसीत्। सः। दाधार। पृथिवीम्। द्याम्। उत। इमाम्। कस्मै। देवाय। हविषा। विधेम॥ १॥**

**अन्वयः** - हिरण्यगर्भः अग्रे समवर्तत, जातः भूतस्य एकः पतिः आसीत्। सः इमां पृथिवीम् उत् द्यां दाधार, कस्मै देवाय हविषा विधेम।

**व्याख्या-** हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथा च तैत्तिरीयकं- 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय' (तै. सं. ५. ५ .१. २) इति। यद्वा हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते। अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत। मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत। यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते। स च जातः जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वरः आसीत्। न केवलं पतिरासीदेव अपि तर्हि सः हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवम् उत अपि च इमाम् अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिम्। यद्वा पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षं दिवं भूमिं च दाधार धारयति। कस्मै इत्यत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते। यद्वा सृष्ट्यर्थं कामयत इति कः। कमेर्डप्रत्ययः। यद्वा। किं सुखम्। तद्रूपत्वात् क इत्युच्यते। अथवा इन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान्। स इन्द्रः प्रत्यूचे यदीदं ब्रवीष्यहं कः स्यामिति तदेव त्वं भवेति। अतः कारणात् क इति



प्रजापतिराख्यायते। 'इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्' (ऐ. ब्रा. ३. २१) इत्यादिकं ब्राह्मणमत्रानुसन्धेयम्। यदासौ किंशब्दस्तदा सर्वनामत्वात् स्मैभावः सिद्धः। यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम्। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। कं प्रजापतिं देवाय देवं दानादिगुणयुक्तं हविषा वयमृत्विजः परिचरेम। विधतिः परिचरणकर्मा।

**सरलार्थः-** प्रजापतिः प्रथमः उत्पन्नः देवः। उत्पन्नात् परमेव जगतः स्वामी अभवत्। स द्युलोकं विस्तीर्णपृथिवीं च धृतवान्। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- समवर्तत- सम्पूर्वकात् वृद्-धातोः लङि प्रथमपुरुषैकवचने समवर्तत इति रूपम्।
- दाधार- धा-धातोः लिटि प्रथमपुरुषैकवचने दाधार इति रूपम्।
- विधेम- पूजार्थकात् विध्-धातोः विधिलिङि उत्तमपुरुषबहुवचने विधेम इति रूपम्।

**य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒शिषं॒ यस्य॑ दे॒वाः।**
**यस्य॑ छा॒यामृतं॒ यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥२॥**

**पदपाठः - यः। आ॒त्म॒ऽदाः। ब॒ल॒ऽदाः। यस्य॑। विश्वे॑। उ॒प॒ऽआस॑ते। प्र॒ऽशिष॑म्। यस्य॑। दे॒वाः। यस्य॑। छा॒या। अ॒मृत॑म्। यस्य॑। मृ॒त्युः। कस्मै॑। दे॒वाय॑। ह॒विषा॑। वि॒धे॒म॥२॥**

**अन्वयः -** यः आत्मदाः बलदाः प्रशिषं विश्वे देवाः उपासते। यस्य छाया अमृतं, यस्य छाया मृत्युः, कस्मै देवाय हविषा विधेम।

**व्याख्या-** यः प्रजापतिः आत्मदाः आत्मनां दाता। आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते। यथाग्नेः सकाशाद्विस्फुलिङ्गा जायन्ते तद्वत्। यद्वा आत्मनां शोधयिता। 'दैप् शोधने'। 'आतो मनिन्...' इति विच्। बलदाः बलस्य च दाता शोधयिता वा। यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे सर्वे प्राणिनः उपासन्ते प्रार्थयन्ते सेवन्ते वा। तथा देवाः अपि यस्य प्रशासनमुपासते। अपि च अमृतम् अमृतत्वम्। भावप्रधानो निर्देशः। यद्वा। अमृतम्। मरणं नास्त्यस्मिन्नित्यमृतं सुधा। तदपि यस्य प्रजापतेः छाया छायेव भवति। मृत्युः यमश्च प्राणापहारी छायेव भवति। तस्मै कस्मै देवाय इत्यादि अधः प्रपञ्चितम्। हविषा पुरोडाशात्मनेति तु विशेषः॥

कस्मै इत्यस्य नैके अर्थाः व्याखाकारैः कृताः।

सायणाचार्यः - तस्य मतेन अर्थाः -

१) अत्र किंशब्दोऽनिर्ज्ञातस्वरूपः। अतः तदर्थः - प्रजापतिः।

२) प्रजापतिः सृष्ट्यर्थं कामयते। अतः प्रजापतेः आख्या कः इति।

३) किम् इत्यस्यार्थः सुखम्। सुखरूपः सः प्रजापतिः। अतः क इत्युच्यते।



४) ऐतरेयब्राह्मणे आख्यानमस्ति। तत्र इन्द्रः वृत्रम् हन्तुम् प्रजापतिम् शक्तिम् अयाचत। इत्थम् इन्द्रेण पृष्टः प्रजापतिः। तदा प्रजापतिः आह - मदीयं महत्त्वं तुभ्यं प्रदाय अहं कः कीदृशः स्याम् इति। तदा स इन्द्रः प्रत्यूचे यदि इदं ब्रवीषि यद् अहं कः स्यामिति। तर्हि तदेव त्वं भव इति। अतः कारणात् क इति प्रजापतिः आख्याते।

यदा क इति नाम भवति तदा तस्य सर्वनाम इति संज्ञा न भवति। सर्वनामसंज्ञाभावे कस्मै इति स्मैयुक्तं रूपं न भवति। परन्तु यदि किम् इति सर्वनाम्नः एव रूपम् कः इति तर्हि असौ किंशब्दः। तदा सर्वनामत्वात् स्मैभावः सिद्धः।

यदा तु क इति यौगिकः तदा स्मैयोगः व्यत्ययेन इति द्रष्टव्यम्। अर्थात् वैदिकप्रयोगः। अतः लौकिकनियमस्य व्यत्ययः इति भावः।

कस्मै इति चतुर्थी। कर्ता स्वक्रियायाः कर्मणा यम् अभिप्रैति स सम्प्रदानम् भवति। अत्र का क्रिया। क्रियाग्रहणं कर्तव्यम्। विधेम इति क्रियापदम्।

**सरलार्थः-** यः हिरण्यगर्भः प्राणदाता बलदाता, यस्य आदेशः सर्वैः देवैः पाल्यते, यस्य छाया अमृतं, यस्य छाया मृत्युः, तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- आत्मदा- आत्मन्-उपपदात् दा-धातोः विच्प्रत्यये प्रथमाबहुवचने आत्मदा इति रूपम्।
- बलदाः- बलोपपदात् दा-धातोः विच्प्रत्यये प्रथमैकवचने बलदाः इति रूपम्।
- उपासते- उपपूर्वकात् आस्-धातोः लटि आत्मनेपदे प्रथमपुरुषबहुवचने उपासते इति रूपम्।

**यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥३॥**

**पदपाठः - यः। प्राणतः। निऽमिषतः। महिऽत्वा। एकः। इत्। राजा। जगतः। बभूव।**
**यः। ईशे। अस्य। द्विऽपदः। चतुःऽपदः। कस्मै। देवाय। हविषा। विधेम॥३॥**

**अन्वयः** - यः महित्वा प्राणतः निमिषतः जगतः एकः इत् राजा बभूव, यः अस्य द्विपदः चतुष्पदः ईशे, कस्मै देवाय हविषा विधेम।

**व्याख्या-** य हिरण्यगर्भः प्राणतः प्रश्वसतः। 'अन प्राणने'। आदादिकः। 'शतुरनुमः...' इति विभक्तेरुदात्तत्वम्। निमिषतः अक्षिपक्ष्मचलनं कुर्वतः। अत्रापि पूर्ववद्विभक्तिरुदात्ता। जगतः जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन। 'सुपां सुलुक्...' इति तृतीयाया आकारः। माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति। अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यपादेः चतुष्पदः

गवाश्वादेश्च यः प्रजापतिः ईशे ईष्टे। 'ईश ऐश्वर्य'। आदादिकोऽनुदात्तेत्। अस्य। द्वौ पादौ यस्य स द्विपात्। ईदृशो यः प्रजापतिस्तस्मै कस्मै इत्यादि सुबोधं हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः।

**सरलार्थः-** यः हिरण्यगर्भः स्वमहिम्ना श्वासप्रश्वासग्रहणकारिणां अक्षिपक्ष्मचलनकारिणां गतिशीलप्राणिजगतः एकाकी एव राजा अभूत्। यश्च पादद्वयविशिष्टस्य पादचतुष्टयविशिष्टस्य च इश्वरः तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- प्राणतः- प्रपूर्वकात् अन्-धातोः शतृप्रत्यये षष्ठ्येकवचने प्राणतः इति रूपम्।
- निमिषतः- निपूर्वकमिष्-धातोः शतृप्रत्यये षष्ठ्येकवचने निमिषतः इति रूपम्।
- ईशे- ईश्-धातोः लटि प्रथमपुरुषबहुवचने ईशे इति रूपम्। वैदिकं रूपमिदम्। लौकिके तु इष्टे इति रूपम्।
- बभूव – भवतेस्तिपि णलि लिटि (पा०सू० ३.१.१९३) इति प्रत्यययात्पूर्वस्योदात्तत्वम्।
- 'ईश ऐश्वर्य'। आदादिकोऽनुदात्तेत् धातुः। 'लोपस्त आत्मनेपदेषु' अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः।
- द्वौ पादौ यस्य स द्विपात्। 'सङ्ख्यासुपूर्वस्य'(पा०सू० ५. ४. १४०) इति पादस्यान्तलोपः समासान्तः। भसंज्ञायां 'पाद पत्' (पा०सू० ६. ४.१३०) इति पद्भावः।

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।**
**यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥४॥**

**पदपाठः - यस्य। इमे। हिमऽवन्तः। महिऽत्वा। यस्य। समुद्रम्। रसया। सह। आहुः॥**

**यस्य। इमाः। प्रऽदिशः। यस्य। बाहू इति। कस्मै। देवाय। हविषा। विधेम॥४॥**

**अन्वयः -** यस्य महित्वा इमे हिमवन्तः रसया सह समुद्रं यस्य आहुः यस्य इमाः प्रदिशः यस्य बाहू कस्मै देवाय हविषा विधेम।

**व्याख्या-** हिमानि अस्मिन् सन्तीति हिमवान्। तेन बहुवचनान्तेन सर्वे पर्वताः लक्ष्यन्ते। यथा छत्रिणो गच्छन्तीति। हिमवन्तः हिमवदुपलक्षिताः इमे दृश्यमानाः सर्वे पर्वताः यस्य प्रजापतेः महित्वा महत्त्वं माहात्म्यमैश्वर्यमिति आहुः। तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा। तथा रसया। रसो जलम्। तद्वती रसा नदी। अर्शआदित्वादच्। जातावेकवचनं रसाभिर्नदीभिः सह समुद्रम्। पूर्ववदेकवचनम्। सर्वान् समुद्रान् यस्य महाभाग्यमिति आहुः कथयन्ति सृष्ट्यभिज्ञाः। यस्य च इमाः प्रदिशः प्राच्यारम्भा आग्नेयाद्याः कोणदिश ईशितव्याः। तथा बाहुः। वचनव्यत्ययः। बाह्वो भुजाः। भुजवत्प्राधान्ययुक्तः प्रदिशश्च यस्य स्वभूताः। तस्मै कस्मै इत्यादि समानं पूर्वेण।



**सरलार्थः-** यस्य महिम्ना हिमवन्तः पर्वताः स्थिताः नद्यः सागराश्च उत्पन्नाः इति कथ्यन्ते। यस्य महिम्ना दिशः बाहुस्वरूपाः तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- हिमवन्तः- हिमशब्दात् मतुप्प्रत्यये प्रथमाबहुवचने हिमवन्तः इति रूपम्।
- आहुः- ब्रू-धातोः लटि प्रथमपुरुषबहुवचने आहुः इति रूपम्।

**येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः।**
**यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥५॥**

**पदपाठः - येन। द्यौः। उग्रा। पृथिवी। च। दृळ्हा। येन। स्वरिति स्वः। स्तभितम्।**

**येन। नाकः॥ यः। अन्तरिक्षे। रजसः। विऽमानः। कस्मै। देवाय। हविषा। विधेम॥५॥**

**अन्वयः -** येन उग्रा द्यौः पृथिवी च दृळ्हा, येन स्वः स्तभितं येन नाकः, यः अन्तरिक्षे रजसः विमानः कस्मै देवाय हविषा विधेम।

**व्याख्या-** येन प्रजापतिना द्यौः अन्तरिक्षम् उग्रा उद्गूर्णं विशेषागहनरूपं वा। पृथिवी भूमिः च दृळ्हा येन स्थिरीकृता। स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतम्। यथाधो न पतति तथोपरि अवस्थापितमित्यर्थः। 'ग्रसितस्कभितस्तभित...' इति निपात्यते। तथा नाकः आदित्यश्च येन अन्तरिक्षे स्तभितः। यः च अन्तरिक्षे रजसः उदकस्य विमानः निर्माता। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**सरलार्थः-** येन द्युलोकः उग्रः कृतः, पृथिवा दृढा कृता। स्वर्गलोकः आदित्यलोकः च येन स्तब्धौ। यः अन्तरिक्षे जलपरिमाणकारी तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- दृळ्हा- दृह्-धातोः क्तप्रत्यये टापि च दृळ्हा इति रूपम्।
- स्तभितम्- स्तम्भ्-धातोः क्तप्रत्यये स्तम्भितम् इति रूपम्।
- विमानः- विपूर्वकात् मा-धातोः ल्युटि विमानः इति रूपम्।



## पाठगतप्रश्नाः

१. हिरण्यगर्भसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।
२. कः हिरण्यगर्भः इत्युच्यते।
३. दाधार इत्यत्र कथं लिट्।



४. विधेम इति रूपं कथं सिद्ध्येत्।

५. प्रशिषम् इत्यस्य कः अर्थः।

६. अमृतम् अमृतत्वम् इति कीदृशः निर्देशः।

७. अमृतम् इत्यत्र मृ-इत्यत्र कः स्वरः। (एषु युक्तमुत्तरं चेयम् - उदात्तः, अनुदात्तः, स्वरितः।)

८. बभूव इत्यत्र भू-इत्यत्र कः स्वरः। (एषु युक्तमुत्तरं चेयम् - उदात्तः, अनुदात्तः, स्वरितः।)

९. आहुः इति रूपं कस्य धातोः।

१०. दृळ्हा इति शब्दस्य कः अर्थः।

---

**यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।**
**यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम॥६॥**

**पदपाठः - यम्। क्रन्दसी इति। अवसा। तस्तभाने इति। अभि। ऐक्षेताम्। मनसा। रेजमाने इति॥ यत्र। अधि। सूरः। उत्ऽइतः। विऽभाति। कस्मै। देवाय। हविषा। विधेम॥६॥**

**अन्वयः** - अवसा तस्तभाने मनसा रेजमाने क्रन्दसी यं मनसा अभ्यैक्षेताम्, यत्र अधि सूरः उदितः विभाति, कस्मै देवाय हविषा विधेम।

**व्याख्या-** क्रन्दितवान् रोदितवाननयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ। श्रूयते हि-यदरोदीत्तदनयो रोदस्त्वम् (तै. ब्रा. २. २. ९. ४) इति। ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्या अभ्यैक्षेताम् आवयोर्महत्त्वमनेन इत्यभ्यपश्येताम्। कीदृश्यौ द्यावापृथिव्यौ। रेजमाने राजमाने दीप्यमाने। आकारस्य व्यत्ययेनैत्वम्। यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयं प्राप्तः सन् विभाति प्रकाशते। उत्पूर्वादितेः कर्मणि निष्ठा। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**सरलार्थः-** प्राणिनां रक्षणानार्थं स्थिरीकृतं तथा मनसि कम्पमाने सति द्युलोकः पृथिवीलोकश्च यं पश्यति। यम् आधारीकृत्य सूर्यः उदितो भूत्वा विभाति तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- क्रन्दसी- क्रन्द्-धातोः असुन्प्रत्यये स्त्रीलिङ्गे प्रथमाद्विवचने क्रन्दसी इति रूपम्।
- अवसा- अव्-धातोः असुन्प्रत्यये तृतीयैकवचने अवसा इति रूपम्।



- तस्तभाने- स्तम्भ्-धातोः कानचि टापि च प्रथमाद्विवचने तस्तभाने इति रूपम्।
- रेजमाने- रेज्-धातोः कानच्प्रत्यये टापि च प्रथमाद्विवचने रेजमाने इति रूपम्।
- अभ्यैक्षेताम्- अभिपूर्वकात् ईक्ष् दर्शने इत्यर्थकात् धातोः लङि प्रथमपुरुषद्विवचने अभ्यैक्षेताम् इति रूपम्।

**आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम्।**
**ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम॥७॥**

**पदपाठः - आपः। ह। यत्। बृहतीः। विश्वम्। आयन्। गर्भम्। दधानाः। जनयन्तीः। अग्निम्॥ ततः। देवानाम्। सम्। अवर्तत। असुः। एकः। कस्मै। देवाय। हविषा। विधेम॥७॥**

**अन्वयः** - यत् ह गर्भं दधाना अग्निं जनयन्तीः बृहती आपः विश्वं आयन् ततः देवानाम् एकः असुः समवर्तत, कस्मै देवाय हविषा विधेम।

**व्याख्या-** बृहतीः बृहत्यो महत्यः। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः। 'बृहन्महतोरुपसङ्ख्यानम्' इति ङीप उदात्तत्वम्। अग्निम्। उपलक्षणमेतत्। अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीः जनयन्त्यः तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपो ह आप एव विश्वमायन् सर्वे जगत् व्याप्नुवन् यत् यस्मात् ततः तस्माद्धेतोः देवानां देवादीनां सर्वेषां प्राणिनाम् असुः प्राणभूतः एकः प्रजापतिः समवर्तत समजायत। यद्वा। यत् यं गर्भं दधाना आपो विश्वात्मना अवस्थिताः ततो गर्भभूतात् प्रजापतेः देवादीनां प्राणात्मको वायुः अजायत। अथवा। यत् लिङ्गवचनयोर्व्यत्ययः। उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः ततस्ताभ्योऽद्भ्यः सकाशाद् एकोऽद्वितीयः असुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**सरलार्थः-** बृहज्जलसमूहः यदा समग्रं विश्वं परिव्याप्य आसीत् तदा देवाः गर्भरूपेण प्रजापतिं धत्तवन्तः अग्निना उपलक्षितं समग्रं भुवनं च सम्पादितवन्तः। तस्मात् देवानां प्राणभूतः प्रजापतिः आविर्बभूव। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- बृहतीः- बृहत्यः इत्यस्य वैदिकं रूपमिदम्।
- दधानाः- धा-धातोः शानच्प्रत्यये टापि च प्रथमाबहुवचने दधानाः इति रूपम्।
- जनयन्तीः- जन्-धातोः णिचि शतरि ङीपि च प्रथमाबहुवचने जनयन्तीः इति रूपम्। जनयन्त्यः इत्यस्य वैदिकं रूपमिदम्।



- आयन्- इ-धातोः लङि प्रथमपुरुषबहुवचने आयन् इति रूपम्।

**यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।**
**यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम॥८॥**

**पदपाठः - यः। चित्। आपः। महिना। परिऽअपश्यत्। दक्षम्। दधानाः। जनयन्तीः। यज्ञम्॥ यः। देवेषु। अधि। देवः। एकः। आसीत्। कस्मै। देवाय। हविषा। विधेम॥८॥**

**अन्वयः** - दक्षं दधानाः यज्ञं जनयन्तीः आपः यः चित् महिना पर्यपश्यत्, यः देवेषु अधि एकः देवः आसीत्, कस्मै देवाय हविषा विधेम।

**व्याख्या-** यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः धारयित्रीः।ईदृशीः आपः। व्यत्ययेन प्रथमा। अपः प्रलयकालीनाः महिना महिम्ना। छान्दसो मलोपः स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् यः च देवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति। ततं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**सरलार्थः-** सृष्टिशक्तिधारकः सृष्ट्युत्पत्तिरूपयज्ञोत्पादकः जलसमूहं स्वमहम्ना यः पश्यति, यः देवानाम् अद्वितीयः स्वामी तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- महिना- महिम्ना इत्यस्य वैदिकं रूपमिदम्।
- दधानाः - दधातेर्हेतौ शानच्। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्।
- आसीत्- अस्तेश्छान्दसो लङ्। 'अस्तिसिचोऽपृक्ते' (पा०सू० ७. ३. ९६) इतीडागमः।
- आपः- अपः इति द्वितीयाबहुवचनस्य वैदिकं रूपमिदम्।
- पर्यपश्यत्- परिपूर्वकात् दृश्-धातोः लङि प्रथमपुरुषैकवचने पर्यपश्यत् इति रूपम्।

**मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।**
**यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम॥९॥**

**पदपाठः - मा। नः। हिंसीत्। जनिता। यः। पृथिव्याः। यः। वा। दिवम्। सत्यऽधर्मा। जजान॥ यः। च। अपः। चन्द्राः। बृहतीः। जजान। कस्मै। देवाय। हविषा। विधेम॥ ९॥**



**अन्वयः** - नः मा हिंसीत्, यः पृथिव्याः जनिता वा यः सत्यधर्मा दिवं जजान, यः च चन्द्राः बृहती अपः जजान, कस्मै देवाय हविषा विधेम।

**व्याख्या-** स प्रजापतिः नः अस्मान् मा हिंसीत् मा बाधताम्। यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा। 'जनिता मन्त्रे' इति णिलोपो निपात्यते। यो वा यश्च सत्यधर्मा सत्यमवितथं धर्मः जगतो धारणं यस्य स तादृशः प्रजापतिः दिवम् अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास। यश्च बृहतीः महतीः चन्द्रा आह्लादिनीः अपः उदकानि जजान जनयामास। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**सरलार्थः-** यः पृथिव्याः स्रष्टा, यः जगतः धारकः, यः सर्वं लोकं सृष्टवान्। यः वृहतीं दीप्यमानां जलराशिं सृष्टवान्। सः यथा अस्मान् न पीडयेत्। तं विहाय कं हविषा पूजयेम अथवा प्रजापतिं हविषा पूजयेम।

**व्याकरणम् -**

- हिंसीत्- हिंस्-धातोः लिङि प्रथमपुरुषैकवचने हिंसीत् इति रूपम्।
- 'जनी प्रादुर्भावे'। णिचि वृद्धौ 'जनीजृष्क्नसुरञ्ज...' इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्।
- जनिता- जन्-धातोः णिचि तृचि च पुंल्लिङ्गे प्रथमैकवचने जनिता इति रूपम्।
- जजान- जन्-धातोः लिटि प्रथमपुरुषैकवचने जजान इति रूपम्। वैदिकं रूपमिदम्। लौकिके तु जनयामास इत्येवं रूपम्।

**प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥१०॥**

**पदपाठः - प्रजापते। न। त्वत्। एतानि। अन्यः। विश्वा। जातानि। परि। ता। बभूव॥**

**यत्ऽकामाः। ते। जुहुमः। तत्। नः। अस्तु। वयम्। स्याम। पतयः। रयीणाम्॥१०॥**

**अन्वयः** - प्रजापते त्वत् अन्यः एतानि ता विश्वा जातानि न परि बभूव, यत् कामाः ते जुहुमः, तत् नः अस्तु, वयं रयीणां पतयः स्याम।

**व्याख्या-** इळादधाख्य इष्ट्ययने प्राजापत्यस्य हविषः 'प्रजापते इत्येषानुवाक्या। सूत्रितं च- प्राजापत्य इळादधः प्रजापते न त्वदेतान्यन्यः' (आश्व. श्रौ. २. १४) इति। केशनखकीटादिभिः दुष्टानि हर्षीष्यनयैवाप्सु प्रक्षिपेत्। सूत्रितं च- 'अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः' (आश्व. श्रौ. ३. १०) इति। चौलादिकर्मस्वप्येषा होमार्था। सूत्रितं च- 'तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्र आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च' (आश्व. गृ. १. ४. ४) इति।

**सरलार्थः-** अस्मिन् मन्त्रे प्रजापतिं प्रति उच्यते यत् हे प्रजापते त्वां विहाय अन्यः कोपि एतत् समस्तम् उत्पन्नं वस्तु न परिव्याप्नोति। यस्य फलस्य लाभाय त्वाम् उद्दिश्य जुहुमः अस्माकं यथा तस्य फलस्य लाभः भवेत्। वयं यथा धनस्य अधिपतिः भवेम।

**व्याकरणम् -**

- जुहुमः- हु-धातोः लटि उत्तमपुरुषबहुवचने जुहुमः इति रूपम्।
- स्याम- अस्-धातोः विधिलिङि उत्तमपुरुषबहुवचने स्याम इति रूपम्।
- विश्वा- विश्वशब्दस्य नपुंसकलिङ्गे द्वितीयाबहुवचने विश्वा इति रूपम्। वैदिकं रूपमिदम्। लौकिके तु विश्वानि इति रूपम्।
- बभूव- भू-धातोः लिटि प्रथमपुरुषैकवचने बभूव इति रूपम्।



## पाठगतप्रश्नाः

११. अभ्यैक्षेताम् इति रूपं कथं सिद्ध्येत्।
१२. असुः इत्यस्य कः अर्थः।
१३. बृहतीः इत्यस्य लौकिकं रूपं किम्।
१४. जनयन्तीः इत्यस्य लौकिकं रूपं किम्।
१५. पर्यपश्यत् इत्यस्य कः अर्थः।
१६. मा नो॑ हिंसीज्जनि॒ता... इत्यादिमन्त्रे पृथिव्याः इत्यत्र पृथिवीशब्दात् विभक्तेः कः स्वरः। (यथोचितम् उत्तरं निर्णयतु - उदात्तः, अनुदात्तः, स्वरितः।)
१७. जजान इति रूपं कथं स्यात्।
१८. जजान इत्यस्य लौकिकं रूपं किम्।
१९. आपः इत्यस्य लौकिकं रूपं किम्।
२०. हिंसीत् इति कस्मिन् लकारे भवति।

## १७.३) हिरण्यगर्भसूक्तस्य सारः

ऋग्वेदस्य दशममण्डलस्य एकविंशत्युत्तरैकशततमं सूक्तं हि हिरण्यगर्भसूक्तम्। वेदस्य बहुषु दार्शनिकसूक्तेषु इदम् अन्यतमम्। अस्य सूक्तस्य ऋषिः हिरण्यगर्भः, छन्दः त्रिष्टुप्, प्रजापतिर्देवता। छन्दोबद्धानां पादबद्धानां च ऋङ्मन्त्राणां देवस्तुतिः देवान् उद्दिश्य अभीष्टप्रार्थनादिकं च मुख्योद्देश्यत्वेन गण्यते। तथापि केचन मन्त्राः सन्ति येषु उच्चतरदार्शनिकमतं सम्यक् प्रकटितं दृश्यते। ऋग्वेदस्य



दशममण्डलान्तर्गतं हिरण्यगर्भसूक्तं तेषु प्रामुख्यं भजते। इदं सूक्तम् पुरा लब्धप्रतिष्ठस्य आर्यसमाजस्य आर्यगणस्य च दार्शनिकचिन्ताधारायाः प्रवाहविषये प्रामाणिकताम् आवहति।

ऋग्वेदस्य देवतातत्त्वं प्रकृतिपूजाम् आश्रयति। अत्र देवताः विभिन्नानां प्राकृतिकशक्तीनां प्रतिनिधिस्वरूपाः। परन्तु हिरण्यगर्भसूक्तस्य नास्ति कापि प्राकृतिकभित्तिः। अपि तु मनीषादीप्तैः ऋषिभिः गभीरध्यानेन जगतः सृष्टेः रहस्यम् अवगतम्। तदेव वेदे हिरण्यगर्भादिरूपेण प्रकटितम्।

अस्मिन् सूक्ते परमात्मा एव जगन्नियामकः इति स्तुतिः दृश्यते। ऋग्वेदस्य हिरण्यगर्भसूक्तस्य देवता हिरण्यगर्भः प्रजापतिः स्वयम्। हिरण्मयस्य अण्डस्य गर्भभूतः प्रजापतिः हिरण्यगर्भः। यद्वा हिरण्मयः अण्डो गर्भवत् यस्य उदरे वर्तते सः सूत्रात्मा हिरण्यगर्भः। स च 'क'शब्दाभिधेयः। यज्ञकर्तारः फलं कामयमानाः यज्ञं कुर्वन्ति। ते च यत्फलं कामयमानाः यज्ञं कुर्वन्ति तत्फललाभो भवतु इति तेषाम् इच्छा। धनलाभः तथा महान् भवतु येन ते धनानाम् ईश्वराः भवेयुः। इत्थं कामनान्विताः याज्ञिकाः कामनापूर्त्यर्थं हिरण्यगर्भाय हवींषि प्रयच्छन्ति हिरण्यगर्भस्तुतिं च कुर्वन्तः प्रार्थयन्ति तं कामनापूर्तये।

याज्ञिकानाम् ऋषीणां स्तुतौ हिरण्यगर्भः इत्थं वर्णितः- संसारसृष्टिवेलायां अग्रे हिरण्यगर्भरूपेण परमात्मा एव आविर्भूतः। तस्मात् समग्रसंसारस्य स एव एकः स्वामी। पृथिवीं द्युलोकं च स दधार। परमात्मनः सर्वम् उत्पद्यन्ते। तस्मात् आत्मनां दाता, बलस्य च दाता स एव। तथाहि आम्नातं- '**य आत्मदा बलदा**'। इति। जगति सर्वे प्राणिनः तस्य एव आज्ञाकारिणः। स एव प्राणिजातस्य ईश्वरः।

तस्यैव माहात्म्यं हिमालयादिनिखिलपर्वताः, महाभाग्यं च नदीसागरादयः, तस्य भुजाः सर्वाः दिशः। स एव दिवम् अन्तरिक्षं भूमिं च स्थिरीकृतवान्, स्वर्गं स्तब्धीकृवान्, अन्तरिक्षे उदकं निर्मितवान्। लोकरक्षार्थं द्यावापृथिव्यौ तमेव प्रार्थयतः। हिरण्यगर्भाश्रयेणैव सूर्य उदितः सन् विभाति। सर्वे देवाः तस्य एव शासनं परिपालयन्ति। तथाहि आम्नातम्- "**उपासते प्रशिषं यस्य देवाः"।** इति। मृत्योः मुक्तेश्च उत्सः स एव। सः समेषां प्राणिनां नियन्ता, स्थावरजङ्गमात्मकस्य पदार्थस्य च अधीश्वरः।

वियदादिभूतजातं जनयन्त्यः आपः प्रजापतिं धारयन्त्यः विश्वं व्याप्नुवन्। तस्मात् सः समस्तप्राणिनां प्राणभूतः। आपः विकारजातं जनयन्ति। तदर्थं ताः दक्षप्रजापतिम् आत्मनि धारयन्ति। ताः प्रलयकालीनाः प्रथमाः आपः सन्ति। तासाम् स्वमाहात्म्येन प्रजापतिः परितो दर्शनं कृतवान्। स एव देवानामपि अद्वितीय ईश्वरः।

अस्य प्रकाण्डस्य सृष्टितत्त्वस्य मूलभूतः सर्वव्यापी सुमहान् ईश्वरः अस्ति। सः कदाचित् पुरुषरूपेण, कदाचित् हिरण्यगर्भरूपेण कदाचित् प्रजापतिरूपेण कदाचिच्च ब्रह्मरूपेण विराजते। असतः अव्यक्तात् प्रकाशितस्य सत्स्वरूपस्य वाङ्मयरूपं हि हिरण्यगर्भः। स एव हि स्रष्टा सृष्टेरादिपुरुषश्च। सः अव्यक्तस्य परब्रह्मणः व्यक्तं रूपम्।

यः भूमिस्रष्टा, यश्च सर्वलोकजनयिता सत्यधर्मा यो वा चन्द्रोदकादीनामपि उत्पादकः सः प्रजापतिः अस्मान् मा बाधताम्। वर्तमानानि विश्वानि, सर्वाणि भूतजातानि तस्मात् अन्यं कमपि न व्याप्नोति, स एव एतानि परिगृह्य स्रष्टुं शक्नोति इति शम्।



## १७.४) हिरण्यगर्भस्वरूपम्

ऋग्वेदस्य दशमे मण्डले विराजमाने हिरण्यगर्भसूक्ते प्रजापतिपुत्रः हिरण्यगर्भाख्यः वर्णितः स्तुतः च दृश्यते। हिरण्मयस्य अण्डस्य गर्भभूतः प्रजापतिः हिरण्यगर्भः। यद्वा हिरण्मयः अण्डो गर्भवत् यस्य उदरे वर्तते स सूत्रात्मा हिरण्यगर्भः। स च क-शब्दाभिधेयः।मायाध्यक्षो हि परमात्मा। जगत्सृष्टिं कामयमानः परमात्मा प्रपञ्चोत्पत्तेः प्राक् हिरण्यगर्भरूपेण समजायत। परमात्मा एव हिरण्यगर्भः। तथापि उपाधिभूतानां वियदादीनां सूक्ष्मभूतानां उत्पत्तिः तस्मात् तदुपहितः अपि उत्पन्नः इति उच्यते। एवं हिरण्यगर्भः अद्वितीयः सन् सर्वस्य जगतः ईश्वरः, दिवं भूमिं च धारयति। कं सुखं तद्रूपः। यद्वा क इति इन्द्राख्यानात् प्रजापतिः आख्यायते।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् इति गीतोक्तिः अत्र प्रासङ्गिकी।

परमात्मनः सर्वे उत्पद्यन्ते तस्मात् हिरण्यगर्भः आत्मनां दाता, किञ्च बलस्य अपि दाता स एव। जगति सर्वे प्राणिनः तस्य आज्ञानुकारिणः। स एव प्राणिजातस्य ईश्वरः।

तस्यैव माहात्म्यं हिमालयादिनिखिलपर्वताः, महाभाग्यं च नदीसागरादयः, तस्य भुजाः सर्वाः दिशः। स एव दिवम् अन्तरिक्षं भूमिं च स्थिरीकृतवान्, स्वर्गं स्तब्धीकृतवान्, अन्तरिक्षे उदकं निर्मितवान्। लोकरक्षार्थं द्यावापृथिव्यौ तमेव प्रार्थयन्तः। हिरण्यगर्भाश्रेणैव सूर्यः उदितः सन् विभाति।

वियदादिभूतजातं जनयन्त्यः आपः प्रजापतिं धारयन्त्यः विश्वं व्याप्नुवन्। तस्मात् स समस्तप्राणिनां प्राणभूतः। विकारजातं जनयन्तीः तदर्थं दक्षप्रजापतिम् आत्मनि धारयित्रीः प्रलयकालीनाः प्रथमाः अपः स्वमाहात्म्येन प्रजापतिः परितो दृष्टवान्, स एव देवानामपि अद्वितीयः ईश्वरः।

यः भूमिस्रष्टा, यश्च सर्वलोकजनयिता सत्यधर्मा यो वा चन्द्रोदकादीनामपि उत्पादकः स प्रजापतिः अस्मान् मा बाधताम्।

वर्तमानानि विश्वानि, सर्वाणि भूतजातानि तस्मात् अन्यः कोऽपि न व्याप्नोति, स एव एतानि परिगृह्य स्रष्टुं शक्नोति। सृष्टिक्रवर्णनकारिणी निम्नोक्तगीतावचनानि अत्र प्रासङ्गिकानि -

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।

यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥३-१४॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।

तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥३-१५॥



## पाठसारः

हिरण्यगर्भसूक्ते दश मन्त्राः सन्ति। अत्र दशमन्त्रैः यत् प्रतिपादितं तत् साररूपेण कथ्यते। अस्मिन् सूक्ते हिरण्यगर्भस्य विविधगुणाः वर्णिताः। किञ्च प्रशंसां कुर्वता उच्यते यत् तं विहाय अन्यं कं हविषा पूजयामि। अर्थात् एवंभूतः यः हिरण्यगर्भः सः एव पूजनीयः। हिरण्यगर्भः प्रथमः उत्पन्नः।





प्रथमोत्पन्ने सति समग्रजगतः स्वामी अभूत्। स समग्रद्युलोकं तथा पृथिवीं च दधार। स प्राणदाता, बलदाता, यस्य आदेशः सर्वदेवताभिः पाल्यते। यस्य छाया जन्ममृत्युसदृशा। यस्य महिम्ना श्वासप्रश्वासग्राहिकानां पक्षिणां गमनशीलानां प्राणिनां च एकाकी एव राजा अस्ति। यस्य महिम्ना हिमवन्तः पर्वताः स्थिताः, नद्यः सागराश्च उत्पन्नाः। यस्य महिम्ना द्युलोकः स्थिरीकृतः, पृथिवी च स्थिरीकृता, स्वर्गलोकः नागलोकश्च स्थिरीकृतौ। यम् आधारीकृत्य सूर्यः उदितः भवति। रक्षासमये यं सर्वे रक्षणाय पश्यन्ति। वृहज्जलसमूहः यदा समग्रं विश्वं परिव्याप्य आसीत् तदा देवाः गर्भरूपेण यं धत्तवन्तः अग्निना उपलक्षितं समग्रं भुवनं च सम्पादितवन्तः। यः देवतानाम् एकः एव स्वामी।



## पाठान्तप्रश्नाः

१. हिरण्यगर्भसूक्तस्य सारं लिखत।
२. हिरण्यगर्भस्य महिम्नः वर्णनं कर्तव्यम्।
३. हिरण्यगर्भः समवर्तताग्रे... इत्यादिमन्त्रं व्याख्यात।
४. मा नो हिंसीज्जनिता... इत्यादिमन्त्रं व्याख्यात।
५. यः प्राणतो निमिषतो... इत्यादिमन्त्रं व्याख्यात।
६. हिरण्यगर्भस्य स्वरूपं लिखत।
७. हिरण्यगर्भसूक्ते कस्मै इति शब्दस्य विषये लघुप्रबन्धं लिखत।
८. मा नो हिंसीज्जनिता... इति मन्त्रं व्याख्यात।
९. यश्चिदापो महिना .... इति मन्त्रं व्याख्यात।
१०. यं कन्द्रसी अवसा तस्तभाने --- इति मन्त्रं व्याख्यात।
११. य आत्मदा बलदा...इति मन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**समाधिनिचयः- १**

१. हिरण्यगर्भः ऋषिः, त्रिष्टुप् छन्दः, प्रजापतिः देवता।
२. हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भः।
३. छन्दसि लुङ्लङ्लिटः इति सार्वकालिको लिट्।
४. पूजार्थकात् विध्-धातोः विधिलिङि उत्तमपुरुषबहुवचने।
५. प्रकृष्टं शासनम्।
६. भावप्रधानः।



७. उदात्तः।

८. उदात्तः।

९. ब्रू-धातोः।

१०. स्थिरीकृता।

**समाधिनिचयः- २**

११. अभिपूर्वकात् ईक्ष्-धातोः लङि प्रथमपुरुषद्विवचने।

१२. प्राणभूतः एकः प्रजापतिः।

१३. वृहत्यः।

१४. जनयन्त्यः।

१५. परितो दृष्टवान्।

१६. उदात्तः।

१७. जन्-धातोः लिटि प्रथमपुरुषैकवचने।

१८. जनयामास।

१९. अपः।

२०. लिङ्लकारे।

॥ इति सप्तदशः पाठः ॥



# १८

# ॥पुरुषसूक्तम्॥

## प्रस्तावना

वेदो ज्ञानराशिः शब्दराशिश्च। वेदः अपौरुषेय इति एव परम्परा। प्राणिमात्रस्य इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकम् उपायं वेदयति वेदः। वेदेन ज्ञाप्यमाना उपायाः प्रत्यक्षेण अनुमानेन वा प्रमाणेन अगम्याः सन्ति। केवलम् वेदशब्देभ्य एव ते उपाया ज्ञातुं शक्याः। ईश्वरोऽपि सृष्टिकरणे वेदज्ञानम् आश्रित्य जगत् सृजति। तदिदं वैदिकं ज्ञानं निर्भ्रान्तम् प्रमादरहितं च। स च वेदः प्रयोगभेदेन यज्ञनिर्वाहकत्वाद् ऋक् यजुः साम इति त्रेधा भिन्नः। स एव त्रयी इत्युच्यते। प्रतिवेदम् पुनः मन्त्रः ब्राह्मणम् इति द्विविधो विभागो प्रकल्पितो वेदविद्भिः। मन्त्र एव संहिता इत्यपि प्रचारः। मन्त्रस्तावत् यज्ञाद्यनुष्ठानकारणभूदद्रव्यदेवतादिप्रकाशकः। ब्राह्मणस्तु विध्यर्थवादादिप्रतिपादकः अनेकविधः। स्तुत्यात्मक ऋग्वेदः। तस्य ऋग्वेदस्य मण्डलरूपेण अष्टकरूपेण च द्वेधा विभाजनमस्ति। तत्र मण्डलरूपेण विभागे सति इदं सूक्तम् दशममण्डले नवतितमम् (ऋ.वे. म-१०.९०)। मन्त्रात्मकस्य ऋग्वेदस्य अयमंशः।

पुरुषसूक्तम् अतीव महत्त्वपूर्णम् अस्ति। ऋग्वेदसंहितायां दशममण्डले केषुचित् सूक्तेषु देवानां स्तुतिः नास्ति। स्तुतिभिन्नं किमपि विद्यते। पुरुषसूक्तमपि एवमेव सूक्तम् अस्ति। अस्मिन् सूक्ते सृष्टिविषयकवर्णनम् अस्ति। अस्मिन् सूक्ते आदिपुरुषशरीरात् देवताभिः या सृष्टिः कृता सा वर्णिता अस्ति। अत्र पुरुषस्य आध्यात्मिककल्पनायाः एकं भव्यं निदर्शनं विद्यते। पुरुषः एव समग्रविश्वरूपः। यः प्राचीनकाले वर्तमानकाले भविष्यत्काले च विद्यमानः। यजुर्वेदे एकत्रिंशे अध्याये पुरुषस्वरूपं वर्णितम्। यत्र ऋग्वेदापेक्षया षट् मन्त्राः अधिकाः सन्ति। अस्मिन् ऋग्वेदीयपुरुषसूक्ते सृष्टिप्रक्रिया यज्ञरूपेण कल्पिता। किञ्चित् परिवर्तनानन्तरं सामवेदे शुक्लयजुर्वेदे तथा अथर्ववेदे इदमेव सूक्तं प्राप्यते। सृष्ट्यर्थं देवताभिः ऋषिभिश्च यः यज्ञः कृतः तस्मिन् यज्ञे पुरुषः हविरूपेण परिकल्पितः। तस्मिन्नेव यज्ञे वसन्तर्तुः घृतं, ग्रीष्मर्तुः इन्धनं, शरदृतुः हविः च आसन्। अस्मात् एव पुरुषात् पशवः पक्षिणः ऋगादिवेदाः सूर्यः चन्द्रः इत्यादयः उत्पन्नाः। एवमेव सृष्टिवर्णनं कृतम्। अस्य पुरुषसूक्तस्य नारायणः ऋषिः, अनुष्टुप् छन्दः षोडशमन्त्रे विराट् त्रिष्टुप्, विराट् पुरुषः देवता। अस्मिन् सूक्ते षोडशमन्त्राः सन्ति। तैः मन्त्रैः पुरुषस्वरूपं, सृष्टिविवरणं च वर्णितम्। शुक्लयजुर्वेदे ये मन्त्राः लभ्यन्ते तेऽपि अत्र आनीय व्याख्याताः सन्ति। उत्तरभागः उत्तरनारायणः इत्युच्यते।





## उद्देश्यानि

इमं पाठम् अधीत्य भवान् -

- सूक्तस्यास्य संहितापाठं पठिष्यति।
- सूक्तस्यास्य पदपाठं पठिष्यति।
- सूक्तस्यास्य मन्त्राणाम् अन्वयं ज्ञास्यति।
- सूक्तस्यास्य मन्त्राणाम् सान्वयप्रतिपदार्थं ज्ञास्यति।
- सूक्तस्यास्य व्याख्यां सरलार्थं च अवगच्छेत्।
- सूक्तस्थशब्दानां केषाञ्चिद् व्याकरणज्ञो भवेत्।
- लौकिकवैदिकयोः शब्दयोः भेदं कर्तुं शक्नुयात्।
- पुरुषस्वरूपं ज्ञातुं शक्नुयात्।
- सृष्टिविवरणं ज्ञातुं शक्नुयात्।

## १८.१) इदानीं मूलपाठं पठाम (पुरुषसूक्तम्)

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्॥१॥**

**पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति॥२॥**

**एतावानस्य महिमातो ज्यायाँश्च पूरुषः।**
**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥३॥**

**त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।**
**ततो विष्वङ्व्यक्रामत्साशनानशने अभि॥४॥**

**तस्माद्विराळजायत विराजो अधि पूरुषः।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥५॥**

**यत्पुरुषेण हविषा देवा यज्ञमतन्वत।**
**वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥६॥**



तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥७॥

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।
पशून्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये॥८॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥९॥

तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥१०॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥११॥

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥१२॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥१३॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन्॥१४॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्॥१५॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥१६॥

(इतः परं विद्यमानोऽयं भागः शुक्लयजुर्वेदीयो वर्तते। तत्र पुरुषसुक्तस्यैव अंशभूतः गण्यते। उत्तरनारायणीयसूक्तम्। शुक्लयजुर्वेदः। ३१ अध्यायः।)

**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे॥१७॥**

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।**
**तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥१८॥**

**प्रजापतिश्चरति गर्भेऽअन्तरजायमानो बहुधा वि जायते।**
**तस्य योनिं परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥१९॥**

**यो देवेभ्यऽआतपति यो देवानां पुरोहितः।**
**पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये॥२०॥**

**रुचं ब्राह्मं जनयन्तो देवाऽअग्रे तदब्रुवन्।**
**यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे॥२१॥**

**श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।**
**इष्णन्निषाणामुं मऽइषाण सर्वलोकं मऽइषाण॥२२॥**

## १८.२) इदानीं मूलपाठम् अवगच्छाम

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्॥१॥**

**पदपाठः- सहस्रशीर्षा। पुरुषः। सहस्रऽअक्षः। सहस्रऽपात्॥ सः। भूमिम्। विश्वतः। वृत्वा। अति। अतिष्ठत्। दशऽअङ्गुलम्॥१॥**

**अन्वयः-** पुरुषः सहस्रशीर्षा सहस्राक्षः सहस्रपात्, सः भूमिं विश्वतः वृत्वा दशाङ्गुलम् अतिष्ठत्।



**व्याख्या-** सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सः अयं सहस्रशीर्षा। सहस्रशब्दस्योपलक्षणत्वादनन्तःशिरोभिर्युक्तः इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षित्वं सहस्रपादत्वञ्च। सः पुरुषः भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतः वृत्वा परिवेष्ट्य दशाङ्गुलं दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थितः इत्यर्थः।

**सान्वयप्रतिपदार्थः -** पुरुषः= परमेश्वरो ब्रह्म वा, सहस्रशीर्षा = अनन्तमस्तकयुतः, सहस्रशब्दोऽत्र बहुत्ववाची । शिरोग्रहणं सर्वावयवोपलक्षणम्। सहस्राक्षः= अपरिमितलोचनसमन्वितः, अक्षिग्रहणम् अत्र सर्वज्ञानेन्दियोपलक्षकम्। सहस्रपात्= असंख्यातचरणयुक्तः, विद्यते इति शेषः। पादग्रहणम् अत्र कर्मेन्द्रियोपलक्षकम्। स= अन्तर्यामी, भूमिं= ब्रह्माण्डगोलकरूपां धरित्रीम्, अथवा पञ्चभूतानि व्याप्य, भूमिशब्दोऽत्र पञ्चभूतोपलक्षकः । सर्वतः= विश्वतः, ऊर्ध्वम् अधः अग्रादितः अन्तर्बहिश्च। स्पृत्वा= व्याप्य, परिवेष्ट्य इत्याशयः। दशाङ्गुलम्=दशाङ्गुलपरिमितं देशम्। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्य अवस्थित इत्याशयः। यद्वा--नाभेः सकाशाद् दशाङ्गुलम् अतिक्रम्य हृदि संस्थितः । दशाङ्गुलशब्दः अल्पद्योतकोऽपि। अति= अतिक्रान्तं कृत्वा , अधिकं वा, अतिष्ठत्= अवस्थितः। अनुष्टुब्वृत्तमत्र।।१

**सरलार्थः-** विराडाख्यः पुरुषः अनन्तशिरोयुक्तः अनन्ताक्षियुक्तः अनन्तपादयुक्तः। स समस्तब्रह्माण्डं व्याप्य तिष्ठन् अपि दशाङ्गुलपरिमितस्थानम् अधिकं विद्यते। अर्थात् ब्रह्माण्डात् बहिः अपि स तिष्ठति इत्यर्थः।

**व्याकरणम् -**

- सहस्रशीर्षा-सहस्रं शीर्षाणि यस्य सः(बहुवीहिसमासः)।
- सहस्राक्षः-सहस्रम् अक्षीणि यस्य सः(बहुवीहिसमासः)।
- सहस्रपात्-सहस्रं पादाः यस्य सः(बहुवीहिसमासः)।
- वृत्वा-वृ-धातोः क्त्वाप्रत्यये वृत्वा इति रूपम्।
- अतिष्ठत्- स्थाधातोः लङि प्रथमपुरुषैकवचने।

**पुरु॑ष ए॒वेदं सर्वं॒ यद्भू॒तं यच्च॒ भव्य॑म्।**
**उ॒ताम॑तत्वस्येशा॑नो यदन्ने॑ना॒तिरोह॑ति॥२॥**

**पदपाठः- पुरु॑षः। ए॒व। इ॒दम्। सर्व॑म्। यत्। भू॒तम्। यत्। च॒। भव्य॑म्॥ उ॒त। अ॒मृ॒त॒ऽत्वस्य॑। ईशा॑नः। यत्। अन्ने॑न। अ॒ति॒ऽरोह॑ति॥२॥**

**अन्वयः-** इदं सर्वं पुरुष एव, यत् भूतं, यत् च भव्यम्, उत अमृतत्वस्य ईशानः यत् अन्नेन अतिरोहति।



**व्याख्या-** यत् इदं वर्तमानं जगत् तत् पुरुष एव। यच्च भूतमतीतं जगत् यच्च भव्यं भविष्यज्जगत् तदपि पुरुष एव। यथा अस्मिन्कल्पे वर्तमानप्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उत अपि चामृतत्वस्य देवत्वस्यायम् ईशानः स्वामी। यत् यस्मात्कारणात् अन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेन अतिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः।

**सान्वयप्रतिपदार्थः -** इदं सर्वं= निखिलप्रत्यक्षवर्तमानं जगत् , यद् भूतं = यद् अतीतकालिकं विश्वं, यच्च भाव्यं=यद् भविष्यत्कालिकं जगत्, पुरुष एव=तत्सर्वं परब्रह्म परमात्मा एव, (सः=पुरुषः) अमृतत्वस्य=अमरतायाः, मोक्षस्य वा, ईशानः= स्वामी, उत=अपि च, यत्= यत्किमपि, अन्नेन= भोज्येन, अतिरोहति= वृद्धिं लभते, (तस्यापि ईशानः= स्वामी इत्याशयः) ।।२

**सरलार्थः-** यत् किमपि दृश्यमानं जगत् तत् सर्वमपि स पुरुषः एव। यत् जातं, यच्च भविष्यति तत् अपि स पुरुष एव। स अमृतत्वस्य अधिपतिः। किञ्च भोग्यवस्तुभिः वर्धमानस्यापि अधिपतिः।

**व्याकरणम् -**

- भव्यम्-भूधातोःयत्प्रत्यये।
- ईशानः-ईश्-धातोः शानचि प्रथमैकवचने।
- अतिरोहति-अतिपूर्वकात् रुह्-धातोः लटि प्रथमपुरुषैकवचने।

**एतावा॑नस्य महि॒माता॒े ज्याया॑ँश्च॒ पूरु॑षः।**
**पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि॥३॥**

**पदपाठः- ए॒तावा॑न्। अ॒स्य॒। म॒हि॒मा। अतः॑। ज्याया॑न्। च॒। पुरु॑षः॥ पादः॑। अ॒स्य॒।**
**विश्वा॑। भू॒तानि॑। त्रि॒ऽपात्। अ॒स्य॒। अ॒मृत॑म्। दि॒वि॥३॥**

**अन्वयः-** एतावान् अस्य महिमा पुरुषः च अतः ज्यायान्, विश्वाभूतानि अस्य पादः, अस्य त्रिपात् अमृतं दिवि।

**व्याख्या-** अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः। न तु तस्य वास्तवस्वरूपम्। वास्तववस्तु पुरुषः अतः महिम्नोऽपि ज्यायान् अतिशयेनाधिकः। एतच्चोभयं स्पष्टीक्रियते। अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः चतुर्थः अंशः। अस्य पुरुषस्य अविशिष्टं त्रिपात् स्वरूपम् अमृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्राकाशस्वरुपे व्यवतिष्ठात इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०आ०८.१;तै० उ० २.१) इत्याम्नातस्य परब्रह्मण इयत्ताभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः।



**सान्वयप्रतिपदार्थः** - एतावान्= निखिलं परिदृश्यमानं जगद्, अस्य = सर्वेश्वरस्य पुरुषस्य महिमा= स्वकीयसामर्थ्यविशेषो विभूतिः। अतः अस्मात्, ज्यायान्= अतिशयेन अधिकः च, पूरुषः= ब्रह्माण्डनायकः। अस्य= ब्रह्मणः, पादः=चतुर्थांशः विश्वा= समग्रानि, भूतानि=प्राणिजातानि, अस्य= जगत्स्रष्टुः , त्रिपात्= त्रिचतुर्थांशः अमृतं= विनाशारहितं, दिवि=स्वप्रकाशस्वरूपे, आकाशे वा विद्यत इति शेषः ।।३

**सरलार्थः-** अस्य पुरुषस्य एवं महिमा यत् अयं पुरुषः महिम्नः ऐश्वर्यात् च वृहत्। समस्तप्राणिनः अस्य चतुर्थः अंशः अस्ति। तस्य त्रयः अंशाः द्युलोके अवस्थिताः।

**व्याकरणम्-**

- एतावान्-एतत्+वतुप्(वत्)।
- ज्यायान्-ज्या+ईयसुन्।
- विश्वा- विश्वशब्दः, नपुंसकलिङ्गस्य प्रथमाबहुवचने वैदिकं रूपम्। विश्वानि इति अस्य लौकिकं रूपम्।

**त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। स्येहा**
**ततो विष्वङ्व्यक्रामत्साशनानशने अभि॥४॥**

**पदपाठः- त्रिऽपात्। ऊर्ध्वः। उत्। ऐत्। पुरुषः। पादः। अस्य। इह। अभवत्। पुनरिति॥**
**ततः। विष्वङ्। वि। अक्रामत्। साशनानशने इति। अभि॥४॥**

**अन्वयः-** त्रिपात्पुरुषः ऊर्ध्वः उदैत्, पुनः अस्य पादः इह अभवत्, ततः साशनानशने अभि विष्वङ् व्याक्रामत्।

**व्याख्या-** योऽयं त्रिपात्पुरुषः संसाररहितो ब्रह्मस्वरूपः सोऽयं ऊर्ध्व उदैत् अस्मादज्ञानकार्यात्संसाराद्बहितोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान्। तस्य अस्य सोऽयं पादः लेशः सोऽयम् इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं-'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ० गी० १०.४२) इति। ततः मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान्। किं कृत्वा। साशनानशने अभिलक्ष्य। साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥

**सान्वयप्रतिपदार्थः** - त्रिपात् = त्रिचतुर्थांशयुतः, पुरुषः = ब्रह्म, ऊध्वम् = उपरिष्टात्, उद् = उत्कर्षेण, ऐत् = गतवान्, संस्थितवानित्याशयः। अस्य = पुरुषस्य, पादः = चतुर्थांशः, पुनः = भूय, इह = अस्मिन् लोके, अभवत् = स्थितिं प्राप। ततः = तस्माद्, मायायाम् आगत्य अनन्तरं वा, विष्वङ् = चतुर्दिक्षु, विविधरूपो भूत्वा वा, साशनम् = असनादिव्यवहारोपेतं चेतनप्राणिजातम्, अनशनम् = तद्रहितम्

अचेतनम्, ते साशनानशने = चेतनाचेतने, अभि = अभिलक्ष्य, वि = विशेषरूपेण, अक्रामत् = व्याप्तवान्।। ४

**सरलार्थः-** त्रिपात्पुरुषः द्युलोकं गतः, चतुर्थः अंशः अस्मिन् लोके एव विद्यते। स चतनेषु अचेतनेषु च विविधरूपेण व्याप्तः अस्ति।

**व्याकरणम् -**

- उदैत्-उत्पूर्वकात् इधातोः लङि प्रथमपुरुषैकवचने।
- व्यक्रामत्-विपूर्वकात् क्रम्-धातोः लङि मध्यमपुरुषैकवचने।
- साशनाशने- अश्-धातोः ल्युटि, अशनेन सहितं साशनम्, अशनेन रहितम् अनशनम्, साशनम् च अनशनम् चेति साशनाशने इति द्वन्द्वसमासः।

**तस्मा॑द्वि॒राळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः।**
**स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः॥५॥**

**पदपाठः- तस्मा॑त्। वि॒ऽराट्। अ॒जा॒य॒त॒। वि॒ऽराजः॑। अधि॑। पुरु॑षः॥ सः। जा॒तः। अति। अ॒रि॒च्य॒त। प॒श्चात्। भूमि॑म्। अथो॒ इति॑। पु॒रः॥५॥**

**अन्वयः-** तस्मात् विराड् अजायत, विराजः अधिपुरुषः। सः जातः भूमिम् अथो पुरः अत्यरिच्यत।

**व्याख्या-** विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते। तस्मात् आदिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्नः। विविधानि राजन्ते वस्तून्यत्रेति विराट्। विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत। सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयया देवतात्मजीवोऽभवत्। एतच्चाथर्वाणिका उत्तरतापनीये विस्पष्टमामनन्ति- स वा एष भूतानीन्द्रियाणि विराजं देवताः केशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव (नृ० ता० २.१.९)इति। स जातः विराट्पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत्। विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज। पूर्यन्ते सप्तभिरधातुभिरिति पुरः शरीराणि।

**सान्वयप्रतिपदार्थः -** तस्माद् = आदिपुरुषात्, विराट् = ब्रह्माण्डदेहः, अजायत = जातः, विराजः अधि = विराड्देहस्य उपरि, तमेव देहम् अधिकरणं कृत्वा, पूरुषः = एकः पुमान् (अजायत) , स जातः = समुत्पन्नो विराट्पुरुषः, अत्यरिच्यत = अतिरिक्तोऽभवत्, देव-तिर्यङ्-मनुष्यादिरूपः अभूत्। पश्चाद् = देवादिजीवभावाद् ऊर्ध्वं, भूमिं = महीं, ससर्ज इति शेषः। अथो = भूमिसृष्टेः अनन्तरं, पुरः = शरीराणि, ससर्ज इत्याशयः।।५



**सरलार्थः-** आदिपुरुषात् विराट् उत्पन्नः, विराजः जीवात्मा उत्पन्नः अभवत्। उत्पन्नात् परमेव स स्वयमेव देवमनुष्यरूपेण पृथक्कृतवान्। तदनन्तरं पृथिवी उत्पन्ना, ततः जीवात्मनः कृते शरीरं निर्मितम्।

**व्याकरणम्-**

- विराट्-विपूर्वकात् राज्-धातोः क्विपि।
- अजायत-जन्-धातोः लङि प्रथमपुरुषैकवचने।
- अत्यरिच्यत-अतिपूर्वकात् रिच्-धातोः लङि प्रथमपुरुषैकवचने।



## पाठगतप्रश्नाः

१. पुरुषसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।
२. दशाङ्गुलम् इत्यस्य किं तात्पर्यम्।
३. ईशानः इत्यस्य कः अर्थः।
४. पुरुषस्य चतुर्थः पादः कः।
५. पुरुषस्य अवशिष्टं त्रिपात् कुत्र विद्यते।
६. यद्यपि पुरुषस्य पादचतुष्टयं निरूपयितुम् अशक्यं तथापि कथं पादत्वोपन्यासः।
७. विश्वा इत्यस्य लौकिकं रूपं किम्।
८. उदैत् इति रूपं कथं सिद्ध्येत्।
९. साशनानाशने इत्यस्य कः अर्थः।
१०. पुरः इत्यस्य कः अर्थः।

---

**यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत।**
**व॒स॒न्तो अ॑स्यासी॒दाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः॥६॥**

**पदपाठः- यत्। पुरु॑षेण। ह॒विषा॑। दे॒वाः। य॒ज्ञम्। अत॑न्वत॥ व॒स॒न्तः। अ॒स्य॒। आ॒सी॒त्। आज्य॑म्। ग्री॒ष्मः। इ॒ध्मः। श॒रत्। ह॒विः॥६॥**

**अन्वयः-** यत् देवाः पुरुषेण अतन्वत। अस्य वसन्तः आज्यम् आसीत्, ग्रीष्मः इध्मः, शरत् हविः(चासीत्)।



**व्याख्या-** यत् यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषस्वरूपमेव मनसा हविष्त्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञम् अतन्वत अन्वतिष्ठन्। तदानीम् अस्य यज्ञस्य वसन्तः वसन्तर्तुरेव आज्यम् आसीत् अभूत्। तमेवाज्यत्वेन सङ्कल्पितवन्तः इत्यर्थः। एवं ग्रीष्म इध्मः आसीत्। तमेवेध्मत्वेन सङ्कल्पितवन्त इत्यर्थः। तथा शरद्धविरासीत्। तामेव पुरोडाशादिहविष्त्वेन सङ्कल्पितवन्त इत्यर्थः। पूर्वपुरुषस्य हविः सामान्यरूपत्वं न सङ्कल्पः। अनन्तरं वसन्तादीनामाज्यादिविशेषेरूपत्वेन सङ्कल्प इति द्रष्टव्यम्।

**सान्वयप्रतिपदार्थः -** देवाः= सुराः, यत्= यदा, पुरुषेण= पुरुषाख्येन हविषा, यज्ञम्= मानसं यागम्, अतन्वत= विस्तारितवन्तः। अस्य= यज्ञस्य, आज्यं= घृतम्, वसन्तः= ऋतुः एव, आसीत्= अभूत्। इध्मः= समिद् इन्धनविशेषः, ग्रीष्मः= उष्ण ऋतुः एव। हविः= पुरोडाशादिहविष्ढेन, शरद्= एतदाख्य ऋतुः आसीत्= अभवत्।।६।।

**सरलार्थः-** यदा देवाः पुरुषरूपहविषा यज्ञं सम्पादितवन्तः तदा वसन्तर्तुः यज्ञस्य घृतमासीत्, ग्रीष्मर्तुः इध्मः आसीत्, शरदृतुः हविरासीत्।

**व्याकरणम् -**

- अतन्वत- तनु विस्तारे इति धातोः लङि प्रथमपुरुषैकवचने।

**तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।**
**तेन देवा अयजन्त साध्या ऋषयश्च ये॥७॥**

**पदपाठः- तम्। यज्ञम्। बर्हिषि। प्र। औक्षन्। पुरुषम्। जातम्। अग्रतः॥ तेन। देवाः। अयजन्त। साध्याः। ऋषयः। च। ये॥७॥**

**अन्वयः-** अग्रतः जातं तं यज्ञं पुरुषं बर्हिषि प्रौक्षन् तेन देवाः ये साध्याः ऋषयः च अयजन्त।

**व्याख्या-** यज्ञं यज्ञसाधनभूतं ते पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः। कीदृशमित्यत्राह। अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तम् 'तस्माद्विराळजायत विराजो अधि पूरुषः' इति। तेन पुरुषरूपेण पशुना देवाः अयजन्त। मानसयागं निष्पादितवन्त इत्यर्थः। के ते देवा इत्यत्र आह। साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकुलाः ऋषयः मन्त्रद्रष्टारः ये च सन्ति। ते सर्वेऽप्ययजन्तेत्यर्थः।

**सान्वयप्रतिपदार्थः -** तं= प्रथितम्, अग्रतः= प्राक्, जातं= प्रादुर्भूतम्, यज्ञं= यज्ञसाधनभूतं सम्पूजनीयं वा, पुरुषं= पशुत्वभावनया यूपे बद्धं, (देवाः= सुराः) बर्हिषि= मानसे यागे, दूर्वायां वा, कुशेषु वा, प्र औक्षन्= प्रकर्षेण प्रोक्षितवन्तः। देवाः= अमराः, साध्याः= सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः, ये=



प्रथिताः, ऋषयश्च= बह्मवेत्तारः, मन्त्रद्रष्टारश्च, (आसन्, ते सर्वे) तेन= प्रथितेन पुरुषेण, अयजन्त= यागं विहितवन्तः।।७।।

**सरलार्थः-** प्रथमम् उत्पन्नं यज्ञीयपुरुषं कुशे स्थापयित्वा जलेन पवित्री कृतवान्। ततः प्रोक्षितपुरुषात् देवाः प्रजापत्यादिसृष्टकर्तारः यज्ञकर्तारः ऋषयश्च यज्ञं सम्पादितवन्तः।

**व्याकरणम् -**

- प्रौक्षन्-प्रपूर्वकात् उक्ष्-धातोः लङि प्रथमपुरुषबहुवचने।
- अयजन्त-यज्-धातोःलङि प्रथमपुरुषबहुवचने।

**तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।**
**पशून् ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये॥८॥**

**पदपाठः- तस्मात्। यज्ञात्। सर्वऽहुतः। सम्ऽभृतम्। पृषत्ऽआज्यम्॥ पशून्। तान्। चक्रे। वायव्यान्। आरण्यान्। ग्राम्याः। च। ये॥८॥**

**अन्वयः-** सर्वहुतः तस्मात् यज्ञात् पृषदाज्यम् सम्भृतम्, वायव्यनि आरण्यानि ये च ग्राम्याः तान् चक्रे।

**व्याख्या-** सर्वहुतः। सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहूत्। तादृशात् तस्मात् पूर्वोक्तात् मानसात् यज्ञात्पृषदाज्यं दधिमिश्रिज्यं सम्भृतं सम्पादितम्। दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं सम्पादितमित्यर्थः। तथा वायव्यान् वायुदेवताकाँल्लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्याः गवाश्वादयः तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते 'वायवःस्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान्परिददाति'(तै०ब्रा० ३.२.१.३)इति।

**सान्वयप्रतिपदार्थः -** तस्मात्= पुरुषमेधाख्यात्, सर्वं हूयते यस्मिन् स सर्वहुत्, तस्मात् सर्वहुतः= सर्वात्मकहवनशीलत्वात्, यज्ञात्= मखात्, पृषत् च तद् आज्यम् पृषदाज्यं= दधिमिश्रम आज्यं, सम्भृतम्= समुत्पन्नं सम्पादितं वा, (तस्मात् सम्भृतात् पृषदाज्यात्) वायव्यान्= वायुतदेवताकान्, नभचारिण इत्याशयः, आरण्यान्= अरण्ये भवान्, हरिणादीन्, ये च= प्रथिताः, ग्रामे भवाः ग्राम्याः= ग्रामभवाः गवाश्वादयः, तान्= पशून्, चक्रे= समुत्पादितवान्।।८।।

**सरलार्थः-** तस्मात् सर्वहुतः यज्ञात् दधिमिश्रितं घृतम् एकत्री कृतम्। तेन घृतेन आकाशस्थाः विहगाः, आरण्यकपशवः, ग्राम्यपशवः च उत्पन्नाः।

**व्याकरणम् -**

- सर्वहूतः- सर्वं हूयते यस्मिन्; तस्मात्। सर्व हू क्विप् , पञ्चम्येकवचने।



- पृषदाज्यम्- पृष्-धातोः शतृप्रत्यये, पृषत् च तद् आज्यं च(कर्मधारयः)।
- सम्भृतम्- सम्पूर्वकात् भृधातोः क्तप्रत्यये।
- वायव्यान्- वायुशब्दात् यत्प्रत्ययः, ततः द्वितीयाबहुवचनम्।
- आरण्यान्- अरण्यशब्दात् अण्प्रत्ययः, ततः द्वितीयाबहुवचनम्।
- ग्राम्याः- ग्रामशब्दात् यत्प्रत्ययः, ततःप्रथमाबहुवचनम्।
- चक्रे- कृधातोः लिटि आत्मनेपदे प्रथमपुरुषैकवचनम्।

**तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥९॥**

**पदपाठः- तस्मात्। यज्ञात्। सर्वऽहुतः। ऋचः। समानि। जज्ञिरे॥ छन्दांसि। जज्ञिरे। तस्मात्। यजुः। तस्मात्। अजायत॥९॥**

**अन्वयः-** सर्वहुतः तस्मात् यज्ञात् ऋचः सामानि जज्ञिरे , तस्मात् छन्दांसि तस्मात् यजुः अजायत।

**व्याख्या-** सर्वहुतः तस्मात् पूर्वोक्तात् यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नाः। तस्मात् यज्ञात् छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्मात् यज्ञात् यजुः अपि अजायत।

**सान्वयप्रतिपदार्थः -** तस्मात् = प्रथितात्, सर्वहुतः = अशेषहवनशीलत्वात्, यज्ञात् = मखात्, ऋचः = ऋग्वेदाः, सामानि = सामवेदाः, जज्ञिरे = समुत्पन्नाः, तस्मात् = पुरुषमेधाख्ययागात्, छन्दांसि = गायत्र्यादीनि वृत्तानि, जज्ञिरे = प्रादुर्भूतानि, तस्मात् = प्रथितात् मखात्, यजुः = यजुरपि, अजायत = जातः, समुत्पन्न इत्याशयः।।९

**सरलार्थः-** तस्मात् सर्वहुतः यज्ञात् ऋचः, सामानि, गायत्र्यादीनि छन्दांसि, यजूंषि च उत्पन्नानि।

**व्याकरणम् -**

- जज्ञिरे- जन्-धातोः लिटि प्रथमपुरुषबहुवचने।
- अजायत- जन्-धातोः लङि प्रथमपुरुषैकवचने।

**तस्मादश्वा अजायन्त ये के चोभयादतः।**
**गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥१०॥**



**पदपाठः- तस्मा॑त्। अश्वा॑ः। अ॒जा॒य॒न्त॒। ये। के। च॒। उ॒भ॒या॒द॑तः॥ गाव॑ः। ह॒। ज॒ज्ञि॒रे॒। तस्मा॑त्। तस्मा॑त्। जा॒ताः। अ॒जा॒वय॑ः॥१०॥**

**अन्वयः-** तस्मात् अश्वाः अजायन्त, ये के च उभयादतः, तस्मात् ह गावः जज्ञिरे, तस्मात् अजावयः जाताः॥

**व्याख्या-** तस्मात् पूर्वोक्तात् यज्ञात् अश्वाः अजायन्त उत्पन्नाः। तथा ये के च अश्वाव्यतिरिक्ताः गर्दभाः अश्वतराश्च उभयादतः ऊर्ध्वाधोभागयोरुभयोः दन्तयुक्ताः सन्ति तेऽप्यजायन्त। तथा तस्मात् यज्ञात् गावः च यज्ञिरे। किञ्च तस्मात् यज्ञात् अजावयः च जाताः।

**सान्वयप्रतिपदार्थः -** तस्मात् = पूर्वनिगदितात् यज्ञात्, अश्वाः = हयाः, ये के च = अश्वातिरिक्ता गर्दभादयः अश्वतराश्च, उभयोः भागयोः दन्ता येषां ते उभयादतः = ऊर्ध्वाधोभागयोः दन्तयुक्ताः सन्ति, तेऽपि, अजायन्त = समुत्पन्नाः। तस्मात् = पूर्वोक्ताद् यज्ञात्, ह = स्फुटं, गावः = धेनवः, जज्ञिरे = प्रादुर्भूताः, तस्मात् = मखात्, अजाश्च अवयश्च अजावयः = छागमेषादयश्च, जाताः = जनिम् अलभन्त।।१०

**सरलार्थः-** तस्मात् यज्ञात् अश्वाः, ऊर्ध्वभागे अधोभागे च येषां दन्ताः विद्यन्ते ते उत्पन्नाः, गावः उत्पन्नाः, अजाश्च अजायन्त।

**व्याकरणम् -**

- अजायन्त- जन्-धातोः लङि प्रथमपुरुषबहुवचने।
- उभयादतः- उभयोः दन्ताः येषां ते(बहुव्रीहिसमासः)
- जज्ञिरे- जन्-धातोः लिटि प्रथमपुरुषबहुवचने।
- अजावयः- अजाश्च अवयश्च(द्वन्द्वसमासः)।



## पाठगतप्रश्नाः

११. यज्ञे कः ऋतुः आज्यम् आसीत्।

१२. यज्ञे कः ऋतुः इध्मः आसीत्।

१३. यज्ञे कः ऋतुः हविः आसीत्।

१४. तेन पुरुषरूपेण पशुना के देवाः अयजन्त।

१५. आरण्यकाः कस्मात् अजायन्त।

१६. उभयादतः इति रूपं कथं सिद्ध्येत्।

१७. पृषदाज्यम् इति रूपं कथं सिद्ध्येत्।



१८. प्रौक्षन् इति रूपं कथं सिद्ध्येत्।

१९. वायव्यान् इति रूपं कथं सिद्ध्येत्।

२०. जज्ञिरे इति रूपं कथं सिद्ध्येत्।

---

**यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।**
**मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥११॥**

**पदपाठः- यत्। पुरुषम्। वि। अदधुः। कतिधा। वि। अकल्पयन्॥ मुखम्। किम्। अस्य। कौ। बाहू इति। कौ। ऊरू इति। पादौ। उच्येते इति॥११॥**

**अन्वयः-** यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्, अस्य मुखं किम्, अस्य बाहू कौ, ऊरु कौ पादौ उच्येते।

**व्याख्या-** प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड्रूपं व्यदधूः सङ्कल्पेन उत्पादितवन्तः तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किमासीत्। कौ बाहू अभूताम्। कौ च पादावुच्येते। प्रथमं सामान्यरूपः प्रश्नः पश्चात् मुखं किमित्यदिना विशेषविषयाः प्रश्नाः।

**सान्वयप्रतिपदार्थः** - (देवाः= पुरन्दरप्रभृतयः) यत् = यदा, पुरुषं =विराड्रूपं, व्यदधुः = सङ्कल्पेन समुत्पादितवन्तः, (तद्) कतिधा = कतिभिः प्रकारैः, व्यकल्पयन् = विविधं कल्पितवन्तः। अस्य = पुरुषस्य= मुखं = आननं, किम् आसीत् =किम् बभूव, किम् बाहू = भुजौ, किम् ऊरू = जङ्घे, आस्तामिति शेषः, किम् पादौ = चरणौ, उच्येते = कथ्येते।।११

**सरलार्थः-** देवाः पुरुषं विविधभागेन विविधरूपेण च विभक्तवन्तः। तस्य पुरुषस्य किं मुखं, कौ तस्य बाहू, कौ तस्य ऊरू, कौ वा तस्य पादौ।

**व्याकरणम् -**

- व्यदधुः- विपूर्वकात् धाधातोः लङि प्रथमपुरुषबहुवचने।
- व्यकल्पयन्- विपूर्वकात् कृप्-धातोः णिचि लङि प्रथमपुरुषबहुवचने।
- उच्येते- ब्रू-धातोः कर्मणि लटि प्रथमपुरुषद्विवचने।

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥१२॥**



**पदपाठः- ब्राह्मणः। अस्य। मुखम्। आसीत्। बाहू इति। राजन्यः। कृतः॥ ऊरू इति। तत्। अस्य। यत्। वैश्यः। पत्ऽभ्याम्। शूद्रः। अजायत॥१२॥**

**अन्वयः-** ब्राह्मणः अस्य मुखम् आसीत्, राजन्यः बाहू कृतः, यत् वैश्यः तत् अस्य ऊरूः, पद्भ्यां शूद्रः अजायत।

**व्याख्या-** इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति। अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखमासीत् मुखादुत्पन्नः इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिमान् सः बाहु कृतः बाहुत्येन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। तत् तदानीम् अस्य प्रजापतेः यद्वैश्यः संपन्नः। ऊरुभ्यामुत्पन्न इत्यर्थः। तथा पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान्पुरुषः अजायत। इयं च मुखदिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत '(तै०स० ७.१.१.४) इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये।

**सान्वयप्रतिपदार्थः -** अस्य = पुरुषस्य, परमेश्वरस्य वा, मुखम् = आननं, ब्राह्मणः = द्विजः, आसीत् = अभूत्। राजन्यः = क्षत्रियः, बाहू = भुजौ इव शौर्यपराक्रमसमन्वितः, कृतः = निष्पन्नः। यत् = यः, वैश्यः = वैश्यजातिमान् पुरुषः, तत् = सः, ऊरू = जङ्घे। शूद्रः = शूद्रजातिमान् पुरुषः, पद्भ्याम् = चरणाभ्याम्, अजायत = समुत्पन्नः।।१२

**सरलार्थः-** ब्राह्मणः अस्य मुखमासीत् अर्थात् मुखात् उत्पन्नः। क्षत्रियः अस्य हस्तः आसीत् अर्थात् हस्ताभ्याम् उत्पन्नः। वैश्यः अस्य ऊरुः आसीत् अर्थात् ऊरुभ्याम् उत्पन्नः। शूद्रः अस्य पादः आसीत् अर्थात् पादाभ्याम् उत्पन्नः।

**व्याकरणम् -**

- आसीत्- अस्-धातोः लङि प्रथमपुरुषैकवचने।

**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।**
**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥१३॥**

**पदपाठः- चन्द्रमाः। मनसः। जातः। चक्षोः। सूर्यः। अजायत॥ मुखात्। इन्द्रः। च। अग्निः। च। प्राणात्। वायुः। अजायत॥१३॥**

**अन्वयः-** मनसः चन्द्रमाः जातः, चक्षोः सूर्यः अजायत, मुखात् इन्द्रः च अग्निः च, प्राणात् वायुः अजायत।



**व्याख्या-** यथा दध्याज्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्माद्देवोत्पन्ना इत्याह। प्रजापतेः मनसः सकाशात् चन्द्रमाः जातः। चक्षोः च चक्षुषः सूर्यः अपि अजायत। अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य प्राणाद्वायुरजायत।

**सान्वयप्रतिपदार्थः -** (अस्य = पुरुषस्य) मनसः = चेतसः, चन्द्रमाः = चन्द्रः (हिमांशुः), जातः = समुत्पन्नः। चक्षोः = लोचनाभ्यां, सूर्यः = भास्करः, अजायत = प्रादुर्भूतः। श्रोत्राद् = कर्णात्, वायुः = मातरिश्वा, प्राणश्च = जीवः। मुखात् = आननात्, अग्निः = अनलः (वह्निः), अजायत = समुद्भूतः।।१३

**सरलार्थः-** तस्य पुरुषस्य मनसः चन्द्रमा उत्पन्नः, नेत्रात् सूर्यः उत्पन्नः, मुखात् इन्द्रः अग्निश्च उत्पन्नौ, प्राणेभ्यः वायुः उत्पन्नः।

**व्याकरणम् -**

- अजायत- जन्-धातोः लङि प्रथमपुरुषैकवचने।
- मनसः- मनस्-शब्दस्य षष्ठ्येकवचने पञ्चम्येकवचने वा।

**नाभ्या॑ आसीद॒न्तरि॑क्षं शी॒र्ष्णो द्यौः सम॑वर्तत।**

**प॒द्भ्यां भूमि॒र्दिशः॒ श्रोत्रा॒त्तथा॑ लो॒काँ अ॑कल्पयन्॥१४॥**

**पदपाठः- नाभ्याः॑। आ॒सी॒त्। अ॒न्तरि॑क्षः। शी॒र्ष्णः। द्यौः। सम्। अ॒व॒र्त॒त॥ प॒त्ऽभ्याम्। भूमिः॑। दिशः॑। श्रोत्रा॑त्। तथा॑। लो॒कान्। अ॒क॒ल्प॒य॒न्॥१४॥**

**अन्वयः-** नाभ्याः अन्तरिक्षम् आसीत् शीर्ष्णः द्यौः समवर्तत, पद्भ्यां भूमिः, श्रोत्रात् दिशः, तथा लोकान् अकल्पयन्।

**व्याख्या-** यथा चन्द्रादीन् प्रजापतेर्मनः प्रभृतिभ्योऽकल्पयन् तथा अन्तरिक्षादीन् लोकान् प्रजापतेः नाभ्यादिभ्यो देवाः अकल्पयन् उत्पादितवन्तः। एतदेव दर्शयति। नाभ्याः प्रजापतेर्नाभेः अन्तरिक्षमासीत्। शीर्ष्णः शिरसः द्यौः समवर्तत उत्पन्नाः। अस्य पद्भ्यां पादाभ्यां भूमिः उत्पन्ना। अस्य श्रोत्रात् दिशः उत्पन्नाः।

**सरलार्थः-** पुरुषस्य नाभिमण्डलात् अन्तरिक्षम् उत्पन्नं, शिरसः द्युलोकः, पादात् भूमिः, कर्णात् च दिशः उत्पन्नाः। एवं स लोकान् सृष्टवान्।

**व्याकरणम् -**

- समवर्तत- सम्पूर्वात् वृत्-धातोः लङि प्रथमपुरुषैकवचने।
- अकल्पयन्- क्लृप्-धातोः लङि प्रथमपुरुषबहुवचने।



**सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः।**
**देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्॥१५॥**

**पदपाठः- सप्त। अस्य। आसन्। परिऽधयः। त्रिः। सप्त। सम्ऽइधः। कृताः॥ देवाः। यत्। यज्ञम्। तन्वानाः। अबध्नन्। पुरुषम्। पशुम्॥१५॥**

**अन्वयः-** यत् देवाः यज्ञं तन्वानाः पुरुषं पशुम् अबध्नन्, अस्य सप्त परिधयः आसन्, त्रिः सप्त समिधः कृताः।

**व्याख्या-** अस्य साङ्कल्पिकयज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधयः उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः अतः एव आम्नायते-' न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति'(तै०स० २.६.६.३)इति। ततः एव आदित्यसहिताः सप्त परिधयोऽत्र सप्त छन्दोरूपाः। तथा समिधः त्रिः सप्तत्रिगुणीकृतसप्तसंख्याकाः एकविंशतिः कृताः। 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोकाः असावादित्य एकविंशः'(तै०स० ५.१.१०.३)इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः। यत् यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं तन्वानाः कुर्वाणाः पशुम् अबध्नम् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र यत्पुरुषेण हविषा' इत्युक्तम्।

**सान्वयप्रतिपदार्थः -** अस्य= मानसयागस्य, सप्त= सप्तसंख्याकाः, परिधयः= मर्यादाः, आसन्= अभवन्। त्रिःसप्त (३ x ७)= एकविंशतिसंख्याकाः, समिधः= एधांसि, कृताः= कल्पिताः। यत्= यदा, यज्ञं= मानसक्रतुं, तन्वानाः= विस्तारयन्तः, देवाः= पुरन्दरप्रभृतयः, पुरुषं= विराट्पुरुषमेव, पशुम्= पशुत्वेन, अबध्नन्= बद्धवन्तः, भावितवन्त इत्याशयः।।१५।।

**सरलार्थः-** यदा देवाः यज्ञात् उत्पन्नं पुरुषपशुं अबद्धनन् तदा तस्य सप्त परिधयः एकत्रिंशत् समिधयः च निर्मिताः।

**व्याकरणम् -**

- तन्वानाः- तन्-धातोः शानचि प्रथमाबहुवचने।
- अबध्नन्- बन्ध्-धातोः लङि प्रथमपुरुषबहुवचने।

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।**
**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥१६॥**

**पदपाठः- यज्ञेन। यज्ञम्। अयजन्त। देवाः। तानि। धर्माणि। प्रथमानि। आसन्॥ ते। ह। नाकम्। महिमानः। सचन्त। यत्र। पूर्वे। साध्याः। सन्ति। देवाः॥१६॥**



**अन्वयः-** देवाः यज्ञेन यज्ञम् अयजन्त, तानि धर्माणि प्रथमानि आसन्। ते महिमानः ह नाकं सचन्त, यत्र पूर्वे साध्याः देवाः सन्ति।

**व्याख्या-** पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् अयजन्त पूजितवन्तः। तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रुपविकाराणां धारकाणि प्रथमानि मुख्यानि आसन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते। देवाः सन्ति तिष्ठन्ति तत् नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः तदुपासकाः महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति॥

**सान्वयप्रतिपदार्थः -** देवाः= पुरन्दरप्रभृतयः सुराः, यज्ञेन= मानसेन सङ्कल्पेन, यज्ञम्= यज्ञस्वरूपं प्रजापतिम्, अयजन्त= पूजितवन्तः। तानि= प्रथितानि, प्रथमानि= मुख्यानि, धर्माणि= जगद्रूपविकाराणां धारकाणि, आसन्= अभूवन्। ते यज्ञानुष्ठातारः उपासकाः वा, ह= निश्चयेन, महिमानः= माहात्म्ययुक्ताः सन्तः, नाकं= स्वर्गं, सचन्त= प्राप्नुवन्ति, यत्र= स्वर्गे, पूर्वे= पुरातनाः, साध्याः= देवगणाः, देवाः= सुराः, सन्ति= वर्तन्ते।।१६।।

**सरलार्थः-** देवाः यज्ञेन यज्ञस्वरूपं प्रजापतिं पूजितवन्तः। स एव सर्वप्रथमः धर्मः। ते उपासकाः दिव्यं स्वर्गं प्राप्नुवन्ति, यत्र प्राचीनाः सिद्धिं प्राप्तवन्तः देवाः सन्ति।

**व्याकरणम् -**

- अयजन्त- यज्-धातोः लङि आत्मनेपदे प्रथमपुरुषबहुवचने।
- सचन्त- सच्-धातोः लङि प्रथमपुरुषबहुवचने वैदिकरूपम्।



## पाठगतप्रश्नाः

२१. पुरुषस्य मुखात् किमुत्पन्नम्।

२२. पुरुषस्य हस्ताभ्यां कौ उत्पन्नौ।

२३. पुरुषस्य ऊरुभ्यां कौ उत्पन्नौ।

२४. पुरुषस्य पादाभ्यां कौ उत्पन्नौ।

२५. पुरुषस्य कस्मात् चन्द्रमाः जातः।

२६. पुरुषस्य चक्षुषः कः जातः।

२७. पुरुषस्य मुखात् कौ उत्पन्नौ।

२८. पुरुषस्य नाभिमण्डलात् किम् उत्पन्नम्।

२९. पुरुषस्य शिरसः किम् अजायत।

३०. पुरुषस्य पादाभ्यां का उत्पन्ना।



## १८.३) इदानीं मूलपाठम् अवगच्छाम

(इतः परं षट् मन्त्राः शुक्लयजुर्वेदीया वर्तन्ते। उत्तरनारायणीयसूक्तम्। शुक्लयजुर्वेदः। ३१ अध्यायः। अत्र उवटभाष्यं महीधरभाष्यं चोपलभ्यते। अत्र उवटभाष्यांशान् गृहीत्वा प्रामुख्येन महीधरभाष्यमेव किञ्चित् परिवर्तनेन उपस्थापितमस्ति। सायणभाष्यमपि सन्धिविच्छेदादिकं कृत्वा कठिनांशान् परित्यज्य प्रदत्तमस्ति।)

**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे।।१७।।**

**व्याख्या-** अद्भ्यः संभृत इति उत्तरनारायणेन आदित्यम् उपस्थाय इति (१.३.६.२.२०) षट् कण्डिका उत्तरनारायाणम्। उपान्त्ये द्वे अनुष्टुभौ शेषाः त्रिष्टभः। आदित्य देवत्याः। पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते।

अद्भ्यः जलात् पृथिव्याः सकाशाच्च पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षणकम्। भूतपञ्चकात् यो रसः सम्भृतः पुष्टः। तथा विश्वं कर्म यस्य विश्वकर्मणः कालस्य रसात् प्रीतेः यो रसः अग्रे प्रथमं समवर्तत समभवत्। भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वमात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्चभूतानि तुष्टानि कालश्च। ततः तुष्टेभ्यः कश्चिद् रसविशेषफलरूपः उत्तमजन्मप्रदः उत्पन्नः इत्यर्थः। तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा आदित्यः एति प्रत्यहम् उदयं करोति। अग्रे प्रथमं मर्त्यस्य मनुष्यस्य सतः तस्य पुरुषमेधयाजिनः आजानदेवत्वं मुख्यं देवत्वम् सूर्यरूपेण। द्विविधा देवाः कर्मदेवाः आजानदेवाः च। कर्मणा उत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः। सृष्ट्यादौ उत्पन्नाः आजानदेवाः। ते कर्मदेवेभ्यः श्रेष्ठाः। ये शतं कर्मदेवानाम् आनन्दाः स एक आजानदेवानाम् आनन्दः। (बृह.मा. ४.१.३५) इति श्रुतेः। सूर्यादय आजानदेवाः।।१७।।

**सायणभाष्यम्-** उत्तरनारायणेन आदित्यम् उपतिष्ठते। षट् ऋचः उत्तरनारायणमन्त्राः। तत्र आद्याः तिस्रः त्रिष्टुभः। ततो द्वे अनुष्टुभौ। अन्त्या त्रिष्टुप्। उत्तरनारायणेन आदित्यम् उपस्थाय अनपेक्षमाणः अरण्यम् अभिप्रेयादिति। श्रीनारायणदेवत्याः मन्त्राः आदित्योपस्थाने विनियुक्ताः। पूर्वकल्पान्तरीयेषु पुरुषमेधयज्ञादिभावम् आपन्नः परम्पराकोटिसञ्चारीति श्रूयते। यः अद्भ्यः उदकात् सकाशात् संभृतः पृथिव्यै पृथिव्याः सकाशाच्च संभृत इति। पृथिव्युदकग्रहणं पञ्चमहाभूतानाम् उपलक्षणम्। तदन्तरप्रतिपन्ने अहनि स परिष्वक्तः प्रश्ननिरूपणाभ्याम् अध्यधिकारसिद्धत्वात्। अग्रे प्रथमं यः भूतपञ्चकात् संभृतः। भृद् भरणे। पुण्यसंस्कारानुरञ्जितभूतपञ्चकपरिवेष्टित इत्यर्थः। एवं संभृतः सन् पश्चात् रसाच्च विश्वकर्मणः समवर्तत। रसो रागः तस्माद् रसात् विश्वानि सर्वाणि कर्माणि यस्य सः विश्वकर्मा सविता तस्माद् विश्वकर्मणः रसात् सर्वजगत्कर्तुः ईश्वरस्य रागात् ईश्वरेच्छा समवर्तत समभवत्। सूक्ष्मशरीरी अवस्थितस्य उत्पद्यमानः सूक्ष्मदेहस्य त्वष्टा श्रीभगवान् आदित्यः यत् रूपं विदधत् कालात्मकः सविता विशिष्टं रूपं कुर्वन् एति आगच्छति तन्मर्त्यस्य पूर्वं मनुष्यस्य सतः देवत्वं व्यत्ययः देवत्वेन आजानं जननं उत्पत्तिरेव तस्य जन्म अभवत् इति आदित्यः स्तूयते।



**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।**
**तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥१८॥**

**व्याख्या-** एतं महान्तं सर्वोत्कृष्टं देशकालाद्यवच्छेदरहितम् पुरुषं सूर्यमण्डलस्थम् अहं वेद जानामि इति ऋषेः वचनम्। कीदृशम्। आदित्यवर्णम् आदित्यस्य इव वर्णो यस्य तम्। उपमान्तराभावात् स्वोपमम्। स्वप्रकाशम् इति भावः। तथा तमसः परस्तात्। तमोरहितम् इत्यर्थः। तमःशब्देन अविद्या उच्यते। अविद्यायाः भेददर्शनम्। तम् एव आदित्यं विदित्वा ज्ञात्वा मृत्युम् अत्येति अतिक्रामति परं ब्रह्म गच्छति। अयनाय आश्रयाय अन्यः पन्थाः मार्गो न विद्यते। अर्थात् पुरुषं विदित्वा एव मृत्युम् अतिक्रामति। इतः अन्यः कोऽपि मार्गः मृत्युराहित्याय नास्ति। सूर्यमण्डलान्तः पुरुषम् आत्मरूपं ज्ञात्वा एव मुक्तिः।।१८।।

**सायणभाष्यम्-** एवं प्रतीयमानं पुरुषं पुरि शेते इति पुरुषः तम्। अनेन प्राप्तं परिच्छेदं व्यावर्तयति- महान्तमिति। महान्तम् अपरिच्छिन्नम् अनन्तम्। आदित्यवर्ण- आदित्यस्य वर्ण इव वर्णो यस्य स आदित्यवर्णः स्वयं प्रकाश इत्यर्थः। तमसः परस्तात्। अज्ञानाकाराद् उपरि स्वतेजसा अज्ञानान्धकारम् अधःकृत्य वर्तमानम् एतं महान्तम् आदित्यान्तस्थं पूर्णं पुरुषम् एनं साक्षाद् परोक्षभूतम्, अहं- शोधित-त्वंपदार्थः अहं वेद जानामि। एतं पुरुषं महान्तम् आदित्यवर्णपुरुषं वेद। आदित्यवर्णं महान्तं पुरुषम् एतं पुरुषं वेद अवेद् इत्येवं व्यतिहारेण अहं वेद जानामि। सर्ववेदान्तैः तात्पर्येण प्रतिपाद्यार्थम् आह- तमेव विदित्वाऽतिमृत्युमिति। सहस्रशीर्षेत्यादिना यः अभिहितः परमेश्वरः तमेव विदित्वा नान्यं, तं विदित्वा एव मृत्युं मृत्युयुक्तं संसारम् अत्येति अतिक्रामति, न कर्मणा।अथ तमेव तं विदित्वा एव मृत्युम् अत्येति मृत्युम् अतिक्रम्य एति स्वस्वरूपं प्राप्नोति परब्रह्म एति गच्छति इत्युपचारः। पक्षान्तरशङ्कां निरस्यति- नेति। अन्यः पन्थाः न विद्यते अयनाय गमनाय स्वरूपप्राप्तये।।१८।।



## पाठगतप्रश्नाः

३१. अद्भ्यः सम्भृतः इति पुरुषसूक्ते उपात्ता मन्त्राः कुत आनीताः।

३२. पुरुषसूक्ते कः आदित्यरूपं प्राप्तः।

३३. देवत्वमाजानमग्रे इत्यत्र कतिविधा देवा व्याख्याकारेण उक्ताः। तद्भेदाः के।

३४. वेदाहमेतं पुरुषं महान्तम् इत्यत्र पुरुषस्य महत्त्वं किम्।

३५. आदित्यवर्णं तमसः परस्तात् इत्यत्र तमःपदार्थः कः।

३६. कं विदित्वा मृत्युम् अत्येति।

३७. नान्यः पन्थाः अयनाय विद्यते। कुत्र अयनाय। कश्च पन्थाः।



**प्रजापतिश्चरति गर्भेऽअन्तरजायमानो बहुधा वि जायते।**
**तस्य योनिं परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा।।१९।।**

**व्याख्या-** किंभूतः इति विशिष्यते। य सर्वात्मा प्रजापतिः अन्तः हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति। यश्च अजायमानः अनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेण उत्पद्यते। धीराः ब्रह्मविदः तस्य प्रजापतेः योनिः स्थानं स्वरूपं परिपश्यन्ति अहं ब्रह्मास्मि इति जानन्ति। विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि। सर्वं तदात्कम् एव इत्यर्थः।।

**सायणभाष्यम्-** प्रकर्षेण जायन्ते इति प्रजाः। तासां पतिः। गर्भे अन्तः सर्वप्राणिनाम् उदरमध्ये अन्तर्यामिरूपेण यः चरति। स च स्वरूपेण अजायमानः देहादेः जन्मनि अपि स्वयं जन्मशून्योऽपि उपाधिवशात् बहुधा बहुप्रकारेण विजायते। यद्वा अज गतिविक्षेपणयोः। स्वमायया सर्वान् अजायमानः विक्षेपयन् संमोहयन् स्वयं बहुधा विजायत इति। तस्य बहुधा वर्तमानस्यापि प्रजापतेः योनिं स्थानं स्वरूपं च धीराः सम्यक् ज्ञानिनः परिपश्यन्ति साक्षात् कुर्वन्ति। तस्मिन् प्रजापतौ हि एव स्वकारणभूते एव विश्वा विश्वानि भुवनानि भूतानि तस्थुः तिष्ठन्ति।।१९।।

**यो देवेभ्यऽआतपति यो देवानां पुरोहितः।**
**पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये।।२०।।**

**व्याख्या-** यः प्रजापतिः आदित्यरूपो देवेभ्यः अर्थाय आतपति द्योतते। अतिशयेन तेजसा तपति आदित्यरूपेण। यश्च देवानां पुरोहितः सर्वकार्येषु अग्रे नीतः। (यः देवानां पुरः अग्रे इन्द्रत्वेन स्थितः। - इति उवटः)। यश्च देवेभ्यः सकाशात् पूर्वः जातः अग्रे प्रथमम् उत्पन्नः ब्रह्मरूपेण। तस्मै रुचाय तेजसे आदित्याय नमः। कीदृशाय। रोचते असौ इति रुचः। तस्मै दीप्यमानाय। इगुपध.. (पा.३.१.१३५) इति कप्रत्ययः। तथा ब्राह्मये ब्राह्मणः अपत्यं ब्राह्मिः। इञि टिलोपः। ब्रह्मावयवभूताय ब्रह्मपुरुषापत्याय वा।।२०।।

**सायणभाष्यम्-** देवेभ्यः अर्थाय आतपति आतपं करोति प्रकाशयति च प्रकाशते। यो देवानां पुरोहितः। यश्च देवानाम् अग्रतः हितम् आचरति। पूर्वो यो देवेभ्यः। यश्च देवेभ्यः पूर्वः सर्वदेवाग्रणीः जातः। तस्मै ब्राह्मये रुचाय नमः। ब्रह्मणो योग्यं ब्राह्मं तस्मै ब्राह्मये रुचाय रोचमानाय दीप्यमानाय आदित्याय नमः।।२०।।

**रुचं ब्राह्मं जनयन्तो देवाऽअग्रे तदब्रुवन्।**
**यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे॥२१॥**

**व्याख्या-** देवाः दीप्यमानाः प्राणाः रुचं शोभनं देदीप्यमानं ब्राह्मं ब्रह्मणः अपत्यम् आदित्यं जनयन्तः उत्पादयन्तः अग्रे प्रथमं तत् वचः अब्रुवन् ऊचुः। किम् ऊचुः। ब्राह्मो जातौ (पा.६.४.१७१) इति निपातः। तत् किम् अतः आह। यो ब्राह्मणः हे आदित्य त्वा त्वाम् एवम् उक्तविधिना उत्पन्नं विद्यात् जानीयात् तस्य ब्राह्मणस्य देवाः वशे असन् वश्याः भवन्ति। आदित्यस्य उपासिता जगत्पूज्यो भवतीत्यर्थः।

**सायणभाष्यम्-** रुचं रोचमानं ब्राह्मं ब्रह्मावयवभूतं जातावित्यनिटिलोपे च ब्राह्ममिति भवति। रुचं ब्राह्मं देदीप्यमानं ब्राह्मं ब्राह्मणजातिं त्वामेवं पूर्वोक्तप्रकारेण परं ब्रह्मैव ब्राह्मणजातिरिति यो ब्राह्मणो विद्यात् तस्य ब्रह्मणस्य वशे देवाः असन् अभवत् भवन्ति। परब्रह्मवशवर्तिनो देवाः तदंशभूतस्यापि वशवर्तिनो भवन्तीत्यर्थः।।२१।।

**श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।**
**इष्णन्निषाणामुं मऽइषाण सर्वलोकं मऽइषाण॥२२॥**

**व्याख्या-** ऋषिः आदित्यः स्तुत्वा प्रार्थयते। हे आदित्य, श्रीः लक्ष्मीः च ते तव पत्न्यौ। जायास्थानीये त्वद्वशे इत्यर्थः। (अस्य पुरुषस्य एते अवयवाः इति। उवटः)। यया सर्वजनाश्रयणीयो भवति सा श्रीः श्रीयते अनया श्रीः संपद् इत्यर्थः। अहोरात्रे तव पार्श्वे पार्श्वस्थानीये। नक्षत्राणि गगनगाः ताराः तव रूपम्। तवैव तेजसा भासमानत्वात् तेजसः गोलकः सूर्यो नक्षत्राणि अम्बुगोलकाः इति ज्योतिःशास्त्रोक्तेः। अश्विनौ द्यावापृथिव्यौ तव व्यात्तम् मुखम् विकासितमुखस्थानीये अश्नुवाते व्याप्नुतः तौ अश्विनौ अश्विनौ द्यावापृथिव्यौ इमे हीदम् सर्वमश्नुवाताम् इति श्रुतेः। य ईदृशः ते त्वां याचे। इष्णन् कर्मफलम् इच्छन् सन् इषाणः इच्छुः। इषु इच्छायां विकरणव्यत्ययः। यद्वा इष आभीक्ष्ण्ये क्र्यादिः अत्र इच्छार्थः। किम् एषणीयं तत्राह। अमुं परलोकं मे मम इषाण मम परलोकः समीचीनः अस्तु इति इच्छा। अमोघेच्छात्वाद् इष्टं भवतीत्यर्थः। सर्वं मे मम इषाण सर्वलोकात्मकः अहं भवेयम् इति इच्छा इत्यर्थः। मुक्तो भवेयम् इत्यर्थः। सर्वं खल्विदं ब्रह्म इति सामश्रुतेः।।२२।।

**सायणभाष्यम्-** श्रीश्च लक्ष्मीश्च ते सवितुः तव पत्न्यौ। यया आश्रयणीयो भवति सा श्रीः। आदित्यः यया तु लक्ष्यते सा लक्ष्मीः। श्रीः शोभानुरूपा। लक्ष्मीः दीप्तिलक्षणचिद्रूपिणी। उभे ते पत्न्यौ भार्ये। ते के। अहोरात्रे ये पत्नीत्वेन कल्पिते पार्श्वे उभयपार्श्ववर्तिन्यौ ते। नक्षत्राणि अश्विन्यादीनि तव रूपं अश्विनौ द्यावापृथिव्यौ तव व्यात्तं मुख्यं मुखम्। इत एवं रूपं त्वामिदमहं याचे। इष्णं निषाणामुं म इषाण- सर्वलोकं म इषाण। एतत्पदद्वयमपि इषुधातो रूपम्। विकरणव्यत्ययश्च। इष्णन् इच्छन्



कर्मफलमिच्छन्। किं तद् इति। अमुं म इषाण-अमुं लोकं मे मदीयत्वेन इषाण इच्छ, सर्वलोकं मे मदीयत्वेन इषाण इच्छ आत्मत्वेन वा इषाण, अहम् एव इदं सर्वमिति सर्वात्मभावम् एव इच्छ इति। एवम् आदित्यः स्तूयते।।२२।।



## पाठगतप्रश्नाः

३८. प्रजापतिश्चरति गर्भे इति मन्त्रांशः कस्य सूक्तस्य। कश्चात्र प्रजापतिः।

३९. तस्य योनिं परिपश्यन्ति धीराः। अत्र कस्य योनिं पश्यन्ति। का च योनिः। के च धीराः।

४०. तस्मिन् ह तस्थुर्भुवनानि विश्वा।। कस्मिन् तस्थुः।

४१. पूर्वो यो देवेभ्यो जातः। अत्र को जातः।

४२. नमो रुचाय ब्राह्मये। इत्यत्र रुचशब्दार्थः कः। ब्राह्मये इत्यस्य मूलशब्दम् अर्थं च लिखत।

४३. तस्य देवा असन् वशे इत्यत्र कस्य वशे देवाः। किमत्र तात्पर्यम्।

४४. देवा अग्रे तदब्रुवन्। किम् अब्रुवन्।

४५. श्रीश्च ते लक्ष्मीश्च पत्न्यौ इति अत्र का श्रीः। कस्य पत्न्यौ।

---

पुरुषस्वरूपम् दुरवगाहम्। विभिन्नैः प्रकारैः तस्य प्रकटनं कर्तुं शक्यते। पुरुषसूक्तं सुप्रसिद्धं सम्प्रति अपि। सर्वत्र पूजादिषु अपि अस्य प्रयोगः अव्याहतरूपेण भवति एव। अत्र पुरुषस्वरूपद्वयम् प्रदीयते। एतेन अध्येता अवच्छेद् यद् एकस्यापि विषयस्य भिन्नशैल्या प्रकटनं सम्भवति। अतः अत्र पदत्तप्रकारात् भिन्नेन प्रकारेण छात्रः स्वस्य उत्तराणि सिद्धानि कुर्यात्। यद्यपि पुरुषस्वरूपं तदेव वर्तते। तत्र भेदो नास्ति, भेदस्तु प्रकटशैल्यामस्ति। अतः न पुनरुक्तिदोषः।

## १८.४) पुरुषस्वरूपम्

ऋग्वेदस्य दशममण्डलस्य नवतितमं सहस्रशीर्षेति षोडशर्चं सूक्तं पुरुषसूक्तम् इत्यभिधानेनाभिधीयते। अस्य सूक्तस्य देवता हि अव्यक्तमहदादिविलक्षणः चेतनः पुरुषः प्रजापतिरिति। अयं पुरुषः वैदिकपरम्परायाः पराकाष्ठा तथा परा गतिरिति स्वीक्रियते। तथाह्याम्नातं कठोपनिषदि-

महतः परमव्यक्तमव्यक्तात्पुरुषः परः।

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।।इति।।

पुरि शेते इति विग्रहे पुरुषशब्दस्य निष्पत्तिः। यथोक्तं शतपथब्राह्मणे – "अथ यस्मात् पुरुषमेधो नाममे वै लोकाः पूरयमेव पुरुषोऽयं पवते सोऽस्यां पुरि शेते तस्मात् पुरुषः।" इति। पुरुषसूक्ते तत्स्वरूपस्य विस्तररूपेण विवरणं प्राप्यते।



मानवानां सामान्यतः एकं शिरः, लोचनयुगलं तथा पादयुगलं च वर्तन्ते, परन्तु अस्य पुरुषस्य सर्वव्यापित्वात् सर्वज्ञत्वात् तथा सर्वत्र विचरणशीलत्वाच्च महती विशिष्टता वर्तते। तथाहि अस्य पुरुषस्य सहस्रं शिरांसि तथा सहस्रं नेत्राणि सहस्रं च पादानि सन्ति। अत्र सहस्रशब्दः उपलक्षणमात्रं वर्तते, सहस्रपदस्यात्र असङ्ख्यमित्यर्थः। उच्यते च-

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।

स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलम्॥इति।।

यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्य अवयवाः, तथैव अतीतागामिनोरपि कल्पयोः सर्वे विराजः अवयवा एव। स परमात्मा पुरुष एव जगतः सर्वम्, नान्यत्। जगतः परमात्मसर्वस्वत्वं भगवता श्रीकृष्णेनापि ध्वन्यते- "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (१०.४२) इति। सोऽयं सर्ववेदान्तवित् परमात्मा स्वयमेव स्वकीयया मायया विराड्-देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवः अभवत्।

अस्य विराट्पुरुषस्य अङ्गेभ्य एव निखिलप्रपञ्चस्य जनिरिति युक्तमेव तस्य महत्त्वम्। तथाहि पुरा देवाः यज्ञेन प्रपञ्चस्य सृष्टिम् इष्टवन्तः। किन्तु बाह्यद्रव्याभावात् हविषं विना यज्ञस्य असम्भवत्वात् च पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य मानसं यागं चक्रुः देवाः, उच्यते च- "यत्पुरुषेण हविषा देवा यज्ञमतन्वत" इति। तस्मादेव यज्ञात् ऋचः सामानि यजूंषि, गायत्र्यादीनि च्छन्दांसि तथा अश्वगर्दभादयश्च पशवः उत्पन्नाः। अस्य महतः पुरुषस्य मुखाद् ब्राह्मणानामुत्पत्तिः।राजन्यः क्षत्रियत्वजातिमान् पुरुषः तस्य बाहुभ्यां निष्पादितः। ऊरुभ्यां वैश्यस्य तथा पादाभ्यां शूद्रस्योत्पत्तिः। तदुक्तम्-

ब्राह्मणोऽस्य मुखामासीद्बाहू राजन्यः कृतः।

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥१३॥इति।।

एवमेव प्रजापतेः मनसः चन्द्रमाः जातः, चक्षुर्भ्यां रविः, मुखाद् इन्द्राग्नी देवौ तथा प्राणाद् वायुः जातः। अन्तरीक्षादयो लोकाः प्रजापतेः नाभेर्जाताः, शीर्ष्णश्च द्यौः उत्पन्नः, पादाभ्यां भूमिस्तथा श्रोत्रात् दिशः उत्पन्नाः। एवंरूपेण दध्याज्यादिद्रव्याणि गवादयः पशवः, ऋगादिवेदाः, ब्राह्मणादयो मनुष्याः, प्रकृतिस्थसूर्यचन्द्रादयः सर्वे एव तस्यैव प्रजापतेः अङ्गभूताः सन्तीति शिवम्।

## १८.५) पुरुषस्वरूपम्

वेद एवाखिलधर्ममूलम्। ऐहिकामुष्मिकोभयविधफलावाप्तेः अपूर्वं साधनं वेदयति भगवान् वेदः। यद्यपि तत्र कर्मकाण्डभूयिष्ठा मन्त्राः प्राचुर्येण प्राप्यन्ते तथापि आत्मतत्त्वप्रतिपादकानां मन्त्राणां नाल्पं महत्त्वमस्ति। भगवदभिन्नत्वात् परोक्षत्वात् वेदोऽयं दुरवगाहः। आत्मयाथात्म्यनिर्णय एवास्य मुख्यं लक्ष्यम्। कर्ममुख्याय कर्माणि विधत्ते साधकानां हितार्थमयं वेदः। अत एव कर्मभिः सह तत्त्वप्रतिपादनपरं सूक्तं स्थाने स्थाने समाम्नातम्। तेषु पुरुषसूक्तमतिप्रसिद्धमिति वेदविदो वदन्ति।



शुक्लयजुर्वेदस्य एकत्रिंशाध्याये सूक्तमिदमाम्नायते। ऋग्वेदस्य अष्टमाष्टके षष्ठसूक्तमिदं चकास्ति। षोडशभिः ऋङ्मन्त्रैः सुशोभते एतत् सूक्तम्। ऋषिर्नारायणः ऋचामासाम् ईक्षिता। प्रसिद्धः पुरुषोऽत्र देवता। अन्त्यायाम् ऋचि त्रिष्टुप् छन्दः, शिष्टासु तु अनुष्टुभः। अस्मिन् सूक्ते पुरुषस्वरूपं सुनिरूपितम्। ननु कोऽयं निरूप्यः पुरुष इति चेदुच्यते- पुरं शरीरं तस्मिन् शेते इति पुरुषः। तदुक्तं महाभारते-

नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्।

व्याप्य शेते महात्मा यस्तस्मात् पुरुष उच्यते।। इति।

यद्वा अस्तेः व्यत्यस्ताक्षरयोगात् आसीत् पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः पुरुष इति। तदाह श्रुतिः- पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमिति। अथवा पुरुषु भूरिषु उत्कर्षशालिषु सत्त्वेषु सीदतीति। पुरुणि फलानि सनोति इदातीति वा। पुरुणि भुवनानि संहारसमये स्यति अन्तं करोतीति वा , पूर्णत्वात् पूरणाद् वा सदनात् वा पुरुष इति।

उपर्युक्तार्थविशिष्टः अव्यक्तमहदादिविलक्षणः चेतनः सर्वप्राणिसमष्टिरूपः ब्रह्माण्डदेहो विराडाख्यः पुरुषः अनन्तैः शिरोभिः चक्षुभिः चरणैश्च चकासद् अस्ति। अनेन पुरुषस्य सर्वव्यापित्वमुच्यते। स्मृतावपि आकाशं, वायुः, अग्निः, सलिलं, महिः, ज्योतींषि, सत्त्वानि दिशः, द्रुमाः इत्येतानि सर्वाणि पुरुषस्य शरीरत्वेन कल्पितानि। ईदृशानुभावोऽयं पुरुषः सर्वेषां प्राणिनां नाभेः सकाशाद् दशाङ्गुलमतिक्रम्य हृदि तिष्ठन्नस्ति। अत्रार्थे अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः, तत्सृष्ट्वा तदेवानुप्रविशत्, इत्यादिश्रुतिरेव प्रमाणम्। अथवा ब्रह्माण्डगोलकरूपां भूमिं सर्वतः तिर्यक् ऊर्ध्वम् अधश्च व्याप्य विराजते पुरुषोऽयम्। एतेन ब्रह्मवादिनां ब्रह्मण इव पुरुषस्य जगदुपादनत्वं श्रुतिसम्मतम्।

यदिदं वर्तमानं जगद् भासते तत्सर्वं पुरुषस्वरूपमेव। एतेन अज्ञानिनां दृष्ट्या यज्जगत्, ज्ञानिदृशा तत्पुरुष एव। रज्जौ सर्पज्ञानमिव पुरुषे जगज्ज्ञानम् अज्ञानम्। न केवलं वर्तमानम्, अतीतं भविष्यं च जगतः पुरुष एव इति वदन्त्या श्रुत्या पुरुषस्य नित्यत्वमाम्नातम्। अयमेव पुरुषः अमृतत्वस्य तथा मुक्तेरीशः। यो हि मोक्षेश्वरो न स म्रियते। यतः प्राणिनां भोग्येन निमित्तेन स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति पुरुषः, ततः प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारात् नेदं तस्य वास्तविकं रूपम्।

अतीतानागतवर्तमानरूपां निखिलं जगत् पुरुषस्य स्वकीयसामर्थ्यविशेषः। वास्तवः पुरुषस्तु इतोऽप्यतिशयेन अधिकः। अस्य कालत्रयवर्तीनि प्राणिजातानि चतुर्थांशत्वेन कल्पितानि। अवशिष्टः त्रिपाद् विनाशरहितं सत् स्वप्रकाशरूपे व्यवतिष्ठते इति शम्।

## १८.६) पुरुषसूक्तस्य सारांशः

शुक्लयजुर्वेदस्य एकत्रिंशत्तमेऽध्याये वर्तते पुरुषसूक्तम्। तत्र सूक्ते षोडशमन्त्रा आम्नाताः। तत्र नारायणनाम्ना ऋषिः पुरुषो देवता। अन्त्यो मन्त्रः त्रिष्टुप्छन्दसा आम्नातः।

## ॥पुरुषसूक्तम्॥





अनन्तपाद-लोचन-मस्तकसमन्वितः परमेश्वरः पुरुषः ब्रह्माण्डगोलकरूपां धरित्रीं सर्वतो व्याप्य दशाङ्गुलपरिमितस्थानम् अतिक्रम्य प्राणिनां हृदि अवस्थितः। यत् सर्वम् उत्पन्नं, यद् वा सर्वम् उत्पत्तिमेष्यति तत् सर्वं पुरुष एव। अतीतानागतवर्तमानकालिकवस्तूनि सर्वाणि एव पुरुषः। अयं पुरुषः अमरत्वस्य स्वामी। अपिच ये अन्नेन वर्धन्ते तेषामपि पुरुषोऽयम् ईश्वरः। अतीतादिकालत्रयवर्तीनि प्राणिजातानि अस्य चतुर्थोऽशः। अवशिष्टं त्रिपाद् विनाशरहिते स्वप्रकाशस्वरूपे स्वर्लोके विद्यते। त्रिकालात्मकं जगदिदं पुरुषस्य महिमा। नेदं पुरुषस्य वास्तवं स्वरूपम्। अतो महिम्नोऽपि अतिशयेन वर्तते पुरुषः। त्रिचतुर्थांशः ब्रह्मस्वरूपः पुरुषोऽयं अज्ञानकार्यात् संसारात् बहिर्भूतः अत्रत्यैः गुणदोषैः अस्पृष्टः सन् उपरिष्टात् अमृते दिवि उत्कर्षेण स्थितवान्। तस्यास्य सोऽयं चतुर्थांशः इह मायामये लोके पुनरभवत्। सृष्टिसंहाराभ्यां पुनः पुनः आगच्छति। ततः मायायागागत्यानन्तरं देवमनुष्यादिरूपेण विविधः सन् चेतनाचेतने अभिलक्ष्य चतुर्दिक्षु व्याप्तवान् अस्ति।

तस्माद् आदिपुरुषाद् विराड् उत्पन्नः। तमेव देहमधिकरणं कृत्वा यत्र एकः पुमान् अजायत। स सर्वज्ञः स्वकीयमायया विराड्देहं विराड्रूपं सृष्ट्वा तत्र स्वयमेव जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी जीवोऽभूत्। स विराडातिरिक्तो मनुष्यादिरूपोऽभूत्। स क्रमशः मनुष्यादीन् जीवान्, भूमिं, जीवशरीराणि च ससर्ज।

शरीरेषु उत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं तं पुरुषं हविष्ट्वेन सङ्कल्प्य मानसं यागं सङ्कल्पितवन्तः। तस्य यागस्य ग्रीष्मर्तुः इन्धनविशेषः, वसन्तर्तुः आज्यं तथा शरदृतुरासीद् हविः। किञ्च अस्य साङ्कल्पिकयागस्य गायत्र्यादीनि सप्त छन्दांसि परिधय आसन्। द्वादश मासाः पञ्चर्तवः, त्रय इमे लोका आदित्यश्च एकविंशतिः पदार्थाः एकविंशतिदारुयुक्तेन्धनत्वेन भाविताः। यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्ध्वा बर्हिषं मानसे यज्ञे सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूला देवा ऋषयश्च प्रेक्षितवन्तः। तस्मात् दधिमिश्रितमाज्यं सम्पादितम्। तेन सम्भृतेन पृषदाज्येन वायव्यान् आरण्यान् ग्राम्यान् च पशून् ते देवा उत्पादितवन्तः। पुनरपि तस्माद् मुखात् खग-मृग-छाग-मेष-हय-गवय-गर्धव-धेनवः जाताः। क्रमशः गायत्र्यादीनि छन्दांसि समुत्पन्नानि। ऋगादिदेवा अपि तस्माद् यज्ञाद् जज्ञिरे।

यज्ञपुरुषस्य मुखात् ब्राह्मणः, बाहुभ्यां क्षत्रियः, उरुभ्यां वैश्यः, पादाभ्यां च शूद्रः इति वर्णचतुष्टयं समुत्पन्नम्। पुनरपि तस्य मनसः सकाशात् चन्द्रमाः, चक्षुषः सूर्यः, मुखादिन्द्रः अग्निश्च, कर्णाभ्यां वायुः, प्राणश्च अजायन्त। यथा देवाः प्रजापतेः मनःप्रभृतिभ्यः चन्द्रादीन् कल्पितवन्तः, तन्नाभेः अन्तरीक्षं, शिरसः स्वर्गं, पादाभ्यां भूमिं, प्राच्यादिदिशस्तथा भूर्भुवादिलोकान् देवा उत्पादितवन्तः इति। तथाहि पुरुषसूक्ते उक्तम्-

नाभ्यासीदन्तरीक्षं शीर्ष्णो द्यौः समवर्तत।

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत।।इति।।





## पाठसारः

अस्मिन् पुरुषसूक्ते आदौ पुरुषस्वरूपं वर्णितम्। स विराडाख्यः पुरुषः सहस्रशिरोयुक्तः सहस्राक्षियुक्तः। यद्यपि स समग्रब्रह्माण्डं व्याप्य तिष्ठति तथापि दशाङ्गुलपरिमितस्थानम् अधिकं वर्तते। अनेन तस्य ब्रह्माण्डात् बहिरपि विद्यमानत्वं ज्ञायते। यत् किमपि दृश्यमानं तत् सर्वमपि स पुरुष एव। स च भूतभविष्यदतीतकालीनः। एवं तस्य अमरणधर्मित्वं ज्ञायते। अस्य एवं महिमा यत् अस्य ऐश्वर्यात् अपि बृहत्। स सर्वेषु स्थावरजङ्गमवस्तुषु विद्यमानः। आदिपुरुषात् विराट् उत्पन्नः, विराजः जीवात्मा उत्पन्नः अभवत्। उत्पन्नात् परमेव स स्वयमेव विराजः देवमनुष्यरूपेण पृथक्कृतवान्। तदनन्तरं पृथिवी उत्पन्ना, ततः जीवात्मनः कृते शरीरं निर्मितम्। यदा देवाः पुरुषरूपहविषा यज्ञं सम्पादितवन्तः तदा वसन्तर्तुः घृतं, ग्रीष्मर्तुः ईन्धनं, शरदृतुः हविरासन्। ततः पुरुषस्य जलेन स्नानादिकं वर्णितम्। ततः पुरुषः वायौ विचरतः पक्षिणः, आरण्यकान् पशून्, ग्राम्यान् पशून् च सृष्टवान्। एवं सर्वहुतः यज्ञात् ऋगादिवेदान्तर्भूतमन्त्राः गायत्र्यादिछन्दांसि च अजायन्त। तस्मात् यज्ञात् अश्वाः पशवः गावः इत्यादयः अजायन्त। अस्य पुरुषस्य मुखात् ब्राह्मणाः, बाहुभ्यां क्षत्रियाः, ऊरुभ्यां वैश्याः, पादाभ्यां शूद्राः, नाभिप्रदेशात् अन्तरिक्षमण्डलं, शिरसः द्युलोकः, पादाभ्यां भूमिः, कर्णाभ्यां दिशः अजायन्त। एवं लोकाः रचिताः। सूक्तस्य अन्ते एवं वर्णितं यत् देवाः यज्ञेन यज्ञपुरुषं पूजितवन्तः। स एव धर्मः। तस्य उपासकाः स्वर्गलोकं प्राप्नुवन्ति।



## पाठान्तप्रश्नाः

१. पुरुषसूक्तस्य सारं लिखत।
२. पुरुषस्य कस्मात् अङ्गात् किं किम् उत्पन्नम् इति मन्त्रानुसारेण व्याख्यात।
३. सर्वहुतः यज्ञात् किं किम् उत्पन्नम् इति मन्त्रानुसारेण व्याख्यात।
४. पुरुषस्वरूपं वर्णयत।
५. एतावानस्य महिमा...इति प्रतीकोद्धृतम् मन्त्रं सम्पूर्णम् उद्धृत्य व्याख्यात।
६. यज्ञेन यज्ञमयजन्त देवाः... इति प्रतीकोद्धृतम् मन्त्रं सम्पूर्णम् उद्धृत्य व्याख्यात।
७. सप्तास्यासन् परिधयस्त्रि... इति प्रतीकोद्धृतम् मन्त्रं सम्पूर्णम् उद्धृत्य व्याख्यात।
८. वेदाहमेतं पुरुषम् इति प्रतीकोद्धृतम् मन्त्रं सम्पूर्णम् उद्धृत्य व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि



**उत्तरपूगः-१**

१. नारायणः ऋषिः, अनुष्टुप् छन्दः, १६-त्रिष्टुप्, विराट् पुरुषः देवता।

२. ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थितः।

३. स्वामी।

४. सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि।

५. दिवि।

६. जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्।

७. विश्वानि।

८. उत्पूर्वकात् इधातोः लङि प्रथमपुरुषैकवचने।

९. साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्।

१०. शरीराणि।

**उत्तरपूगः- २**

११. वसन्तः।

१२. ग्रीष्मः।

१३. शरत्।

१४. साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकुलाः ऋषयः मन्त्रद्रष्टारः।

१५. सर्वहुतः यज्ञात्।

१६. उभयोः दन्ताः येषां ते।

१७. पृष्-धातोः शतृप्रत्यये, पृषत् च तद् आज्यं च।

१८. प्रपूर्वकात् उक्ष्-धातोः लङि प्रथमपुरुषबहुवचने।

१९. वायुशब्दात् यत्प्रत्ययः, ततः द्वितीयाबहुवचनम्।

२०. जन्-धातोः लिटि प्रथमपुरुषबहुवचने।

**उत्तरपूगः- ३**

२१. ब्राह्मणः।

२२. क्षत्रियौ।

२३. वैश्यौ।

२४. शूद्रौ।

२५. मनसः।

२६. सूर्यः।



२७. इन्द्रः अग्निश्च।

२८. अन्तरिक्षम्।

२९. द्यौः।

३०. भूमिः।

**उत्तरपूगः-४**

३१. अद्भ्यः सम्भृतः इति पुरुषसूक्ते उपात्ता षट् मन्त्राः शुक्लयजुर्वेदीयाः वर्तन्ते। तत्र पुरुषसुक्तस्यैव अंशभूतः। तत्र उत्तरनारायणीयसूक्तम्। शुक्लयजुर्वेदः। ३१ अध्यायः।

३२. पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः।

३३. देवत्वमाजानमग्रे इत्यत्र द्विविधा देवा व्याख्याकारेण उक्ताः। कर्मदेवाः आजानदेवाः च। कर्मणा उत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः। सृष्ट्यादौ उत्पन्नाः आजानदेवाः। ते कर्मदेवेभ्यः श्रेष्ठाः।

३४. वेदाहमेतं पुरुषं महान्तम् इत्यत्र पुरुषस्य महत्त्वं हि सर्वोत्कृष्टत्वं देशकालाद्यवच्छेदरहितत्वम्।

३५. आदित्यवर्णं तमसः परस्तात् इत्यत्र तमःपदार्थः अविद्या।

३६. यः तमसः परः तम् महान्तम् देशकालाद्यवच्छेदरहितम् आदित्यवर्णं पुरुषं विदित्वा मृत्युम् अत्येति।

३७. नान्यः पन्थाः अयनाय विद्यते। मृत्योः अतिक्रमाया, मृत्युराहित्याय। पन्थाः - यः तमसः परः तम् महान्तम् देशकालाद्यवच्छेदरहितम् आदित्यवर्णं पुरुषं विदित्वा एव मरणातिक्रमः नान्यथा।

**उत्तरपूगः-५**

३८. प्रजापतिश्चरति गर्भे इति मन्त्रांशः पुरुषसूक्तस्य। परन्तु वस्तुतः शुक्तयजुर्वेदे विद्यमानस्य नारायणीयसूक्तस्यास्ति। प्रजापतिरत्र सर्वात्मा आदित्यः पुरुषः, यो मायया प्रपञ्चरूपेण उत्पद्यते।

३९. पुरुषसूक्तोक्तपुरुषस्य योनिं स्थानं स्वरूपं परिपश्यन्ति धीराः ब्रह्मविदः, अहं ब्रह्मास्मि इति जानन्ति।

४०. तस्मिन् ह तस्थुर्भुवनानि विश्वा।। इत्यत्र कारणात्मनि ब्रह्मणि पुरुषे तस्थुः।

४१. पूर्वो यो देवेभ्यो जातः। अत्र यो देवेभ्यः आतपति, यो देवां पुरोहितः स प्रजापतिः जातः।

४२. नमो रुचाय ब्राह्मये। इत्यत्र रोचते असौ इति रुचः, दीप्यमानः इति रुचशब्दार्थः। ब्राह्मये इत्यस्य मूलशब्दः ब्राह्मिः। ब्रह्मणः अपत्यं ब्राह्मिः।

४३. देवाः ब्रह्मणः अपत्यम् आदित्यम् उत्पाद्य उक्तवन्तो यद् यो ब्राह्मणः आदित्यम् उक्तविधिना उत्पन्नम् जानीयात् तस्य देवा वशे स्युः। आदित्यस्य उपासको जगत्पूज्यो भवेत् इति अत्र तात्पर्यम्।



४४. देवाः ब्रह्मणः अपत्यम् आदित्यम् अग्रे उत्पाद्य अब्रुवन् यद् यो ब्राह्मणः आदित्यम् उक्तविधिना उत्पन्नम् जानीयात् तस्य देवा वशे स्युः इति। आदित्यस्य उपासको जगत्पूज्यो भवेत् इति अत्र तात्पर्यम्।

४५. श्रीश्च ते लक्ष्मीश्च पत्न्यौ इति अत्र आदित्यः पुरुषः यया सर्वजनाश्रयणीयो भवति सा श्रीः। श्रीयते अनया श्रीः संपद् इत्यर्थः। आदित्यस्य पुरुषस्य प्रजापतेः पत्न्यौ।

## ॥ इति अष्टादशः पाठः ॥



# १९

# ॥देवीसूक्तं श्रद्धासूक्तं च॥

## प्रस्तावना

भारतीयजीवने संस्कृतसाहित्ये च वेदानां स्थानं मूर्ध्नि वर्तते। भारते धर्मव्यवस्था वेदायत्ता एव। वेदो धर्मनिरूपणे पृथक् प्रमाणम्। स्मृत्यादयः तु वेदमूलकतया प्रामाण्यं भजन्ते। अत एव श्रुतिस्मृत्योः विरोधे सति श्रुतिरेव गरीयसी। न केवलं धर्ममूलकतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतया अत्युच्चतत्त्वप्रतिपादकतया च आदरविशेषं लभते सदा। प्राचीनानि धर्मसमाज-व्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। विद्यन्ते धर्मादयः पुरुषार्थाः यैः ते वेदाः इति। सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह। इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकम् उपायं यो वेदयति स वेद इति। तथाहि कारिका -

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

ते ह वेदाः चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति।

**अस्मिन् पाठे देवीसूक्तं श्रद्धासूक्तं चेति सूक्तद्वयम् अन्तर्भवति।** श्रद्धासूक्तस्य प्रस्तावनादिकम् पाठस्य उत्तरभागे विद्यते। प्रारम्भे देवीसूक्तमस्ति।

ऋग्वेदस्य दशममण्डलस्य पञ्चविंशत्यधिकैकशततमं सूक्तं वाक्-सूक्तम् अस्ति। प्रकृतसूक्तस्य अस्य ऋषिः आम्भृणी वाग्। त्रिष्टुभादिना छन्दसा सूक्तम् इदम् अस्ति। प्रकृतसूत्रस्य अस्य देवता आत्मा। एवञ्च प्रकृतपाठे अस्मिन् देवीसूक्तस्य व्याख्यानं वर्तते। व्याकरणविचारोऽपि स्थाने स्थाने कृतोऽस्ति अध्येतॄणां सुबोधाय।



## उद्देश्यानि

एतं पाठं पठित्वा भवान् -

- सूक्तस्थानां मन्त्राणां संहितापाठं ज्ञास्यति।
- सूक्ते विद्यमानानां मन्त्राणां पदपाठं ज्ञास्यति।
- सूक्तस्थानां मन्त्राणाम् अन्वयं कर्तुं समर्थो भवेत्।
- सूक्तस्थानां मन्त्राणां व्याख्यानं कर्तुं समर्थो भवेत्।



- सूक्ते विद्यमानानां मन्त्राणां सरलार्थं ज्ञास्यति।
- मन्त्रे स्थितं व्याकरणं ज्ञातुं समर्थो भवेत्।
- सूक्ततात्पर्यं सूक्ततत्त्वं च अवगच्छेत्।
- सूक्तार्थं ज्ञात्वा सूक्तमहिमानम् ज्ञास्यति।

## ॥देवीसूक्तम्॥

ऋषिः- वाक्। छन्दः- त्रिष्टुप्, २ जगती। देवता- वाक्।

## ११.१) अधुना मूलपाठं पठाम

**अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।**
**अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥१**

**अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।**
**अहं दधामि द्रविणं हविष्मते सुप्राव्ये ३ यजमानाय सुन्वते॥२**

**अहं राष्ट्री संगमनी वदेवीसूक्तम्सूनां चिकितुषी प्रथमा यज्ञियानाम्।**
**तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्॥३**

**मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।**
**अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि॥४**

**अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।**
**यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥५**

**अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ।**
**अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश॥६**

**अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वऽन्तः समुद्रे।**
**ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि॥७**



**अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव॥८॥**

## १९.२) इदानीं मूलपाठम् अवगच्छाम

**अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।**
**अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥१॥**

**पदपाठः - अहम्। रुद्रेभिः। वसुऽभिः। चरामि। अहम्। आदित्यैः। उत। विश्वऽदेवैः॥**

**अहम्। मित्रावरुणा। उभा। बिभर्मि। अहम्। इन्द्राग्नी इति। अहम्। अश्विना। उभा॥**

**१॥**

**अन्वयः** - अहं रुद्रेभिः वसुभिः चरामि, अहम् आदित्यैः उत् विश्वदेवैः (चरामि), अहं मित्रावरुणा उभा विभर्मि, अहम् इन्द्राग्नी अहम् उभा अश्विना (बिभर्मि)।

**व्याख्या-** अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद् ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैरेकादशभिः। इत्थंभावे तृतीया। तदात्मना चरामि। एवं वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम्। तथा ब्रह्मीभूता बिभर्मि धारयामि। इन्द्राग्नी अपि अहम् एव धारयामि। उभा उभौ अश्विना अश्विनावपि अहम् एव धारयामि। मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं स दृश्यते। माया च जगदाकारेण विवर्तते। तादृश्या मायया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योपपत्तिः॥

**सरलार्थः-** अहं (वागाम्भृणी) रुद्रगणैः सह रुद्रात्मिका भूत्वा विचरामि। अहं वसुगणैः, आदित्यगणैः, विश्वदेवगणैः सह तत्तदात्मिका भूत्वा विचरामि। अहं मित्रवरुणयोः उभयोः धारकः। अहमेव इन्द्राग्न्योः उभयाश्विनीकुमारयोः च धारकः अस्मि।

**व्याकरणम् -**

- मित्रावरुणा- मित्राश्च वरुणश्च मित्रावरुणा। मित्रावरुणौ इत्यस्य स्थाने वैदिकं रूपमिदम्।
- उभा- उभौ इत्यस्य वैदिकं रूपम्।
- अश्विना- अश्विनौ इत्यस्य वैदिकं रूपमिदम्।
- बिभर्मि- भृ-धातोः लटि उत्तमपुरुषैकवचने बिभर्मि इति रूपम्।
- रुद्रेभिः- रुद्रशब्दस्य तृतीयाबहुवचने वैदिकं रूपमिदम्।



**अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।**
**अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते॥२॥**

**पदपाठः - अहम्। सोमम्। आहनसम्। बिभर्मि। अहम्। त्वष्टारम्। उत। पूषणम्। भगम्॥ अहम्। दधामि। द्रविणम्। हविष्मते। सुप्रऽअव्ये। यजमानाय। सुन्वते॥२॥**

**अन्वयः** - अहम् आहनसं सोमं बिभर्मि, अहं त्वष्टारम् उत पूषणं भगम्, (बिभर्मि)। अहं हविष्मते सुप्राव्ये सुन्वते यजमानाय द्रविणं दधामि।

**व्याख्या-** आहनसमाहन्तव्यमभिषोतव्यं सोमं यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोममहमेव बिभर्मि। तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे। सुन्वते सोमाभिषवं कुर्वते। 'ईदृशाय यजमानाय द्रविणं धनं यागफलरूपमहमेव दधामि धारयामि। एवञ्च ब्रह्मणः फलदातृत्वं" फलमत उपपत्तेः" (ब्र. सू. ३. ३. ३८) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम्।

**सरलार्थः-** अहं ताडनकारिका सोमं त्वष्टारं पूषां भगं च बिभर्मि। अहं हविर्युक्ता, उत्तमहविषः प्रापयिता, सोमाभिषवकारिणां यजमानानां कृते धनं धारयामि अथवा सम्पादयामि।

**व्याकरणम् -**

- आहनसम्- आपूर्वकात् हन्-धातोः असुन्प्रत्यये आहनसम् इति रूपम्।
- हविष्मते- हविष्-शब्दस्य मतुप्प्रत्यये चतुर्थ्येकवचने हविष्मते इति रूपम्।
- सुप्राव्ये- सुपूर्वकात् प्रपूर्वकात् अव्-धातोः ईप्रत्यये चतुर्थ्येकवचने सुप्राव्ये इति रूपम्।
- सुन्वते- सु-धातोः श्नुप्रत्यये शतृप्रत्यये च चतुर्थ्येकवचने सुन्वते इति रूपम्।

**अहं राष्ट्री सङ्गमनी वदेवीसूक्तम्सूनां चिकितुषी प्रथमा यज्ञियानाम्।**
**तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्॥३॥**

**पदपाठः - अहम्। राष्ट्री। सम्ऽगमनी। वसूनाम्। चिकितुषी। प्रथमा। यज्ञियानाम्॥ ताम्। मा। देवाः। वि। अदधुः। पुरुऽत्रा। भूरिऽस्थात्राम्। भूरि। आऽवेशयन्तीम्॥३॥**

**अन्वयः** - अहं राष्ट्री, वसूनां सङ्गमनी, चिकितुषी, यज्ञियानां प्रथमा। तां भूरिस्थात्रां भूरि आवेशयन्तीं मा देवाः पुरुत्रा वि अदधुः।

**व्याख्या-** अहं राष्ट्री। ईश्वरनामैतत्। सर्वस्य जगत ईश्वरी। तथा वसूनां धनानां सङ्गमनी सङ्गमयित्र्युपासदेवीसूक्तम्कानां प्रापयित्री। चिकितुषी यत् साक्षात् कर्त्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया साक्षात्कृतवती। अत एव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या या एवङ्गुणविशिष्टाहं तां मां भूरिस्थात्रां बहुभावेन प्रपञ्चात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातान्यावेशयन्तीं जीवभावेनात्मानं



प्रवेशयन्तीमीदृशीं मां पुरुत्रा बहुषु देशुषु व्यदधुर्देवाः विदधति कुर्वन्ति। उक्तप्रकारेण वैश्वरूप्येणावस्थानात्। यद्यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः।

**सरलार्थः-** अहं राष्ट्री, धनस्य संग्राहिका, चैतन्यवती, यज्ञार्हगणेषु मुख्या। तादृशी गुणविशिष्टा, बहुरूपेण बहुवस्तुषु अवस्थिता। मां देवाः बहुस्थाने स्थापयति।

**व्याकरणम् -**

- चिकितुषी- किद्-धातोः क्वसुप्रत्यये ङीपि प्रथमैकवचने चिकितुषी इति रूपम्।
- पुरुत्रा- पुरुशब्दात् सप्तम्यर्थे त्राप्रत्यये पुरुत्रा इति रूपम्।
- व्यदधुः- विपूर्वकात् धा-धातोः लुङि प्रथमपुरुषबहुवचने व्यदधुः इति रूपम्।

**मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।**
**अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि॥४॥**

**पदपाठः - मया। सः। अन्नम्। अत्ति। यः। विऽपश्यति। यः। प्राणिति। यः। ईम्। शृणोति। उक्तम्॥ अमन्तवः। माम्। ते। उप। क्षियन्ति। श्रुधि। श्रुत। श्रद्धिऽवम्। ते। वदामि॥४॥**

**अन्वयः -** यः विपश्यति, यः प्राणिति, यः इम् उक्तं शृणोति, सः मया अन्नम् अत्ति। अमन्तवः ते माम् उप क्षियन्ति। हे श्रुत, श्रुधि, ते श्रद्धिवं वदामि।

**व्याख्या-** योऽन्नमत्ति सः भोक्तृशक्तिरूपया मयैवान्नमत्ति। यश्च विपश्यति। आलोकयतीत्यर्थः। यश्च प्राणिति श्वासोच्छ्वासरूपव्यापारं करोति सोऽपि मयैव। यश्चोक्तं शृणोति। ये ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवोऽमन्यमाना अजानन्त उपक्षियन्ति। उपक्षीणाः संसारेण हीनाः भवन्ति। माममन्तवो मद्विषयज्ञानरहिता इत्यर्थः। हे श्रुत विश्रुत सखे श्रुधि। मया वक्ष्यमाणं शृणु। किं तच्छ्रोतव्यम्। श्रद्धिवम्। श्रद्धिः श्रद्धा। तया युक्तं श्रद्धायत्नेन लभ्यमित्यर्थः। ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि।

**सरलार्थः-** यः अन्नं खादति, पश्यति, प्राणान् धारयति, उक्तविषयान् शृणोति, स मया एव एतत् सर्वं कार्यं करोति। मम महिमानं ये न जानन्ति, ते विनश्यन्ति। हे विश्रुत, शृणोतु, श्रद्धायाः विषयम् अहं युष्माकं समीपे वदामि।

**व्याकरणम् -**

- अत्ति- अद्-धातोः लटि प्रथमपुरुषैकवचने अत्ति इति रूपम्।
- विपश्यति- विपूर्वकात् दृश्-धातोः लटि प्रथमपुरुषैकवचने विपश्यति इति रूपम्।
- प्राणिति- प्रपूर्वकात् अन्-धातोः लटि प्रथमपुरुषैकवचने प्राणिति इति रूपम्।



- शृणोति- 'श्रु श्रवणे' इति धातोः लटि प्रथमपुरुषैकवचने शृणोति इति रूपम्।
- उपक्षियन्ति- उपपूर्वकात् क्षि-धातोः लटि प्रथमपुरुषबहुवचने उपक्षियन्ति इति रूपम्।
- श्रुधि- श्रु-धातोः लोटि मध्यमपुरुषैकवचने श्रुधि इति रूपम्। शृणु इत्यस्य वैदिकं रूपमिदम्।
- अमन्तवः- न मन्तवः अमन्तवः इति रूपम्।



## पाठगतप्रश्नाः

१. देवीसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।

२. देवीसूक्ते अहंपदेन कः परामृश्यते।

३. अश्विनौ इत्यस्य वैदिकं रूपं किम्।

४. उभा इत्यस्य लौकिकं रूपं किम्।

५. रुद्रशब्दस्य तृतीयाबहुवचने वैदिकं रूपं किं भवति।

६. रुद्रैः सह अहं(वागाम्भृणी) कथं चरामि।

७. आहनसम् इत्यस्य कः अर्थः।

८. सुप्राव्ये इति रूपं कथं स्यात्।

९. वसूनाम् इत्यस्य कः अर्थः।

१०. यज्ञियानाम् इत्यस्य कः अर्थः।

११. चिकितुषी इति रूपं कथं सिद्ध्येत्।

१२. अमन्तवः इत्यस्य कः अर्थः।

१३. प्राणिति इति रूपं कथं सिद्ध्येत्।

१४. श्रुधि इत्यस्य लौकिकं रूपं किम्।

१५. पुरुत्रा इति रूपं कथं भवेत्।

---

**अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।**
**यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥५॥**



**पदपाठः - अहम्। एव। स्वयम्। इदम्। वदामि। जुष्टम्। देवेभिः। उत। मानुषेभिः॥ यम्। कामये। तम्ऽतम्। उग्रम्। कृणोमि। तम्। ब्रह्माणम्। तम्। ऋषिम्। तम्। सुऽमेधाम्॥५॥**

**अन्वयः** - अहम् एव स्वयं देवेभिः उत मानुषेभिः जुष्टम् इदं वदामि। यं कामये तं तम् उग्रं कृणोमि। तं ब्रह्माणं, तम् ऋषिं, तं सुमेधाम् (कृणोमि)।

**व्याख्या-** अहं स्वयमेवेदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि। देवेभिः देवैरिन्द्रादिभिरपि जुष्टं सेवितम्। उतापि च मानुषेभिः मनुष्यैरपि जुष्टम्। ईदृग्वस्त्वात्मिकाहं यं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं तं पुरुषमुग्रं कृणोमि। सर्वेभ्योऽधिकं करोमि। तमेव ब्रह्माणं स्रष्टारं करोमि। तमेव ऋषिमतीन्द्रियार्थदर्शिनं करोमि। तमेव सुमेधां शोधनप्रज्ञं च करोमि।

**सरलार्थः-** अहं स्वयमेव देवैः मनुष्यैश्च अभीष्टम् इदं वाक्यं वदामि। अहं यमिच्छामि तमेव बलवन्तं, ब्रह्माणं, मन्त्रद्रष्टारं, मेधाविनं च करोमि।

**व्याकरणम् -**

- जुष्टम्- जुष्-धातोः क्तप्रत्यये द्वितीयैकवचने जुष्टम् इति रूपम्।
- कृणोमि- कृ-धातोः लटि उत्तमपुरुषैकवचने करोमि इत्यस्य वैदिकं रूपमिदम्।
- सुमेधाम्- शोभना मेधा यस्य तम् इति बहुव्रीहिः।
- देवेभिः- देवैः इत्यस्य वैदिकं रूपमिदम्।
- मानुषेभिः- मानुषैः इत्यस्य वैदिकं रूपमिदम्।
- कामये- कम्-धातोः लटि आत्मनेपदे उत्तमपुरुषैकवचने कामये इति रूपम्।

**अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ।**
**अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश॥६॥**

**पदपाठः - अहम्। रुद्राय। धनुः। आ। तनोमि। ब्रह्मऽद्विषे। शरवे। हन्तवै। ऊँ इति॥ अहम्। जनाय। सऽमदम्। कृणोमि। अहम्। द्यावापृथिवी इति। आ। विवेश॥६॥**

**अन्वयः** - अहं ब्रह्मद्विषे शरवे हन्तवै रुद्राय धनुः आ तनोमि। अहं जनाय समदं कृणोमि। अहं द्यावापृथिवी आ विवेश।

**व्याख्या-** पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य। षष्ठ्यर्थे चतुर्थी। महादेवस्य धनुश्चापमहमातनोमि। ज्ययाततं करोमि। किमर्थम्। ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै हन्तुं हिंसितुम्। 'शॄ हिंसायाम्' इत्यस्मात् 'शॄस्वस्निहि' इत्यादिना उप्रत्ययः।

'क्रियाग्रहणं कर्त्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। उशब्दः पूरकः। अहमेव समदम्। समानं माद्यन्त्यस्मिन्निति समत्सङ्ग्रामः। स्तोतृजनार्थे शत्रुभिः सह सङ्ग्राममहमेव कृणोमि करोमि। तथा द्यावापृथिवीं दिवं च पृथिवीं चान्तर्यामितयाहमेवाविवेश प्रविष्टवती।

**सरलार्थः-** अहं रुद्राय ब्रह्मद्वेषकारिणं घतकं शत्रुं हन्तुं तस्य धनुषं गृह्णामि। अहमेव जनानां कृते संग्रामं करोमि। अहमेव द्युलोकं भूलोकं च प्रविशामि।

**व्याकरणम् -**

- तनोमि- तन्-धातोः लटि उत्तमपुरुषैकवचने तनोमि इति रूपम्।
- शरवे- शृ-धातोः उप्रत्यये शरुः इति जाते चतुर्थ्येकवचने शरवे इति रूपम्।
- हन्तवै- हन्-धातोः तुमुन्प्रत्ययार्थे वैदिके तवैप्रत्यये हन्तवै इति रूपम्।
- कृणोमि- कृ-धातोः लटि उत्तमपुरुषैकवचने करोमि इत्यस्य वैदिकं रूपमिदम्।
- विवेश- विपूर्वकात् विश्-धातोः लिटि उत्तमपुरुषैकवचने विवेश इति रूपम्।

**अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे।**
**ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि॥७॥**

**पदपाठः - अहम्। सुवे। पितरम्। अस्य। मूर्धन्। मम। योनिः। अप्ऽसु। अन्तरिति। समुद्रे॥ ततः। वि। तिष्ठे। भुवना। अनु। विश्वा। उत। अमूम्। द्याम्। वर्ष्मणा। उप। स्पृशामि॥७॥**

**अन्वयः -** अहम् अस्य मूर्धन् पितरं सुवे, मम योनिः अप्सु अन्तः समुद्रे। ततः विश्वा भुवना अनु वितिष्ठते। उत अमूं द्याम् वर्ष्मणा उप स्पृशामि।

**व्याख्या-** 'द्यौः पिता'(तै. ब्रा. ३. ७. ५. ४) इति श्रुतेः, पिता द्यौः। पितरं दिवम् अहं सुवे प्रसुवे जनयामि। 'आत्मान आकाशः सम्भूतः' (तै. आ. ८. १) इति श्रुतेः। कुत्रेति तदाह। अस्य परमात्मनो मूर्धन् मूर्धन्युपरि। कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव। मम च योनिः कारणं समुद्रे। समुद्द्रवन्त्यस्माद् भूतजातानीति समुद्रः परमात्मा। तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिष्वन्तर्मध्ये यद् ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः। यत इदृग्भूताहमस्मि ततो हेतोः विश्वा विश्वानि सर्वाणि भुवनानि भुतजातान्यनुप्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि। 'समवप्रविभ्यः स्थः'(पा. १. ३. २२) इत्यात्मनेपदम्। उतापि चामूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम्। उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि। यद्वा, अस्य भूलोकस्य मूर्धन् मूर्धन्युपर्यहं पितरमाकाशं सुवे। समुद्रे जलधावप्सूदकेष्वन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिः वर्तते। यद्वा समुद्रेऽन्तरिक्षेऽप्स्वम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते। ततोऽहं कारणात्मिका सती सर्वाणि भूवनानि व्याप्नोमि। अन्यत् समानम्।



**सरलार्थः-** अहमेव अस्याः पृथिव्याः परमात्मनः शिरसि ऊर्ध्वभागे वा द्युलोकं सृजामि। मम उत्पत्तिः परमात्मनि सर्वव्यापके ब्रह्मचैतन्ये। यस्मात् अहं समस्तभुवनं प्रविश्य विविधरूपेण अवतिष्ठामि। किञ्च दूरस्थद्युलोकं मदीयशरीरेण अहं स्पृशामि।

**व्याकरणम् -**

- सुवे- सू-धातोः लटि आत्मनेपदे उत्तमपुरुषैकवचने वैदिकं रूपमिदम्।
- मूर्धन्- मूर्ध्नि-इत्यस्य सप्तम्येकवचने वैदिकं रूपमिदम्।
- वितिष्ठे- विपूर्वकात् स्था-धातोः आत्मनेपदे उत्तमपुरुषैकवचने वितिष्ठे इति रूपम्।
- विश्वा, भुवना- नपुंसकलिङ्गे बहुवचने वैदिकं रूपद्वयम् इदम्। लौकिके तु विश्वानि भुवनानि चेति रूपद्वयम्।

**अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव॥८॥**

**पदपाठः - अहम्। एव। वातःऽइव। प्र। वामि। आऽरभमाणा। भुवनानि। विश्वा॥**

**परः। दिवा। परः। एना। पृथिव्या। एतावती। महिना। सम्। बभूव॥८॥**

**अन्वयः -** अहम् एव भुवनानि विश्वा आरभमाणा वातः इव प्रवामि। दिवा परः एना पृथिव्याः परः महिना एतावती सम्बभूव।

**व्याख्या-** विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि। प्रवर्ते। वात इव। यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। परो दिवा। पर इति सकारान्तं परस्तादित्यर्थे वर्तते तथा अध इति अधस्तादित्यर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। दिवा आकाशस्य परस्तात्। एना पृथिव्या। 'द्वितीयाटौस्वेनः' (पा. २. ४. ३४) इतीदम एनादेशः। अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानमुपलक्षणम्। एतदुपलक्षितात् सर्वस्माद् विकारजातात् परस्ताद् वर्तमाना सङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती सम्बभूव। एतच्छब्देनोक्तं सर्वं परामृश्यते। एतत्परिमाणमस्याः। 'यत्तदेतेभ्य परिमाणे...' (पा. ५. २. ३९) इति वतुप्। 'आ सर्वनाम्नः' (पा. ६. ३. ९१) इत्यात्वम्। सर्वजगदात्मनाहं सम्भूतास्मि। महच्छब्दादिमनिचि 'टेः' (पा. ६. ४. १५५) इति टिलोपः।

**सरलार्थः-** अहमेव समस्तभुवनं सृजन्ती वायुः इव प्रवहामि। स्वमहिम्ना द्युलोकं पृथिवीं च उल्लङ्घ्य अहम् ईदृशी सर्वजगदात्मना भवामि।

**व्याकरणम् -**



- आरभमाणा- आपूर्वकात् रभ्-धातोः शानच्प्रत्यये टाप्प्रत्यये च प्रथमैकवचने आरभमाणा इति रूपम्।
- प्रवामि- प्रपूर्वकात् वा-धातोः लटि उत्तमपुरुषैकवचने प्रवामि इति रूपम्।
- विश्वा- नपुंसकलिङ्गे द्वितीयाबहुवचने विश्वानि इत्यस्य वैदिकं रूपमिदम्।
- एना- अदस्-शब्दस्य तृतीयैकवचने वैदिकं रूपमिदम्।
- महिना- महिमन्- शब्दस्य तृतीयैकवचने वैदिकं रूपमिदम्। लौकिके तु महिम्ना इति रूपम्।
- संबभूव- सम्पूर्वकात् भू-धातोः लिटि उत्तमपुरुषैकवचने संबभूव इति रूपम्।



## पाठगतप्रश्नाः

१६. देवेभिः इत्यस्य लौकिकं रूपं किम्।
१७. जुष्टम् इत्यस्य कः अर्थः।
१८. मानुषेभिः इति रूपं क्व दृश्यते।
१९. सुमेधाम् इत्यस्य समासं सविग्रहं लिखत।
२०. रुद्राय इत्यत्र कस्मिन्नर्थे चतुर्थी।
२१. कृणोमि इत्यस्य लौकिकं रूपं किम्।
२२. शरवे इति रूपं कथं सिद्ध्येत्।
२३. हन्तवै इति रूपं कथं सिद्ध्येत्।
२४. वितिष्ठे इति रूपं कथं स्यात्।
२५. सुवे इति रूपं कथं सिद्ध्येत्।
२६. भुवना इत्यस्य लौकिकं रूपं किम्।
२७. परः इति सकारान्तं कस्मिन्नर्थे वर्तते।
२८. परस्तात् इति योगे का विभक्तिः दृश्यते।
२९. एना इति रूपं कथं सिद्ध्येत्।
३०. महिना इति रूपं क्व दृश्यते।

## १९.३) देवीसूक्तस्याशयः

त्रिविधा हि ऋचः परोक्षकृताः, प्रत्यक्षकृता, आध्यात्मिक्यश्च। ऋग्वेदस्य दशममण्डलान्तर्गतं देवीसूक्तम् आध्यात्मिकीषु ऋक्षु कीर्तितम्। तथाहि आध्यात्मिक-ऋक्-स्वरूपं देवीसूक्तस्य च तदन्तर्गतत्वं निरुक्ते निरुक्तमेवम्– अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना। यथैतदिन्द्रो वैकुण्ठः, लवसूक्तं वागाम्भृणीयम् इति। परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः, अल्पश आध्यात्मिकाः। इति।





अम्भृणर्षेः कन्या वाग् अस्यर्षिः। द्वितीया ऋक् जागती, शिष्टं त्रैष्टुभम्। गतश्च विनियोगः। सप्तशतीपाठाङ्गजपेऽपि तान्त्रिको विनियोगः अस्य वेदितव्यः। दार्शनिका हि स्व-स्व-तन्त्रसिद्धान्तानुगुण्येन सूक्तमिदं व्याचख्युः। तेन व्याख्यानभेदादिदं सदैव अभिनवतया भासते विदुषां मानसेषु। तथाहि ब्रह्मविदुषीवाग् आत्मनो ब्रह्मरूपताम् अनुभवन्ती ब्रह्मणश्च जगत्कारणतया स्वस्याः सर्वकर्तृतां कीर्तयति। तथाहि वेदान्तसूत्रं 'जन्माद्यस्य यतः' इति। केनोपनिषदि उमा-हैमवतीसंवादेऽपि शक्तिमाहात्म्यं प्रकाशितम्। नेयम् अहङ्कृतिः परं ब्रह्मज्ञस्य ब्रह्मीभूतस्य स्वाभाविकी इयम् अनुभूतिः इति दिशा अद्वैतवेदान्तानुयायिभिः व्याख्यातम्। स्फोटब्रह्मवादिनो वैयाकरणाः पुनर्वाच एव जगतो जन्म जगदुः। सूक्तोक्तावाग् हि तेषां नये स्फोटाख्या परा वागेव। तयैव जगदिदं सूयते –अहमेववात इव प्रवाम्यारभमाणा भुवनानि विश्वा इति। तदनुरूपं चेदं वाक्यपदीयपदम् अनुसन्धेयम् –अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति। अतो व्याकरणदार्शनिकैः स्फोटपरा व्याख्या प्राणायि। शाक्ताश्च आद्याशक्तिं महामायां संसारस्य सर्जन-परिपालन-विनाशनकारणं मन्यन्ते। तथाहि शस्तं सप्तशत्यां-

सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि।

गुणाश्रये गुणमये नारायणि नमोऽस्तु ते॥ इति।

एवं बहु प्रस्थानप्रशस्तं प्रचुरप्रचारं सूक्तमिदं वैदिकवाङ्मये वैशिष्ट्येन विशिष्यते।

सा वागेव वसुरुद्रादित्यादिदेवतारूपेण विचरति। सैव इन्द्राग्निमित्रावरुणादीनां धारयित्री। वस्तुतस्तु यजमानाः तामेव सोमादिभिर्हविर्भिः यागेषु यजन्ते। सा हि जगदीश्वरी धनदात्री जीवभावेन भूतानि अनुप्रविश्य विविधरूपेण अवतिष्ठते। वस्तुतस्तु तयैव शक्तिरूपया अधिष्ठिताः प्राणिनः दर्शनश्रवणाशनप्राणनादिकर्माणि कुर्वन्ति। तदुक्तम्–

इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या।

भूतेषुसततं तस्यै व्याप्तिदेव्यै नमो नमः॥ इति।

सैव प्रसन्ना सती उपासकाय ब्रह्मादिदेवपदम् ऋषित्वं विद्यां वा प्रयच्छति। सा वागेव असुरादिशत्रुनिधनद्वारा प्रजानां रक्षां विदधाति। त्रिपुरहरादयस्तु निमित्तभूताः। तच्छक्त्यैव शक्तिमन्तः ते। तदाम्नातम्–

अहं रुद्राय धनुरातनोमि। ब्रह्मद्विषे शरवे हन्तवा उ॥

अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश॥ इति।

अत्रेदमनुसन्धेयं यत् महामायाप्रभावेणैव मधुसूदनः स्वनाम्नः सार्थक्यं प्राप। महामायाविमोहितौ मधुकैटभौ वरप्रदानाङ्गीकारेण विष्णुहस्ते स्वेच्छामृत्युवरणं कृतवन्तौ। अत एव हरिः तौ हन्तुम् आर्हत्। तदुक्तं सप्तशत्यां –

तावप्यतिबलोन्मत्तौ महामायाविमोहितौ।

उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम्॥ इति।



सा वागेव भूर्भुवःस्वर्लोकान् परिव्याप्य विराजते। लोकातीता सा सर्वं लोकम् उत्पादयन्ती स्वमहिम्ना विलसतीति वाचो माहात्म्यं कीर्तितमिति शम्।



## पाठसारः-१

देवीसूक्ते अष्टमन्त्रैः यदुक्तं तत् साररूपेण कथ्यते। सर्वत्र मन्त्रेषु दृष्टेन अहमिति पदेन वागाम्भृणी ऋषिः ज्ञेयः। सा वागाम्भृणी रुद्रैः, आदित्यैः, विश्वदेवैः, सह तत्तदात्मिका भूत्वा विचरति। इन्द्राग्न्योः अश्विनोः च सा धारिका। सा सोमस्य धारिका, त्वष्टारं पूषाणं भगं च धारयति। धनस्य सा धारिका। सा राष्ट्री, वसूनां सङ्गमनी, चिकितुषी, यज्ञियानां प्रथमा। तां भूरिस्थात्रां भूरि आवेशयन्तीं मा देवाः पुरुत्रा वि अदधुः। यः अन्नं खादति, पश्यति, प्राणान् धारयति, उक्तविषयान् शृणोति, स मया एव एतत् सर्वं कार्यं करोति। मम महिमानं ये न जानन्ति, ते विनश्यन्ति। हे विश्रुत, शृणोतु, श्रद्धायाः विषयम् अहं युष्माकं समीपे वदामि।अहं स्वयमेव देवैः मनुष्यैश्च अभीष्टम् इदं वाक्यं वदामि। अहं यमिच्छामि तमेव बलवन्तं, ब्रह्माणं, मन्त्रद्रष्टारं, मेधाविनं च करोमि। अहं रुद्राय ब्रह्मद्वेषकारिणं घतकं शत्रुं हन्तुं तस्य धनुषं गृह्णामि। अहमेव जनानां कृते संग्रामं करोमि। अहमेव द्युलोकं भूलोकं च प्रविशामि।अहमेव अस्याः पृथिव्याः परमात्मनः शिरसि ऊर्ध्वभागे वा द्युलोकं सृजामि। मम उत्पत्तिः परमात्मनि सर्वव्यापके ब्रह्मचैतन्ये। यस्मात् अहं समस्तभुवनं प्रविश्य विविधरूपेण अवतिष्ठामि। किञ्च दूरस्थद्युलोकं मदीयशरीरेण अहं स्पृशामि।अहमेव समस्तभुवनं सृजन्ती वायुः इव प्रवहामि। स्वमहिम्ना द्युलोकं पृथिवीं च उल्लङ्घ्य अहम् ईदृशी सर्वजगदात्मना भवामि।



# श्रद्धासूक्तम्

## प्रस्तावना

वेदेषु मनसः विभिन्नाः भावाः अति स्पष्टतया वर्णिताः सन्ति। मनसः सामर्थ्यस्य अवगाहनम् अति कठिनम्। केचित् जनाः अत्यधिकं कार्यं सम्पादयितुं शक्नुवन्ति, महति युद्धे निर्भयं सेनाधिपत्यं कुर्वन्ति, केचित् ध्यानादिना अतीन्द्रियं ज्ञानं लभन्ते। एवं मानवेषु भेदस्य कारणं हि तेषां मनः एव। तथापि मनसः सूक्ष्मा भावाः के, तेषां परिणामाः के, भावानां सवर्धनं कथं भवितुमर्हति, भावस्य दृढीकरणे के अन्तरायाः सन्ति इत्यादिविषयोऽपि वेदे समुलभ्यते। श्रद्धा तादृश एको मनोभावः। लोके सामान्यतः जनः यत्परः भवति तत्र तस्य श्रद्धा अस्ति इति वक्तुं शक्यते। कार्ये प्रेरकः विश्वासो हि श्रद्धा इति वक्तुं शक्यम्। अर्थात् तथा विश्वासः यः विश्वासिनं जनं विश्वासानुगुणं कार्ये प्रेरयति। क्रियाशीलः विश्वासः इत्यपि अर्थान्तरम्।

तथाहि आस्तिक्यबुद्धिः श्रद्धा इति श्रद्धाशब्दार्थः उक्तः कठोपनिषदः शाङ्करभाष्ये। श्रद्धायाः माहात्म्यं गीतमपि गीतायां-

'श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।

ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति'॥

पुनश्च-

'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।

श्रद्धावान्भजते यो मां स मे युक्ततमो मतः'॥

एवं बहुधा श्रद्धायाः स्तुतिः बहुत्र कृता समुपलभ्यते। अस्मिन् पाठे वेदे श्रद्धाविषये किम् उक्तं तद् प्रस्तूयते। अस्य ऋग्वेदीयस्य श्रद्धासूक्तस्य ऋषि: श्रद्धा कामायनी, देवता श्रद्धा, छन्द: अनुष्टुप्। इदम् ऋग्वेदस्य दशममण्डले १५१ संख्याकं सूक्तम्।

## १९.४) मूलपाठः - श्रद्धासूक्तम्

**श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।**
**श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥१॥**

**प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः।**
**प्रियं भोजेषु यज्वस्विदं म उदितं कृधि॥२॥**



**यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे।**
**एवं भोजेषु यज्वस्वस्माकमुदितं कृधि॥३॥**

**श्रद्धां देवा यजमाना वायुगोपा उपासते।**
**श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु॥४॥**

**श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि।**
**श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः॥५॥**

---

## १९.५) इदानीं श्रद्धासूक्तस्य मूलपाठम् अवगच्छाम

**श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।**
**श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥१॥**

**पदपाठः– श्रद्धया। अग्निः। सम्। इध्यते। श्रद्धया। हूयते। हविः॥ श्रद्धाम्। भगस्य। मूर्धनि। वचसा। आ। वेदयामसि॥१॥**

**अन्वयः–** श्रद्धया अग्निः समिध्यते। श्रद्धया हूयते हविः। भगस्य मूर्धनि श्रद्धां वचसा आ वेदयामसि।

**व्याख्या-** पुरुषगतः अभिलाषविशेषः श्रद्धा। तया श्रद्धया अग्निः गार्हपत्यादिः समिध्यते संदीप्यते। यदा हि पुरुषे श्रद्धा अग्निगोचर आदरातिशयो जायते तदैषः पुरुषः अग्नीन् प्रज्वालयति नान्यदा। श्रद्धया एव हविः पुरोडाशादिहविश्च हूयते। आहवनीये प्रक्षिप्यते।

यद्वा अस्य सूक्तस्य या द्रष्ट्री तया श्रद्धाख्यया अग्निः समिध्यते। श्रद्धाम् उक्तलक्षणायाः श्रद्धायाः अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थाने अवस्थितां वचसा वचनेन स्तोत्रेण आ वेदयामसि अभितः प्रख्यापयामः। इदन्तो मसिः।

**सरलार्थः-** श्रद्धया अग्निः प्रज्वलितः भवति, श्रद्धया हविर्दानं क्रियते, श्रद्धा या भाग्यस्य प्रधाना, सा श्रद्धा स्तुत्या प्रार्थ्यते।

**व्याकरणम्-**

- समिध्यते - सम्-पूर्वकात् इन्ध्-धातोः कर्मणि रूपम् (तप्रत्यये यकि) (प्रथमपुरुषस्य एकवचने रूपम् इदम्)।



- हूयते - हु दानादयोः इत्यर्थकात् धातोः कर्मणि रूपम् (प्रथमपुरुषस्य एकवचने रूपम् इदम्)।
- आ वेदयामसि - आ पूर्वकात् विदधातोः णिचि लटि उत्तमपुरुषस्य बहुवचनस्यरूपम्।

**प्रि॒यं श्र॑द्धे॒ दद॑तः प्रि॒यं श्र॑द्धे॒ दिदा॑सतः।**
**प्रि॒यं भो॒जेषु॒ यज्व॑स्वि॒दं म॑ उदि॒तं कृ॑धि॥२॥**

**पदपाठः- प्रि॒यम्। श्र॒द्धे॒। दद॑तः। प्रि॒यम्। श्र॒द्धे॒। दिदा॑सतः॥ प्रि॒यम्। भो॒जेषु॑। यज्व॑ऽसु। इ॒दम्। मे॒। उ॒दि॒तम्। कृ॒धि॒॥२॥**

**अन्वयः-** (हे) श्रद्धे, ददतः प्रियम्(कृधि), (हे) श्रद्धे, दिदासतः प्रियं (कृधि), भोजेषु यज्वसु प्रियं(कृधि), मे इदम् उदितं(प्रियं) कृधि।

**व्याख्या-** हे श्रद्धे ददतः चरुपुरोडाशादीनि प्रयच्छतः यजमानस्य प्रियम् अभीष्टफलं कुरु। दिदासतः दातुमिच्छतश्च हे श्रद्धे प्रियं कुरु। मे मम संबंधिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु इदमुदितमुक्तं प्रियं कृधि कुरु।

**सरलार्थः-** अस्मिन् मन्त्रे श्रद्धां प्रति उच्यते यत् हे श्रद्धे चरुपुरोडाशादीनि दातुः, दातुम् इच्छतः, उदारयजमानस्य अभीष्टपूर्तिं कुरु। हे श्रद्धे अस्माकम् अस्य वचनस्य अभीष्टपूर्तिं कुरु।

**व्याकरणम्-**

- ददतः - दा-धातोः शतृप्रत्ययान्तं षष्ठ्येकवचने रूपम्। ददत् इति प्रातिपदिकम्। पुनःपुनः दाता इति अत्रार्थः।
- दिदासतः - दा-धातोः सनि शतृप्रत्यये च दिदासत् प्रातिपदिकं निष्पद्यते। तस्य षष्ठ्येकवचने इदं रूपम्। दातुम् इच्छति तस्य इत्यर्थः।
- उदितम् - वद् व्यक्तायां वाचि इत्यर्थकात् धातोः क्तप्रत्ययान्तं रूपम्। यद्वा उत्-उपसर्गात् इण् गतौ इति धातोः क्तप्रत्यये उदित इति रूपं भवति।
- कृधि - कृधातोः लुङि मध्यमपुरुषे एकवचने रूपम्। कुरु इत्यस्मिन् अर्थे एव प्रयोगः भवति।

**यथा॑ दे॒वा असु॑रेषु श्र॒द्धामु॒ग्रेषु॑ चक्रि॒रे।**
**ए॒वं भो॒जेषु॒ यज्व॑स्व॒स्माक॑मुदि॒तं कृ॑धि॥३॥**

**पदपाठः- यथा॑। दे॒वाः। असु॑रेषु। श्र॒द्धाम्। उ॒ग्रेषु॑। च॒क्रि॒रे॥ ए॒वम्। भो॒जेषु॑। यज्व॑ऽसु। अ॒स्माक॑म्। उ॒दि॒तम्। कृ॒धि॒॥३॥**



**अन्वयः-** देवाः यथा उग्रेषु असुरेषु श्रद्धां चक्रिरे, एवं भोजेषु यज्वसु(त्वं श्रद्धां कृधि) अस्माकम् उदितं कृधि।

**व्याख्या-** देवाः इन्द्रादयः असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमे हन्तव्या इति आदरातिशयं कृतवन्तः। एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृसु कृतयज्ञेषु जनेषु च इदमुदितमुक्तं प्रियं कृधि कुरु।

**सरलार्थः-** यथा देवाः असुरेषु श्रद्धां चक्रुः तथैव उदरयजमानेष्वपि श्रद्धां कुर्वन्तु। अस्माकम् अस्य वचनस्य अभीष्टपूर्तिं कुरु।

**व्याकरणम्-**

- असुरेषु - असुर इति प्रातिपदिकस्य सप्तम्यैकवचने रुपम्।
- चक्रिरे - कृञ् करणे इति धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम् इदम्। (आत्मनेपदपक्षे)
- उदितम् - वद् व्यक्तायां वाचि इत्यर्थकात् धातोः क्तप्रत्ययान्तं रूपम्।
- कृधि - कृधातोः वैदिकं रूपम्। कुरु इत्यस्मिन् अर्थे एव प्रयोगः भवति।

**श्रद्धां देवा यजमाना वायुगोपा उपासते।**

**श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु॥४॥**

**पदपाठः- श्रद्धाम्। देवाः। यजमानाः। वायुऽगोपाः। उप। आसते॥ श्रद्धाम्। हृदय्यया। आऽकूत्या। श्रद्धया। विन्दते। वसु॥४॥**

**अन्वयः-** वायुगोपाः देवाः यजमानाः च श्रद्धाम् उपासते, हृदय्यया आकूत्या श्रद्धाम्(उपासते)। श्रद्धया वसु विन्दते।

**व्याख्या-** देवाः यजमानाः मनुष्याश्च वायुगोपाः रक्षिताः येषां ते तादृशाः सन्तः श्रद्धां देवीमुपासते प्रार्थयन्ते हृदय्यया हृदये भवा हृदय्या तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धामेव परिचरन्ति सर्वे जनाः। कुत इत्यत आह- यतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावान् जनः ततः इत्यर्थः।

**सरलार्थः-** वायुना रक्षिताः सर्वे देवाः तथा यजमानाः स्वस्य हार्दिकसङ्कल्पेन केवलं श्रद्धायाः उपासनां कुर्वन्ति। श्रद्धया एव मनुष्याः सम्पत्तिं प्राप्नुवन्ति।

**व्याकरणम्-**

- वायुगोपाः - वायुः गोपाः (रक्षिताः) येषां ते वायुगोपाः।
- उपासते- उपपूर्वकात् आस्- धातोः लट्-लकारस्य प्रथमपुरुषस्य बहुवचनान्तं रूपम् इदम्।



- यजमानाः- यज् - धातोः शानच्-प्रत्ययान्तं रूपम् इदम्।
- आकूत्या - आकूति इति प्रातिपदिकस्य तृतीयान्तं रूपम् इदम्। संकल्प इति तदर्थः।
- विन्दते - विद्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम् इदम्।

**श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि।**

**श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः॥५॥**

**पदपाठः- श्रद्धाम्। प्रातः। हवामहे। श्रद्धाम्। मध्यन्दिनम्। परि॥ श्रद्धाम्। सूर्यस्य।**

**निऽम्रुचि। श्रद्धे। श्रत्। धापय। इह। नः॥५॥**

**अन्वयः-** (वयं) प्रातः श्रद्धां हवामहे , मध्यन्दिनं परि श्रद्धां (हवामहे), सूर्यस्य निम्रुचि श्रद्धां (हवामहे)। (हे) श्रद्धे इह नः श्रत् धापय।

**व्याख्या-** श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे। तथा मध्यन्दिनं परि। लक्षणे परेः कर्मप्रवचनीयत्वम्। मध्यन्दिनं परिलक्ष्य। मध्यन्दिनम् इत्यर्थः। मध्याह्नेऽपि तां श्रद्धाम् आह्वयामहे। सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निम्रुचि अस्तमयवेलायां सायंसमयेऽपि तामेव श्रद्धाम् आह्वयामहे। ईदृग्रूपे हे श्रद्धे नोस्मानिह लोके कर्मणि वा श्रद्धापय श्रद्धावतः कुरु।

**सरलार्थः-** वयं प्रातःकाले मध्याह्ने सूर्यास्तसमये च श्रद्धाम् आह्वयामः। हे श्रद्धे अस्मिन् लोके अस्मान् श्रद्धावतः कुरु।

**व्याकरणम्-**

- हवामहे - हू- धातोः लट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम् इदम्।
- धापय – धा-धातोः णिचि लोट्-लकारस्य मध्यमपुरुषस्य एकवचने रूपम् इदम्।
- श्रद्धे - श्रद्धाशब्दस्य सम्बोधनैकवचने श्रद्धे इति रूपम्।
- निम्रुचि - नि+म्रुच् धातोः निष्पन्नः शब्दः।



## पाठगतप्रश्नाः

३१. श्रद्धासूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।

३२. श्रद्धयाग्निः इत्यत्र अग्निपदेन कोऽर्थः विवक्षितः।

३३. मूर्धनि इत्यस्य कोऽर्थः।

३४. किं प्रयच्छतः यजमानस्य प्रियं कुरु।



३५. यज्वसु इत्यस्य कोऽर्थः।

३६. कृधि इत्यस्य लौकिकं रूपं किम्।

३७. आकूत्या इत्यस्य कोऽर्थः।

३८. वसु इत्यस्य कोऽर्थः।

३९. कीदृशः जनः धनं लभते।

४०. समिध्यते इत्यस्य कः अर्थः।

## १९.६) श्रद्धासूक्तस्य सारः।

ऋग्वेदस्य दशममण्डले श्रद्धासूक्तमस्ति (१०।१५१)। सूक्तेऽस्मिन् श्रद्धायाः स्तुतिः देवतारूपेण कृता अस्ति। अत्र षड् एव मन्त्राः सन्ति, किञ्च अस्य विषयस्यापूर्वत्वेन स्वल्पकायम् अपि इदं सूक्तं अतीव माहात्म्यम् बभर्ति। श्रद्धा-इति शब्दस्य अर्थो हि कस्मिंश्चित् कार्यविशेषेऽथवा वचनविशेषे स्वान्तःकरणेन आदरातिशयस्य प्रकटीकरणम् इति। वस्तुतः श्रद्धया सम्पादितं कार्यमेव लाभदायकं भवति। श्रद्धाविहीनं कर्म कदापि अभीष्टफलदायकं न भवति।

सोमस्याभिषवः यजमानस्य श्रद्धां प्रकटयति (**श्रद्धां वदन् सोमराजन् ९।११३।४**)। ऋषिभिः कृतं स्तोत्रं श्रद्धासमन्वितमनसा इन्द्रेण श्रुतम् (**श्रद्धामनस्याा शृणुतेदभीतये**)। **वाक्सूक्ते (ऋग् १०। १४५)** कथितमस्ति- **श्रुधि श्रुत श्रद्धिवं ते वदामि**। अत्र श्रद्धिव इति पदस्य सायणेन कृतोऽर्थः - **श्रद्धाबलेन लभ्यं ब्रह्मात्मकं वस्तु** अर्थात् ब्रह्म श्रद्धया ज्ञातं भवति, उपलभ्यते। अन्येषु मन्त्रेष्वपि ऋषीणां श्रद्धां प्रति अतीव पूज्या भवना वर्तते। श्रद्धासुक्ते तु देवतास्वरूपेणैव श्रद्धा चित्रिताऽस्ति। अस्य मन्त्रस्य ऋषिका श्रद्धा अस्ति, या कामगोत्रजा अस्ति। तेनैव कारणेन सा कामायनी इति नाम्ना विख्याताऽस्ति।

अस्य सूक्तस्य प्रथममन्त्रे एव स्पष्टीकृतम् अस्ति यत् श्रद्धया एवाग्नेः समिन्धनं भवति। श्रद्धया आहवनीयाग्नौ आहुतिः देया भवति। अस्य तात्पर्यमिदमस्ति यत् यज्ञीयकार्येषु श्रद्धायाः महती आवश्यकता वर्तते। अग्निः अत्र ज्ञानाग्नेः प्रतीकरूपः अपि वक्तुं शक्यते। ज्ञानाग्नेः समिन्धनमपि श्रद्धया एव सम्पादितं भवेत्। अस्याः श्रद्धाया उपासना न केवलं मानवाः कुर्वन्ति अपि तु देवता अपि असुरैः सह युद्धकाले श्रद्धाम् आश्रित्य स्वकीयमनोरथं साधयन्ति। अपरस्मिन् मन्त्रे मनोवैज्ञानिकतथ्यस्य रोचकं विश्लेषणं वर्तते-

**श्रद्धां हृदय्ययाकूत्या श्रद्धया विन्दते वसु। इति।।**

हृदये समुत्पन्नसङ्कल्पेन श्रद्धाया उपासना भवति। प्रथमस्तु साधकस्य चित्ते सङ्कल्पस्य उदयो भवति, तदनन्तरम् एवासौ कस्मिंश्चिद् अपि कार्ये स्वनियोगं करोति। श्रद्धया धनस्य प्राप्तिर्भवति। अत्र वसु इत्येतत्पदेन भौतिकद्रव्यस्य सङ्केतो न भवति किन्तु आध्यात्मिककल्याणस्य। अज्ञानस्य विनाशं कृत्वा अमरत्वस्य प्राप्तिरेव आध्यात्मिकं वसु अस्ति। अमरतायाः समुपलब्धेः प्रधानं साधनम् इयम् एव



श्रद्धा वर्तते। अन्तिमा प्रार्थनाः- **श्रद्धे श्रद्धापये ह नः। इति।।** उपनिषत्सु श्रद्धातत्त्वस्य यद् माहात्म्यम् उक्तं तस्य बीजम् अस्मिन्नेव प्रख्यातसूक्ते समुपलभ्यते।



## पाठसारः

अस्मिन् पाठे श्रद्धासूक्तस्य पञ्च मन्त्राः लिखिताः। एषु पञ्चमन्त्रेषु यत् साररूपेण कथितं तदेव अधुना साररूपेण कथ्यते। एषु पञ्चमन्त्रेषु श्रद्धया किं किं कर्तव्यमिति मुख्यतया उक्तम्। श्रद्धाया विविधरूपाणि प्रयोजनानि च प्रदर्श्यन्ते। होमे भोजने दाने दक्षिणायां श्रद्धा विधेया, श्रद्धया तत्फलवद् भवतीत्यादयः विषयाः सन्तीति प्रथममन्त्रे उक्तम्। द्वितीये मन्त्रे श्रद्धां प्रति उच्यते हे श्रद्धे ममेदं घोषितवचनम्, दानं प्रयच्छतो जनस्य कल्याणं कुरु, हे सदास्थे ! दातुमिच्छतः कल्याणं कुरु, दानस्य भोक्तृषु दक्षिणां गृहीतवत्सु खल्वृत्विक्षु कल्याणं कुरु इति। तृतीये मन्त्रे उच्यते यत् यथा क्रूरेषु दुष्टजनेषु वा तेषामुपरि मुमुक्षुवो विद्वांसो यथोचितं धारणां दैवीशक्तिं प्रेरयन्ति, एवं भोजनदातृषु तथा यजमानेषु खलु अस्माकम् इदम् आशीर्वचनं कल्याणप्रदं कुरु इति प्रार्थितं श्रद्धां प्रति। चतुर्थे मन्त्रे उच्यते यत् मुमुक्षुवो विद्वांसो श्रद्धां हृदयस्थां कृत्वा सदिच्छां सेवन्ते , यजनशीलाः प्राणायामैर्वायूरक्षको येषां ते तथाभूताः श्रद्धां सदिच्छां सेवन्ते ते सदिच्छया धनं लभन्ते। अन्तिममन्त्रे श्रद्धां प्रति उच्यते यत् प्रातः काले यथावद्धारणां खल्वास्तिकतां परमात्मप्रीतिम् आमन्त्रयावहे, दिनस्य मध्येऽपि परमात्मप्रीतिमामन्त्रयामहे, परमात्मप्रीतिमामन्त्रयामहे, हे श्रद्धे आस्तिकभावने परमात्मप्रीते ! अस्मानस्मिन् जीवने श्रद्धामयान् कुरु इति।



## पाठान्तप्रश्नाः

**(देवीसूक्ते)**

१. देवीसूक्तस्य सारं लिखत।

२. वागाम्भृणीदेव्याः महिमानं वर्णयत।
   अहमेव स्वयमिदम्... इत्यादिमन्त्रं व्याख्यात।

३. अहं रुद्राय धनुरा... इत्यादिमन्त्रं व्याख्यात।

४. अहं सुवे पितरमस्य... इत्यादिमन्त्रं व्याख्यात।

५. अहमेव वतइव... इत्यादिमन्त्रं व्याख्यात।

६. अहं रुद्रेभिर्वसुभि... इत्यादिमन्त्रं व्याख्यात।

७. अहं सोममाहनसं..... इत्यादिमन्त्रं व्याख्यात।

८. मया सो अन्नमत्ति.....इत्यादिमन्त्रं व्याख्यात।



९. अतिसंक्षेपेण देवीसूक्तं वर्णयत।

**(श्रद्धासूक्ते)**

१०. श्रद्धासूक्तस्य सारं लिखत।

श्रद्धया किं किं करणीयम् इति विषयकमन्त्रं लिखन् सायनभाष्यनुसारि व्याख्यानं कुरुत।

यथा देवा असुरेषु... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।

प्रियं श्रद्धे ददतः... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।

श्रद्धां प्रातर्हवामहे... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरपूगः - (देवीसूक्ते)**

१. वाक् ऋषिः, त्रिष्टुप् छन्दः, २ जगती, वाक् देवता।

२. सूक्तस्य द्रष्ट्री वागाम्भृणी।

३. अश्विना।

४. उभौ।

५. रुद्रेभिः।

६. रुद्रात्मिका भूत्वा।

७. आहन्तव्यम्।

८. सुपूर्वकात् प्रपूर्वकात् अव्-धातोः ईप्रत्यये चतुर्थ्येकवचने।

९. धनानाम्।

१०. यज्ञार्हाणाम्।

११. किद्-धातोः क्वसुप्रत्यये ङीपि प्रथमैकवचने।

१२. अमन्यमानाः अजानन्तः।

१३. प्रपूर्वकात् अन्-धातोः लटि प्रथमपुरुषैकवचने।

१४. शृणु।

१५. पुरुशब्दात् सप्तम्यर्थे त्राप्रत्यये।

**उत्तरपूगः - (देवीसूक्ते)**

१६. देवैः।

१७. सेवितम्।

१८. वेदे।

१९. शोभना मेधा यस्य तम् इति बहुव्रीहिः।



२०. षष्ठ्यर्थे।

२१. करोमि।

२२. श‍ृ-धातोः उप्रत्यये शरुः इति जाते चतुर्थ्येकवचने।

२३. हन्-धातोः तुमुन्प्रत्ययार्थे वैदिके तवैप्रत्यये।

२४. विविधं व्याप्य तिष्ठामि।

२५. सू-धातोः लटि आत्मनेपदे उत्तमपुरुषैकवचने वैदिकं रूपम्।

२६. भुवनानि।

२७. परस्तात्।

२८. तृतीया।

२९. अदस्-शब्दस्य तृतीयैकवचने वैदिकं रूपम्।

३०. वेदे।

**उत्तरपूगः - (श्रद्धासूक्ते)**

३१. श्रद्धा कामायनी ऋषि:, अनुष्टुप् छन्द:, देवता श्रद्धा।

३२. गार्हपत्यादिः।

३३. प्रधानभूते स्थाने।

३४. चरुपुरोडाशादीनि।

३५. कृतयज्ञेषु।

३६. कुरु।

३७. संकल्परूपया क्रयया।

३८. धनम्।

३९. श्रद्धावान्।

४०. संदीप्यते।

## ॥ इति नवदशः पाठः ॥



२०

# ॥विष्णुसूक्तं मित्रावरुणसूक्तं च॥

## प्रस्तावना

वेदो ज्ञानराशिः शब्दराशिश्च। वेदः अपौरुषेय इति एव परम्परा। प्राणिमात्रस्य इष्टप्राप्तेः अनिष्टपरिहारस्य च अलौकिकम् उपायं वेदयति वेदः। वेदेन ज्ञाप्यमाना उपायाः प्रत्यक्षेण अनुमानेन वा प्रमाणेन अगम्याः सन्ति। केवलम् वेदशब्देभ्य एव ते उपाया ज्ञातुं शक्याः। ईश्वरोऽपि सृष्टिकरणे वेदज्ञानम् आश्रित्य जगत् सृजत्। तदिदं वैदिकं ज्ञानं निर्भ्रान्तिम् प्रमादरहितं च। स च वेदः प्रयोगभेदेन यज्ञनिर्वाहकत्वाद् ऋक् यजुः साम इति त्रेधा भिन्नः। स एव त्रयी इत्युच्यते। प्रतिवेदम् पुनः मन्त्रः ब्राह्मणम् इति द्विविधो विभागो प्रकल्पितो वेदविद्भिः। मन्त्र एव संहिता इत्यपि प्रचारः। मन्त्रस्तावत् यज्ञाद्यनुष्ठानकारणभूदद्रव्यदेवतादिप्रकाशकः। ब्राह्मणस्तु विध्यर्थवादादिप्रतिपादकः अनेकविधः। स्तुत्यात्मक ऋग्वेदः। तस्य ऋग्वेदस्य मण्डलरूपेण अष्टकरूपेण च द्वेधा विभाजनमस्ति। तत्र मण्डलरूपेण विभागे सति सूक्तम् इदम् ऋग्वेदस्य प्रथमे मण्डले (१.१५४) चतुःपञ्चाशदधिकैकशततमं सूक्तम्। मन्त्रात्मकस्य ऋग्वेदस्य अयमंशः।

**अस्मिन् पाठे विष्णुसूक्तं मित्रावरुणसूक्तं च पाठ्यत्वेन विद्यते।** पूर्वार्धे **विष्णुसूक्तं** विद्यते, उत्तरार्धे च **मित्रावरुणसूक्तम्** उपन्यस्तमस्ति।

विष्णुसूक्ते अपि विष्णुदेवतायाः स्तुतिः विहिता। अत्र विष्णोः माहात्यं वर्णितम्। अस्य सूक्तस्य ऋषि: दीर्घतमा औचथ्यः, छन्दः विराट् त्रिष्टुप्, देवता विष्णुः। अस्मिन् सूक्ते विष्णोः वीर्यता प्रकटिता। विष्णोः निकटे यत् यत् प्रार्थितं तदपि प्रकटितम्। अस्मिन् पाठे विष्णुसूक्ते विद्यमानाः षट् मन्त्राः प्रतिपादिताः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- सूक्तस्थानां मन्त्राणां संहितापाठं ज्ञास्यति।
- सूक्ते विद्यमानानां मन्त्राणां पदपाठं ज्ञास्यति।
- सूक्तस्थानां मन्त्राणाम् अन्वयं कर्तुं समर्थो भवेत्।
- सूक्तस्थानां मन्त्राणां व्याख्यानं कर्तुं समर्थो भवेत्।
- सूक्ते विद्यमानानां मन्त्राणां सरलार्थं ज्ञास्यति।



- मन्त्रे स्थितं व्याकरणं ज्ञातुं समर्थो भवेत्।
- सूक्ततात्पर्यं सूक्ततत्त्वं च अवगच्छेत्।
- सूक्तार्थं ज्ञात्वा सूक्तमहिमानम् ज्ञास्यति।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- वैदिकलौककयोः भेदं ज्ञातुं शक्नुयात्।
- केषाञ्चित् वैदिकरूपाणि ज्ञास्यति।

## ॥विष्णुसूक्तम्॥

## २०.१) अधुना मूलपाठं पठाम (विष्णुसूक्तम्)

**विष्णोर्नु कं वीर्याणि प्र वोचं**
**यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तरं सधस्थं**
**विचक्रमाणस्त्रेधोरुगायः॥ १॥**

**प्र तद्विष्णुः स्तवते वीर्येण**
**मृगो न भीमः कुचरो गिरिष्ठाः।**
**यस्योरुषु त्रिषु विक्रमणे-**
**ष्वधिक्षियन्ति भुवनानि विश्वा॥२॥**

**प्र विष्णवे शूषमेतु मन्म**
**गिरिक्षित उरुगायाय वृष्णे।**
**य इदं दीर्घं प्रयतं सधस्थ-**
**मेको विममे त्रिभिरित्पदेभिः॥ ३॥**

**यस्य त्री पूर्णा मधुना पदा-**
**न्यक्षीयमाणा स्वधया मदन्ति।**
**य उ त्रिधातु पृथिवीमुत द्या-**
**मेको दाधार भुवनानि विश्वा॥ ४॥**



**तदस्य प्रियमभि पाथो अश्यां**
**नरो यत्र देवयवो मदन्ति।**
**उरुक्रमस्य स हि बन्धुरित्था**
**विष्णोः पदे परमे मध्व उत्सः॥ ५॥**
**ता वां वास्तून्युश्मसि गमध्यै**
**यत्र गावो भूरिशृङ्गा अयासः।**
**अत्राह तदुरुगायस्य वृष्णः**
**परमं पदमव भाति भूरि॥ ६॥**

---

## २०.१.१) इदानीं मूलपाठम् अवगच्छाम (विष्णुसूक्तम्)

**विष्णोर्नु कं वीर्याणि प्र वोचं**
**यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तरं सधस्थं**
**विचक्रमाणस्त्रेधोरुगायः॥ १॥**

**पदपाठः- विष्णोः। नु। कम्। वीर्याणि। प्र। वोचम्। यः। पार्थिवानि। विऽममे। रजांसि॥ यः। अस्कभायत्। उत्ऽतरम्। सधऽस्थम्। विऽचक्रमाणः। त्रेधा। उरुऽगायः॥ १॥**

**अन्वयः-** हे मनुष्या यः पार्थिवानि रजांसि नु विममे य उरुगाय उत्तरं सधस्थं त्रेधा विचक्रमाणोऽस्कभायत्तस्य विष्णोर्वीर्याणि प्रवोचमनेन कं प्राप्नुयां तथा यूयमपि कुरुत ॥१॥

**व्याख्या-** हे नराः विष्णोः व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु कम् अतिशीघ्रं प्र वोचम् प्रब्रवीमि। कानि तानीति लोकत्रयाभिमानीति अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे। अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः। तस्मात् लोकत्रयस्य पृथिवीशब्दवाच्यत्वम्। किंच यः च विष्णुः उत्तरम् उद्गततरमतिविस्तीर्णं सधस्तं सहस्थानं लोकत्रयाश्रयभुतमन्तरिक्षम् अस्कभायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः। अनेन अन्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति। यद्वा। यो विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान्। रजःशब्दो लोकवाची, 'लोका रजांस्युच्यन्ते' इति यास्केनोक्तत्वात्। किञ्च यश्चोत्तरम् उद्गततरम्



उत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकम् अस्कभायत् स्कम्भितवान् सृष्टवानित्यर्थः। स्कम्भेः 'स्तम्भुस्तुम्भु' इति विहितस्य श्नः 'छन्दसि शायजपि' इति व्यत्ययेन शायजादेशः। अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे। भूरादिलोकत्रयमित्यर्थः। भूम्याम् उपार्जितकर्मभोगार्थत्वात् इतरलोकानां तत्कारणत्वम्। किंच यश्चोत्तरम् उत्कृष्टतरं सर्वेषां लोकानामुपरिभूतम्। अपुनरावृत्तेः तस्योत्कृष्टत्वम्। सधस्थम् उपासकानां सहस्थानं सत्यलोकमस्कभायत् स्कम्भितवान् ध्रुवं स्थापितवानित्यर्थः। किं कुर्वन्। त्रेधा विचक्रमाणः त्रिप्रकारं स्वसृष्टान् लोकान्विविधं क्रममाणः। विष्णोस्त्रेधा क्रमणम् 'इदं विष्णुर्विचक्रमे' (ऋ० स० १.२२.१७) इत्यादिश्रुतिषु प्रसिद्धम्। अत एव उरुगायः उरुभिः महद्भिः गीयमानः अतिप्रभूतं गीयमानो वा। य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्रवोचम्।

**टिप्पणी** - नु - शीघ्रम्। कम् इति पादपूर्णार्थो निपातः। यद्यपि नु कम् इति भिन्नौ निपातौ तथापि निघण्टौ हिकम् नुकम् सुकम् आहिकम् आकीम् नकिः माकिः नकीम् आकृतम् इति नवानाम् एकपद्वेन गणना कृता। निपातयोः समासो न भवति। अतः पदपाठे द्वौ पृथगेव प्रदर्शितौ।

**सरलार्थः**- शीघ्रमेव अहं विष्णोः वीर्यपूर्णकार्याणां वर्णनं करिष्यामि, यः महान् गतिसम्पन्नः पादत्रयं गत्वा पार्थिवानि अमायत। किञ्च यः (पवित्रात्मनः कृते) प्रशस्तं मेलनस्थानं निर्माति स्म। अस्य अयं भावः यत् यथा सूर्यः स्वाकर्षणेन सर्वान् भूगोलान् धरति तथा सूर्यादीन् लोकान् कारणं जीवांश्च जगदीश्वरो धत्ते य इमान् असंख्यलोकान् सद्यो निर्ममे यस्मिन् इमे प्रलीयन्ते च स एव सर्वैः उपास्यः।

**व्याकरणम्** -

- अस्कभायत् - स्कभि प्रतिबन्धे इति धातोः लङ्-लकारे प्रथमपुरुषे एकवचने रूपमिदम्। स्तम्भिवान् इत्यर्थः।
- उत्तरम् सधस्थम् - सहशब्दात् उत्तरपदमस्ति चेत् वेदे सहशब्दस्य सध इति प्रयोगः भवति। उत्तरम् इत्यस्य उपरि इत्यर्थः। उपरि पुण्यकृताम् लोकः इति।
- विचक्रमाणः - विपूर्वकात् क्रमु पादविक्षेपे इति धातोः कानच्-प्रत्यययोगेन विचक्रमाण इति शब्दो निष्पद्यते।
- उरुगायः - ऊर्णु आच्छादने इति धातोः उण्-प्रत्यययोगेन उरुशब्दः लभ्यते। गा गतौ इति धातोः अण्-प्रत्यययोगेन गायशब्दः लभ्यते। विष्णुः उरुगायः इति कथ्यते। बहुगतिमान् महागतिः इति तदर्थः। कुतः एवम्। त्रिषु पादेषु त्रीन् लोकान् अतिक्रामति। अत एवमुक्तम्।

**प्र तद्विष्णुः स्तवते वीर्येण**
**मृगो न भीमः कुचरो गिरिष्ठाः।**
**यस्योरुषु त्रिषु विक्रमणे-**
**ष्वधिक्षियन्ति भुवनानि विश्वा।। २।।**

**पदपाठः- प्र। तत्। विष्णुः। स्तवते। वीर्येण। मृगः। न। भीमः। कुचरः। गिरिऽस्थाः।।**

**यस्य। उरुषु। त्रिषु। विऽक्रमणेषु। अधिऽक्षियन्ति। भुवनानि। विश्वा।। २।।**

**अन्वयः-** हे मनुष्या यस्य निर्मितेषूरुषु त्रिषु विक्रमणेषु विश्वा भुवनान्यधिक्षियन्ति तत् स विष्णुः स्ववीर्येण कुचरो गिरिष्ठा मृगो भीमो नेव विश्वाँल्लोकान् प्रस्तवते ॥२॥

**व्याख्या-** यस्येति वक्ष्यमाणत्वात् स इति अवगम्यते। स महानुभावः वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते स्तूयते सर्वैः। वीर्येण स्तूयमानत्वे दृष्टान्तः। मृगो न सिंहादिरिव। यथा स्वविरोधिनो मृगयिता सिंहः भीमः भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते। अस्मिन्नर्थे निरुक्तं- 'मृगो न भीमः कुचरो गिरिष्ठाः'। मृग इव भीमः कुचरो गिरिष्ठाः। मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति। गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः। तद्द्वयमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्यपादानभूतः। परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते' (तै० आ० ८.८.१) इत्यादिश्रुतिषु प्रसिद्धा। किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रयेषु संचारी वा तथा गिरिष्ठाः गिरिवत् उच्छ्रितलोकस्थायी। यद्वा। गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः। ईदृशोऽयं स्वमहिम्ना स्तूयते। किंच यस्य विष्णोः उरुषु विस्तीर्णेषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि आश्रित्य निवसन्ति स विष्णुः स्तूयते।

**टिप्पणी -** अस्मिन् मन्त्रे उरुषु त्रिषु विक्रमणेषु इति अत्र बहुविधानि मतानि आचार्याणां सन्ति। विक्रमणशब्दस्य पादप्रक्षेपः अर्थः। उरुशब्दस्य विस्तीर्ण इत्यर्थः। विस्तीर्णेषु त्रिषु पादप्रक्षेपेषु सर्वाणि भुवन्ति अधिक्षियन्ति आश्रित्य तिष्ठन्ति। विश्व इति सर्वनाम्नः विश्वानि इति रूपम्। वेदे तु विश्वा इति स्थितिः। विष्णोः त्रिषु पादप्रक्षेपेषु सर्वाणि भुवनानि सन्ति। अर्थात् विष्णुः त्रीभिः पादप्रक्षेपैः सर्वाणि भुवनानि अर्थात् सृष्टं जगत् समग्रम् अतिक्रामति। कानि अत्र भुवनानि। के ते पादप्रक्षेपाः। कोऽयमत्र विष्णु। किं तस्य स्वरूपम्। पूर्वमन्त्रे उक्तं यद् विष्णुः उपरि लोकान् अधोलोकान् च सृष्टवान्। शाकपूणिः नाम कश्चित् व्याख्याता आह - विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्याम् अन्तरिक्षे दिवि इति। और्णनाभः इति आचार्यस्य मतं यद् विष्णुरत्र सूर्यः। पूर्वाह्णे समारोहणे प्रथमपादं निधत्ते। मध्याह्ने आकाशम् आरोढुं द्वितीयं पादं निक्षिपति। अपराह्णे गृहं प्रति गमनाय च तृतीयम् पादं प्रसारयति इति।

तस्य इत्थमपि व्याख्या सम्भवति - यः सृष्टिकर्ता स एव विष्णुः। स एव त्रिषु पादप्रक्षेपेषु सृष्टिम् अतिक्रामति। अर्थात् सृष्टिकाले एकः पादप्रक्षेपः। स्थितिकाले द्वितीयः पादप्रक्षेपः। प्रलयकाले तृतीयः पादप्रक्षेपः। इत्थम् सृष्टिम् स अतिक्रामति। यद्यपि एक एव ईश्वरः सृष्टिकाले ब्रह्मा, पालनरतो विष्णुः, संहारे प्रवृत्तः महेश्वरः इति त्रिभिर्नामभिर्गीयते। तथापि वेदोत्तरसाहित्येऽपि विष्णुरेव सृष्टिस्थितिसंहृतिकर्ता इति बाहुल्येन उक्तं दृश्यते।

**सरलार्थः-** विष्णुः यस्य त्रिषु पादेषु समस्तप्राणी निवसति, यः वीर्ययुक्तकार्याय स्तुत्यः भवति। यथा पर्वते निवसन्तः किञ्च स्वेच्छया विचरन्तः भयङ्कराः पशवः। अस्य अयं भावः यत् अत्रोपमालङ्कारः।



नहि कश्चिदपि पदार्थ ईश्वरसृष्टिनियमक्रममुल्लङ्घितुं शक्नोति यो धार्मिकाणां मित्रइवाह्लादप्रदो दुष्टानां सिंहइव भयप्रदो न्यायादिगुणधर्त्ता परमात्माऽस्ति स एव सर्वोषामधिष्ठाता न्यायाधीशोऽस्तीति वेदितव्यम्।

**व्याकरणम् -**

- स्तवते - स्तु प्रशंसायाम् इति धातोः कर्मणि आत्मनेपदम् इदम्। प्रथमपुरुषस्य एकवचनम्।
- मृगः - मृज् गतौ इति धातोः कप्रत्यये मृगशब्दो निष्पद्यते।
- भीमः - भी भये इति धातोः मक् प्रत्ययः प्रयुक्तः अस्ति।
- अधिक्षियन्ति - अधिपूर्वकात् क्षि निवासे इति धातोः लटि प्रथमपुरुषे बहुवचने इदं रूपम्। आश्रित्य निवसन्ति इति तदर्थः।
- गिरिष्ठाः - गिरिशब्दात् स्था गतिनिवृत्तौ इति धातोः क्विपि प्रत्यये गिरिष्ठाः इति रूपम्। तत्र गिरि इति पदेऽपि गिर् इति वाणी। तस्य सप्तमी गिरि। तस्याम् तिष्ठति स गिरिष्ठाः इति। अर्थात् वाण्याम् तिष्ठति सः। गिरिशब्दः पर्वतवाची वर्तते। तदा तु पर्वते तिष्ठति सः इति अर्थः आयाति। अर्थात् पर्वतः यथा उच्छ्रितः तथा उन्नतलोकवासी इत्यर्थः।

**प्र विष्णवे शूषमेतु मन्म**
**गिरिक्षित उरुगायाय वृष्णे।**
**य इदं दीर्घं प्रयतं सधस्थ-**
**मेको विममे त्रिभिरित्पदेभिः॥ ३॥**

**पदपाठः- प्र। विष्णवे। शूषम्। एतु। मन्म। गिरिऽक्षिते। उरुऽगायाय। वृष्णे॥ यः। इदम्। दीर्घम्। प्रऽयतम्। सधऽस्थम्। एकः। विऽममे। त्रिऽभिः। इत्। पदेभिः॥ ३॥**

**अन्वयः-** हे मनुष्या य एक इत् त्रिभिः पदेभिरिदं दीर्घ प्रयतं सधस्थं प्रविममे तस्मै वृष्णे गिरिक्षित उरुगायाय विष्णवे मन्म शूषमेतु ॥३॥

**व्याख्या-** विष्णवे सर्वव्यापकाय शूषम् अस्मत्कृत्यादिजन्यं महत् बलत्वं मन्म मननं स्तोत्रं मननीयं शूषं बलं वा विष्णुम् एतु प्राप्नोतु। कर्मणः संप्रदानत्वात् चतुर्थी। कीदृशाय। गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम्। एवं महानुभावं शूषं प्राप्नोतु। कोऽस्य विशेष इति उच्यते। यः विष्णुः इदं प्रसिद्धं दृश्यमानं दीर्घम् अतिविस्तृतं प्रयतं सधस्थं सहस्थानं लोकत्रयम् एकः इत् एक एवाद्वितीयः सन् त्रिभिः पदेभिः पादैः विममे विशेषेण निर्मितवान्।

**सरलार्थः-** (मम) शक्तिशाली प्रार्थना, प्रशस्तलोके वासकारिणं, प्रशस्तपादयुक्तम्, इच्छापूर्तिकारकं, विष्णुं प्रति (गच्छेत्) यः आत्मनः साधनायाः प्रशस्तमेलनस्थानं त्रिभिः पादैः अमायत।

अस्य एवं भावः न खलु कश्चिद् अपि अनन्तबलयुक्तं जगदीश्वरमन्तरेण इदं विचित्रं जगत् स्रष्टुं धर्त्तुं प्रलाययितुं च शक्नोति तस्मादेतं विहाय अन्यस्य उपासनं केनचिदपि नैव कार्य्यम्।

**व्याकरणम् -**

- शूषम् - शूषधातोः घञि शूष इति रूपम्। तस्य द्वितीयान्तम् रूपम् शूषम् इति।
- गिरिक्षिते - क्षि निवासे इति धातोः क्विप् प्रत्ययः। तुगागमः। गिरि+क्षिते

**यस्य॒ त्री पू॒र्णा मधु॑ना प॒दा-**
**न्यक्षी॑यमाणा स्व॒धया॑ मद॑न्ति।**
**य उ॑ त्रि॒धातु॑ पृथि॒वीमु॒त द्या-**
**मेको॑ दा॒धार॒ भुव॑नानि॒ विश्वा॑।। ४।।**

**पदपाठः- यस्य॑। त्री। पू॒र्णा। मधु॑ना। प॒दानि॑। अक्षी॑यमाणा। स्व॒धया॑। मद॑न्ति।। यः।**

**ऊँ॒म् इति॑। त्रि॒ऽधातु॑। पृ॒थि॒वीम्। उ॒त। द्याम्। एकः॑। दा॒धार॑। भुव॑नानि। विश्वा॑।। ४।।**

**अन्वयः-** हे मनुष्या यस्य रचनायां मधुना पूर्णाऽक्षीयमाणा त्री पदानि स्वधया मदन्ति य एक उ पृथिवीमुत द्यां त्रिधातु विश्वा भुवनानि दाधार स एव परमात्मा सर्वैर्वेदितव्यः ॥४॥

**व्याख्या-** यस्य विष्णोः मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान्। य उ य एव पृथिवीं प्रख्यातां भूमिं द्याम् उत द्योतनात्मकमन्तरिक्षं च विश्वा भुवनानि चतुर्दश लोकांश्च। यद्वा। पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि। द्युशब्देन तदवान्तररूपाणि भुवादिसप्तभुवनानि। एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि। त्रिधातु। त्रयाणां धातूनां समाहारस्त्रिधातु। पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान्। तुजादित्वात् अभ्यासस्य दीर्घत्वम्। उत्पादितवानित्यर्थः। छन्दोगारण्यके- 'तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षन्त' इति भूतत्रयसृष्टिमुक्त्वा 'हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा० उ० ६.३.२-३) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता। यद्वा। त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः।

**सरलार्थः-** अक्षीयमाणम्, यस्य मधुपूर्णं पादत्रयं (मनुष्येभ्यः) स्वशक्त्या आनन्दयति, यः एकाकी एव त्रीन् धातून्, पृथिवीम्, आकाशं तथा सम्पूर्णं लोकं धारयति (तं विष्णुं प्रति मम शक्तिशाली स्तुतिः गच्छेत्)। अस्य अयं भावः योऽनादिकारणात् सूर्यादिप्रकाशवत् क्षितीरुत्पाद्य सर्वैर्भोग्यैः पदार्थैः सह संयोज्याऽऽनन्दयति तद्गुणकर्मोपासनेनानन्दो हि सर्वैर्वर्द्धनीयः।



**तदस्य प्रियमभि पाथो अश्यां**

**नरो यत्र देवयवो मदन्ति।**

**उरुक्रमस्य स हि बन्धुरित्था**

**विष्णोः पदे परमे मध्व उत्सः।। ५।।**

**पदपाठः- तत्। अस्य। प्रियम्। अभि। पाथः। अश्याम्। नरः। यत्र। देवऽयवः। मदन्ति।। उरुऽक्रमस्य। सः। हि। बन्धुः। इत्था। विष्णोः। पदे। परमे। मध्वः। उत्सः।। ५।।**

**अन्वयः-** (अहं) यत्र देवयवो नरो मन्दति तदस्योरुक्रमस्य विष्णोः प्रियं पाथोभ्यश्यां यस्य परमे पदे मध्व उत्सइव तृप्तिकरो गुणो वर्त्तते स हि इत्था नो बन्धुरिवास्ति ॥५॥

**व्याख्या-** अस्य महतो विष्णोः प्रियं प्रियभूतं तत् सर्वैः सेव्यत्वेन प्रसिद्धं पाथः। अन्तरिक्षनामैतत्, 'पाथोऽन्तरिक्षं पथा व्याख्यातम्' (निरु० ६.७) इति यास्केनोक्तत्वात्। अविनश्वरं ब्रह्मलोकमित्यर्थः। अश्याम् व्याप्नुयाम्। तदेव विशेष्यते। यत्र स्थाने देवयवः देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः नरः मदन्ति तृप्तिमनुभवन्ति। तदश्यामित्यन्वयः। पुनरपि तदेव विशेष्यते। उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना अत एव विष्णोः व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य उत्सः निष्पन्दो वर्तते। तदश्याम्। यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेण अमृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः। ततोऽधिकं नास्तीत्याह। इत्थमुक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरः वा तस्य पदं प्राप्तवतां न पुनरावृत्ते। 'न च पुनरावर्तते' इति श्रुतेस्तस्य बन्धुत्वम्। हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः।

**सरलार्थः-** विष्णोः तं लोकं प्राप्तुम् इच्छामि यत्र देवतानाम् इच्छया मनुष्याः आनन्दं कुर्वन्ति। महतः गतिशीलस्य विष्णोः एकः मधुसरोवरः अस्ति। एवं निश्चयमेव स सर्वेषां मित्रमेव। अस्य अयं भावः अत्र उपमावाचकलुप्तोपमालङ्कारौ। ये परमेश्वरेण वेदद्वारा दत्ताम् आज्ञाम् अनुगच्छन्ति ते मोक्षसुखमश्नुवते। यथा जना बन्धुं प्राप्य सहायं लभन्ते तृषिता वा मधुरजलं कूपं प्राप्य तृप्यन्ति तथा परमेश्वरं प्राप्य पूर्णाऽनन्दा जायन्ते।

**व्याकरणम् -**

- देवयवः - देव+यु क्विप्
- इत्था - इत्थम् इत्यर्थे आत्वम्



**ता वां वास्तून्युश्मसि गमध्यै**

**यत्र गावो भूरिशृङ्गा अयासः।**

**अत्राह तदुरुगायस्य वृष्णः**

**परमं पदमव भाति भूरि॥ ६॥**

**पदपाठः- ता। वाम्। वास्तूनि। उश्मसि। गमध्यै। यत्र। गावः। भूरिऽशृङ्गाः। अयासः। अत्र। अह। तत्। उरुऽगायस्य। वृष्णः। परमम्। पदम्। अव। भाति। भूरि॥ ६॥**

**अन्वयः-** (हे आप्तौ विद्वांसौ) यत्रायासो भूरिशृङ्गा गावः सन्ति ता तानि वास्तूनि वां युवयोर्गमध्यै वयमुश्मसि। यदुरुगायस्य वृष्णः परमेश्वरस्य परमं पदं भूर्यवभाति तदत्राह वयमुश्मसि ॥६॥

**व्याख्या-** हे पत्नीयजमानौ वां युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोः गमनाय उश्मसि कामयामहे। तदर्थं विष्णुं प्रार्थयाम इत्यर्थः। तानीत्युक्तं कानीत्याह। यत्र येषु वास्तुषु गावः रश्मयः भूरिशृङ्गाः अत्यन्तोन्नत्युपेता बहुभिराश्रयणीया वा अयासः अयना गन्तारोऽतिविस्तृताः। यद्वा। अयासो गन्तारः। अतादृशाः। अत्यन्तप्रकाशयुक्ता इत्यर्थः। अत्र आह अत्र खलु वास्त्वाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षितुर्विष्णोस्तत्तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूरि अतिप्रभूतम् अव भाति स्वमहिम्ना स्फुरति। अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः- 'तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणयोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयना। ' तत्र तदुरुगायस्य विष्णोः महागतेः परमं पदं परार्ध्यस्थम् अवभाति।

**सरलार्थः-** अस्मिन् मन्त्रे पत्नीयजमानौ प्रति उच्यते हे पत्नीयजमानौ युवां तत् स्थानं प्रति गच्छतं यत्र शृङ्गिनः सदा गतिशीलाः गावः सन्ति। यत्र महतः गतिशीलस्य, इच्छापूर्तिकारकस्य विष्णोः परमं धाम अधोलोके प्रकाशते। अयमस्य भावः यत् अत्र वाचकलुप्तोपमालङ्कारः। यत्र विद्वांसो मुक्तिं प्राप्नुवन्ति तत्र किञ्चिदप्यन्धकारो नास्ति प्राप्तमोक्षाश्च भास्वरा भवन्ति तदेवाप्तानां मुक्तिपदं ब्रह्म सर्वप्रकाशकमस्तीति।

**व्याकरणम् -**

- उश्मसि - वश् कान्तौ इति धातोः लट् प्रथमपुरुषः बहुवचनम्। वकारस्य उकारः अर्थात् सम्प्रसारणम् छान्दसम्।
- अयासः - इण् धातोः अचि जसि असुक् इति योगे अयास इति शब्दः निष्पद्यते। गन्तारः इति तदर्थः।



- वाम् - युष्मदर्थमिति बहुत्वम् द्विवचनस्थाने।
- गमध्यै - गम् धातोः तुमुनः स्थाने शध्यै प्रत्ययः। ततः इदं रूपम्।



## पाठगतप्रश्नाः

१. विष्णुसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।
२. नु इत्यस्मिन् अर्थे किं पदद्वयं प्रयुक्तम्।
३. विष्णुशब्दस्य कः अर्थः।
४. वीर्याणि इत्यस्य कः अर्थः।
५. विममे इत्यस्य कः अर्थः।
६. रजःशब्दः कीदृशः।
७. विष्णोः कतिधा क्रमणम्।
८. कुचरः इत्यस्य कः अर्थः।
९. शूषम् इत्यस्य कः अर्थः।
१०. यस्य त्री पूर्णा... इत्यादिमन्त्रे पृथिवीशब्दस्य कः अर्थः।
११. दाधार इत्यस्य कः अर्थः।
१२. त्रिधातु इत्यस्य विग्रहवाक्यं लिखत।
१३. पाथः इत्यस्य कः अर्थः।
१४. स हि बन्धुरित्था... इत्यादि मन्त्रांशे हिशब्दः किमर्थः।
१५. उश्मसि इत्यस्य कः अर्थः।

## २०.२) विष्णुस्वरुपम्।

विष्णुः एकः द्युस्थानीयः देवः। ऋग्वेदे तस्य स्तुत्यर्थं पञ्च सूक्तानि प्राप्यन्ते। यद्यपि सूक्तानां संख्या स्वल्पा विद्यते तथापि माहात्म्यदृष्ट्या एतानि शीर्षस्थानानि।

विष्णुशब्दः विष्-धातोः निष्पद्यते यस्य अर्थो भवति व्यापनशीलः इति। अर्थात् त्रिषु लोकेषु एव यस्य कीर्तिः सुप्रसिद्धा स भवति विष्णुः इति। विष्णुशब्दस्य अन्यः अर्थः भवति क्रियाशीलः। अयं विष्णुः सर्वापेक्षया अधिकक्रियाशीलः वर्तते। शरीरस्य अधिष्ठातृदेवः भवति विष्णुः। पक्षिणां मध्ये अस्य वाहनं भवति गरुडः इति। भीम-वृष्ण-गिरिजा-गिरिक्षित-सहीयान्-इत्यादिनाम्ना अपि अयमेव विष्णुः



व्यपदिश्यते। विष्णुः युवकः तथा विशालकायः अस्ति इति ऋग्वेदे वर्णितः। वामनावतारे स त्रिविक्रमरूपेण परिचितः। तस्य महत्त्वपूर्णं कार्यं भवति पादयोः त्रिवारं विस्तारः।

**त्रीणि भान्ति रजांस्तस्य यत्पदानि तु तेजसा।**

**येन मेधातिथिः प्राह विष्णुमेनं त्रिविक्रमम्।।२.६४।।**

ऋग्वेदे बहुवारमेव विक्रम-उरुक्रम-उरुगाय-इत्यादिशब्देन तस्य पादत्रयं वर्णितम् अस्ति। पादयोः त्रिः विस्तारेण स समग्रम् अपि विश्वं व्याप्नोत्। तस्य द्विः विस्तारः लौकिकमनुष्याणां ज्ञानविषयः भवति परन्तु तृतीयवारं यः विस्तारः सः साधारणैः अगम्यः। अतः ज्ञानिनः तृतीयं पादं द्रष्टुं गगने एव दृष्टिं स्थापयन्ति।

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिदीव चक्षुराततम्।।ऋग्वेद-१.२२.२०।।**

यत्र सज्जनाः निवसन्ति पुनश्च यत्र मधुसरोवरः तत्रैव विष्णुः निवसति। विष्णुः यत्र निवसति तत्र देवाः सर्वदैव विचरन्ति। विष्णोः त्रयाणां पादानां विषये प्राचीनकालादेव विमतिः दृश्यते। विष्णोः प्रथमेन पादेन पृथ्वीलोकस्य सङ्क्रमणं द्वितीयेन च अन्तरिक्षलोकस्य तथा तृतीयेण द्युलोकस्थसूर्यमण्डलस्य सङ्क्रमणम् इत्यादिमतानि प्राप्यन्ते। वस्तुतस्तु विष्णुः सूर्यस्य एकः प्रतिरूपः अस्ति। अथर्ववेदेऽपि विष्णुदेवः उष्णप्रदातृत्वेन ख्यातः। **(अथर्ववेद-५.२६.७)।**

विष्णोः सम्बन्धः मुख्यरूपेण इन्द्रेण सहापि वर्तते। अयम् इन्द्रस्य मित्रं भवति। पुराणेषु एष विष्णुः उपेन्द्ररूपेणापि (इन्द्रस्य अनुजः) वर्णितः। वृत्रासुरस्य वधसमये विष्णुः इन्द्रस्य सहायतां विहितवान्। श्रूयते यद् वृत्रासुरवधसमये इन्द्रः पादविस्ताराय विष्णुं प्रोवाच इति।

**अथाब्रवीद् वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं विक्रमस्व।। ऋग्वेद-४.१८.११।।**

शतपथब्राह्मणानुसारं वृत्रवधसमये विष्णुः इन्द्रेण सह युद्धस्थले एव आसीत्। इन्द्रेण सह मित्रतायाः सत्त्वात् मरुद्गणा अपि अस्य मित्राणि आसन्।

विष्णोः चरित्रस्य एकः विशेषः भवति यत् स गर्भस्य रक्षकः। गर्भाधाननिमित्ताय अन्यैः देवैः सह विष्णोरपि स्तुतिः प्रसिद्धा अस्ति। एतद् अतिरिच्य विष्णुः सर्वदैव परोपकारी शरणागतरक्षकः भक्तवत्सलः दयालुः उदारश्च अस्ति। स एव विश्वं धारयति पालयति च। गिरिक्षितः - इत्याद्युपाधियुक्तः विष्णुः सूर्यस्य प्रतिनिधित्वेनापि वर्णितः। ऋग्वेदे बहुत्र इन्द्रमित्रवरुणादिदेवानां समष्टिरेव विष्णुत्वेन अभिहितः।

**इन्द्रं मित्रे वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**

**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।। -(ऋग्वेद- १.१६४.४६)**

## २०.३) विष्णुसूक्तस्य सारः।

विष्णुः वैदिकदेवेषु अत्यन्तः प्रसिद्धः। अयमेव सर्वेषां चराचरजीवानाम् आधारः। अयं ब्राह्मणप्रियः अतः अस्य वक्षसि ब्राह्मणानां पदाघातस्य लक्षणं विद्यते। अस्यैव उदरात् कमलोत्पत्तिः



जाता यत्र उपविश्य ब्रह्मा ब्रह्माण्डं सृष्टवान्। अस्य पादादेव गङ्गायाः सृष्टिरिति प्रसिद्धिः। अयं च विश्वस्य पालनकर्ता इत्यपि उच्यते। एवं वैदिकदेवेषु अत्यधिकं माहात्म्यं धत्ते अयं प्रसिद्धः विष्णुदेवः इति।

अस्य सूक्तस्य आदावेव श्रुतिः प्रतिजानीते यद् शीघ्रमेव महद्गतियुक्तस्य विष्णोः वीरत्वपूर्णं कार्यं वर्णयामि, कथं स पादत्रयगमनेन समग्रं विश्वं व्याप्तवान्, सज्जनानां कृते उच्चस्थानं निर्मितवान् इत्यादिकञ्च वक्ष्यामि इति। पर्वतस्थः स्वेच्छया गमनवान् भयानकपशुः यथा स्वतन्त्रः तथा अयमपि स्वतन्त्रः अस्यैव त्रिपादभूमिमध्ये सर्वे प्राणिनः जीवन्ति अतः अयं स्तुत्यः। पुण्यात्मानां मिलनस्थानस्य पादत्रयेण व्यापकः उच्चस्थाननिवासी अयं विष्णुः अस्माकं शरणं भवतु, अस्माकम् इच्छां च पूरयतु इति। अस्माकं स्तुतिः पृथिवीजलतेजस्स्वरूपं शाश्वतम् आनन्ददायकम् अकाशस्य तथा विश्वस्य धातारं विष्णुं प्राप्नुयात्। विष्णोः प्रियः लोकः ममापि भवतु यत्र मनुष्याः निरविच्छिन्नम् आनन्दं प्राप्नुवन्ति। विष्णोः लोके जनानां मोदनार्थम् एकः मधुसरोवरः अस्ति अतः निश्चयेन स सर्वेषां मित्रमेव भवति। पत्नी-यजमानौ प्रति उच्यते यत् तयोरपि विष्णुलोकप्राप्तिः भवतु यत्र प्रखरप्रकाशेन सर्वत्र ज्योतिः प्रसृता विद्यते, तथा सर्वेषां मनोरथानां परिपूरकः विष्णुः स्वभासा प्रकाशते इति।

##  विष्णसूक्तांशे पाठसारः

अस्मिन् पाठे विष्णुसूक्तस्य षट् मन्त्राः सन्ति। अस्मिन् विष्णुसूक्ते ऋषिः वदति सर्वत्र व्यापनशीलस्य विष्णोः वीरकर्माणि शीघ्रं वदामि। यः पृथिवीसम्बद्धानि अग्निवाय्वादीनि निर्मितवान्। यः अतिविस्तीर्णम् अन्तरिक्षं च निर्मितवान् आधाररूपेण। भूमिं विविधरूपेण क्रममाणः सः महद्भिः प्रभूतं गीयते। तादृशस्य विष्णोः वीरकर्माणि वदामि। वीरकर्मणा स्तूयमानः सिंहादिवत् भयानकः, शत्रुवधकर्त्ता, उन्नतवाचि मन्त्रेषु स्थितः, यस्य विष्णोः पादप्रक्षेपैः इदं सर्वं भुवनम् आश्रितं जातं, सः विष्णुः प्रकर्षेण स्तूयते। उन्नतप्रदेशे तिष्ठते बहुभिः गीयमानाय कामानां वर्षित्रे सर्वव्यापकाय विष्णवे अस्मत्कर्मजन्यफलं अस्मत्स्तोत्रजन्यबलं वा अस्तु। यः विष्णुः इदम् अतिविस्तृतं लोकत्रयं अद्वितीयः सन् त्रिभिः पादैः विशेषेण निर्मितवान्। विष्णोः मधुरेण पूर्णेन पादत्रयप्रक्षेपणेन अक्षयरूपेण आश्रितजनाः अन्नेन रक्षिताः। पृथिवीं, द्युलोकं सर्वाणि भुवनानि च पृथिव्यप्तेजोरूपेण धातुत्रयेण धृतवान्। विष्णोः प्रियतमं सर्वैः सेयत्वेन प्रसिद्धं तम् अविनाशिब्रह्मलोकं व्याप्नुयां यस्मिन् च ब्रह्मलोके विष्णुम् आत्मनः इच्छन्तः नराः महतीं तृप्तिमनुभवन्ति। अत्यन्तं क्रममाणस्य विष्णोः उत्कृष्टे स्थाने मधुरनिःस्यन्दो वर्तते। अनेन प्रकारेण सः विष्णुः सर्वेषां बन्धुत्वेन राजते। अन्तिममन्त्रे दम्पतिं प्रति उच्यते अहे दम्पती (यागकर्मणः यजमानौ) युष्मभ्यं प्रसिद्धानि सुखेन उषितुं योग्यानि स्थानानि कामयामहे, तदर्थं विष्णुं प्रार्थयामहे। येषु स्थानेषु रश्मयः अत्युन्नतस्थानाद् गन्तारः स्युः, अस्मिन् स्थाने वास्त्वाधारभूतद्युलोके बहुभिः स्तूयमानस्य कामानां वर्षणशीलस्य विष्णोः तादृशम् उत्कृष्टं स्थानं स्वमहिम्ना स्फुरेत्।

# ॥मित्रावरुणसूक्तम्॥

## प्रस्तावना

प्रस्तुतेऽस्मिन् पाठस्य उत्तरार्धे मित्रावरुणसूक्तम् प्रस्तूयते। वेदोक्तेषु प्रसिद्धेषु सूक्तेषु अन्यतममिदं प्रसिद्धं मित्रावरुणसूक्तम्। वैदिकसाहित्ये मित्रावरुणौ भातृसदृशस्नेहस्य प्रतीकम् अस्ति। वैदिकव्याकरणानुसारेण अर्थात् निरुक्तानुसारेण मित्रावरुणौ वायू इति कथ्यते। मित्रः प्राणरक्षकरूपेण प्रतिपादितः। वरुणश्च जलधारकरूपेण अथवा वृष्टिकारकरूपेण प्रतिपादितः। ऋग्वेदस्य ऐतरेयब्राह्मणग्रन्थानुसारेण मित्रः रात्रिरूपेण वरुणश्च दिनरूपेण प्रतिपादितौ। अस्य मित्रावरुणसूक्तस्य आत्रेयः श्रुतिविद् ऋषिः, मित्रावरुणौ देवौ, त्रिष्टुप् छन्दः।

## २०.४) अधुना मूलपाठं पठाम (मित्रावरुणसूक्तम्)

**ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्त्यश्वान्।**
**दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यम्॥१॥**

**तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे।**
**विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त॥२॥**

**अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः।**
**वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू॥३॥**

**आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक्।**
**घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति॥४॥**

**अनु श्रुताममतिं वर्धदुर्वीं बर्हिरिव यजुषा रक्षमाणा।**
**नमस्वन्ता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वन्तः॥५॥**

**अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः।**
**राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ॥६॥**



हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य१श्वाजनीव।
भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगत्र्यस्य॥७॥

हिरण्यरूपमुषसो व्युष्टावयः स्थूणमुदिता सूर्यस्य।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च॥८॥

यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा।
तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम॥९॥

## २०.४.१) इदानीं मूलपाठम् अवगच्छाम (मित्रावरुणसूक्तम्)

ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्त्यश्वान्।
दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यम्॥१॥

**पदपाठः-** ऋतेन। ऋतम्। अपिऽहितम्। ध्रुवम्। वाम्। सूर्यस्य। यत्र। विऽमुचन्ति। अश्वान्॥ दश। शता। सह। तस्थुः। तत्। एकम्। देवानाम्। श्रेष्ठम्। वपुषाम्। अपश्यम्॥ १॥

**अन्वयः-** ऋतेन अपिहितम् ऋतं ध्रुवं वा सूर्यस्य यत्र वाम् अश्वान् विमुचन्ति। दश शता सह तस्थुः तत् एकं देवानां वपुषां श्रेष्ठम् अपश्यम्।

**व्याख्या-** ऋतेन ऋतमिति नवर्चं षष्ठं सूक्तमात्रेयस्य श्रुतविद आर्षं त्रैष्टुभं मैत्रावरुणम्। तथा चानुक्रम्यते- ' ऋतेन नव श्रुतविन्मैत्रावरुणं वै तत् ' इति। वै-तदित्युभयोः प्रयोगात् तुह्यादिपरिभाषयैतदादीन्येकादशसूक्तानि मित्रावरुणदेवत्यानि। विनियोगो लैङ्गिकः।

सूर्यस्य ऋतं सत्यभूतं मण्डलम् ऋतेन उदकेन अपिहितम् आच्छादितं ध्रुवं शाश्वतम् अपश्यम् इति सम्बन्धः। यत्र वां युवयोः स्थितिस्तदित्यर्थः। सूर्यमण्डले मित्रावरुणयोः स्थितिः 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः', 'उद्वां चक्षुर्वरुण सुप्रतीकं देवयोः', 'चक्षुर्मित्रस्य वरुणस्य' इत्यादिषु प्रसिद्धा। यत्र यस्मिन् मण्डले स्थितान् अश्वान् विमुचन्ति विमोचयन्ति स्तोतारः। मन्देहादिभिर्निरुद्धानित्यर्थः। अथवा शीघ्रधावनाय स्तुत्या प्रेरयन्ति। यस्मिंश्च मण्डले दश शता शतानि सहस्रसंख्यका रश्मयः तस्थुः तिष्ठन्ति तादृशं देवानां वपुषां वपुष्मतां तेजोवताम् अग्न्यादीनां श्रेष्ठं प्रशस्यतमम्। मत्वर्थलक्षणा। अथवा व्यधिकरणषष्ठी। देवानां वपुषां शरीराणां श्रेष्ठम्। मण्डलं हि सूर्यस्य

वपुःस्थानीयम्। तन्मण्डलम् अपश्यम्। अथवा वां युवयोर्मध्ये सूर्यस्य मण्डलमपश्यमिति व्याख्येयं 'मैत्रं वा अहः' इति श्रुतेर्मित्रस्यैव सूर्यत्वादित्याशयेन।

**सरलार्थः-** जलेन आच्छादितं शाश्वतं सूर्यस्य मण्डलम् अहं पश्यामि। यत्र युवयोः अश्वसमूहान् स्तोतारः विमोचयन्ति। यत्र च सहस्ररश्मयः मिथः अवतिष्ठन्ते। देवानाम् एकां श्रेष्ठमूर्तिम् अहं पश्यामि।

**व्याकरणम्-**

- ऋतेन- ऋतशब्दस्य तृतीयैकवचने ऋतेन इति रूपम्।
- अपिहितम्- अपिपूर्वकधा-धातोः क्तप्रत्यये विकल्पेन पिहितम् इति रूपम्। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति न्यायेन अपीति उपसर्गस्य अकारलोपः विकल्पेन भवति। तेन पिहितम् अपिहितं च इति रूपद्वयं भवति।
- विमुचन्ति- विपूर्वकमुच्-धातोः लट्-लकारे प्रथमपुरुषबहुवचने विमुचन्ति इति रूपम्।
- तस्थुः- स्था-धातोः लिट्-लकारे प्रथमपुरुषबहुवचने तस्थुः इति रूपम्।
- वपुषाम्- वपुष्-शब्दस्य षष्ठीबहुवचने वपुषाम् इति रूपम्।
- अपश्यम्- दृश्-धातोः लङ्-लकारे उत्तमपुरुषैकवचने अपश्यम् इति रूपम्।

**तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे।**
**विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त॥२॥**

**पदपाठः- तत्। सु। वाम्। मित्रावरुणा। महित्वम्। ईर्मा। तस्थुषीः। अहऽभिः। दुदुह्रे॥**
**विश्वाः। पिन्वथः। स्वसरस्य। धेनाः। अनु। वाम्।एकः। पविः। आ। ववर्त॥२॥**

**अन्वयः** - मित्रावरुणा वां तत् महित्वं सु ईर्मा अहोऽभिः तस्थुषीः दुदुह्रे स्वसरस्य विश्वाः धेनाः पिन्वथः अनु वाम् एकः पविः आववर्त।

**व्याख्या-** हे मित्रावरुणा वां युवयोः तत् महित्वं महत्त्वं सु सुष्ठु, अतिप्रशस्तमित्यर्थः। किं तदित्युच्यते। ईर्मा सततगन्ता सर्वस्य प्रेरको वादित्यः अहभिः अहोभिर्वर्षर्तुसम्बन्धिभिः तस्थुषीः स्थावरभूता अपो दुदुहे दुग्धे। किञ्च स्वसरस्य स्वयं सर्तुरादित्यस्य विश्वाः सर्वाः धेनाः लोकानां प्रीणयित्रीर्द्युतीः पिन्वथः वर्धयथः। वां युवयोः एकः अप्रतियोगी पविः। पविरिति रथस्य नेमिः 'पवी रथनेमिर्भवति' इति यास्कवचनात्, तथाप्यत्र लक्षितलक्षणया रथे वर्तते, केवलचक्रस्यावर्तनायोगात्। युवयोरेको रथः अन्वाववर्त अनुक्रमेण परिभ्रमति।

**सरलार्थः-** हे मित्रावरुणौ युवयोः उभयोः स महिमा अतिशयेन प्रशस्तः। सततगमनशीलः यः सूर्यः स नित्यगमनेन स्थितजलसमूहं दोग्धि। युवां परिभ्रमतः सूर्यस्य सकलकिरणसमूहस्य वर्धनम् अकुरुतम्। एकनेमिरथः युवयोः अनुग्रहेण आवर्तते।

**व्याकरणम्-**



- मित्रावरुणा- मित्रश्च वरुणश्चेति मित्रावरुणौ इति द्वन्द्वसमासः।
- तस्थुषीः- स्था-धातोः क्वसुन्प्रत्यये स्त्रियाम् ङीप्प्रत्यये द्वितीयाबहुवचने तस्थुषीः इति रूपम्।
- अहभिः- अहन्-शब्दस्य तृतीयाबहुवचने अहभिः इति रूपम्।
- दुदुह्रे- दुह्-धातोः लिट्-लकारे आत्मनेपदे प्रथमपुरुषबहुवचने दुदुह्रे इति रूपम्।
- धेनाः-धे-धातोः शब्दस्यास्य निष्पत्तिः। धेनाशब्दस्य द्वितीयाबहुवचने धेनाः इति रूपम्।
- पविः- पू-धातोः 'अच इः' इति औणादिकसूत्रेण इप्रत्यये पविः इति रूपम्।
- आववर्त- आपूर्वकवृत्-धातोः लिट्-लकारे प्रथमाबहुवचने आववर्त इति रूपम्।

**अधा॑रयतं पृथि॒वीमु॒त द्यां मि॒त्रराजाना वरुणा॒ महो॑भिः।**

**व॒र्धय॑त॒मोष॑धी॒: पिन्व॑तं॒ गा अव॑ वृ॒ष्टिं सृ॑जतं जीरदानू॥३॥**

**पदपाठः– अधा॑रयतम्। पृ॒थि॒वीम्। उ॒त। द्याम्। मि॒त्र॑ऽराजाना। व॒रु॒णा॒। मह॑ःऽभिः॥**

**व॒र्धय॑तम्। ओष॑धीः। पिन्व॑तम्। गाः। अव॑। वृ॒ष्टिम्। सृ॒ज॒त॒म्। जी॒र॒दा॒नू॒ इति॑ जीरदानू॥ ३॥**

**अन्वयः-** मित्रराजाना वरुणा महोभिः पृथिवीम् उत द्याम् अधारयतम्। ओषधीः वर्धयतं, गाः पिन्वतं जीरदानू वृष्टिम् अवसृजतम्।

**व्याख्या-** हे मित्रराजाना मित्रभूताः स्तोतारो राजानः स्वामिन ईश्वरा भवन्ति ययोरुपासनावशात् तौ मित्रराजानौ। हे वरुणा। प्रतियोग्यपेक्षया द्विवचनम्। अत्र पादादित्वादाद्यं पदं न निहन्यते। हे देवौ, महोभिः तेजोभिः स्वसामर्थ्यैः पृथिवीम् उत अपि च द्याम् अधारयतम्। हे देवौ, युवाम् ओषधीः वर्धयतम् वृष्टिप्रेरणेन। गाः पिन्वतम् गवाश्वादीन् वर्धयतम्। तदर्थं वृष्टिम् अवसृजतम् अवाङ्मुखं प्रेरयतं हे जीरदानू क्षिप्रदानौ।

**सरलार्थः-** हे राजद्वय, मित्र वरुण च युवां तेजसा पृथिवीं द्युलोकं च धारयथः। युवां औषधसमूहं वर्धयतं, गवादपशून् वर्धयतम्। किञ्च हे क्षिप्रदानौ, युवां वृष्टिप्रेरणं कुरुतम्।

**व्याकरणम्-**

- अधारयतम्- धृ-धातोः णिचि लङ्-लकारे मध्यमपुरुषद्विवचने अधारयतम् इति रूपम्।
- महोभिः- महस्-शब्दस्य तृतीयाबहुवचने महोभिः इति रूपम्।
- वर्धयतम्- वृध्-धातोः णिचि लोट्-लकारे मध्यमपुरुणद्विवचने वर्धयतम् इति रूपम्।
- पिन्वतम्- पिव्-धातोः लोट्-लकारे मध्यमपुरुषद्विवचने पिन्वतम् इति रूपम्।
- जीरदानू- जीरं दानू ययोस्तौ इति बहुव्रीहिसमासे जीरदानू इति रूपम्।



**आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक्।**
**घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति॥४॥**

**पदपाठः– आ। वाम्। अश्वासः। सुऽयुजः। वहन्तु। यतऽरश्मयः। उप। यन्तु। अर्वाक्॥**
**घृतस्य। निःऽनिक्। अनु। वर्तते। वाम्।उप। सिन्धवः। प्रऽदिवि।क्षरन्ति॥४॥**

**अन्वयः-** सुयुजः अश्वासः वाम् आवहन्तु यतरश्मयः अर्वाक् उपयन्तु घृतस्य निर्णिक वाम् अनुवर्तते। प्रदिवि सिन्धवः उपक्षरन्ति।

**व्याख्या-** हे मित्रावरुणौ वां युवाम् अश्वासः अश्वाः सुयुजः सुष्ठु रथे युक्ताः सन्तः आवहन्तु। यतरश्मयः सारथिनियतप्रग्रहास्ते अर्वाक् उपयन्तु। घृतस्य उदकस्य निर्णिक् रूपं वाम् अनुवर्तते अनुगच्छति। किञ्च प्रदिवि। पुराणनामैतत्। पुराणाः सिन्धवः उपक्षरन्ति उपगच्छन्ति, युवयोरनुग्रहात्।

**सरलार्थः-** अश्वाः सुसज्जताः सन्तः युवां वहन्तु। संयतरश्मयः ते अत्र तिष्ठन्तु। जलस्य धारा इव ते युवाम् अनुसरन्ति। प्राचीनकालतः नद्यः प्रवहन्ति।

**व्याकरणम्-**

- वहन्तु- वह्-धातोः लोट्-लकारे प्रथमपुरुषबहुवचने वहन्तु इति रूपम्।
- यतरश्मयः- यताः रश्ययः येषां ते यतरश्मयः इति बहुव्रीहिसमासः।
- निर्णिक्- निर्पूर्वकनिज्-धातोः क्विप्प्रत्यये निर्णिज्-शब्दः निष्पन्नः। तस्य प्रथमैकवचने निर्णिक् इति रूपम्।
- प्रदिवि- प्रपूर्वकदिव्-धातोः क्विप्प्रत्यये प्रदिव्-शब्दः निष्पन्नः। तस्य सप्तम्येकवचने प्रदिवि इति रूपम्।
- क्षरन्ति- क्षर्-धातोः लट्-लकारे प्रथमपुरुषबहुवचने क्षरन्ति इति रूपम्।



## पाठगतप्रश्नाः

१६. मित्रावरुणसूक्तस्य कः ऋषिः, के देवते, किं छन्दः।
१७. ऋतम् इत्यस्य कः अर्थः।
१८. अपिहितम् इत्यस्य कः अर्थः।
१९. ऋतेन इत्यत्र ऋतशब्दस्य कः अर्थः।
२०. तस्थुः इति रूपं कथं सिद्ध्येत्।
२१. ईर्मा इत्यस्य कः अर्थः।
२२. तस्थुषीः इत्यत्र कः प्रत्ययः।
२३. पविः इति रूपं कथं सिद्ध्येत्।



२४. धेनाः इति शब्दः कस्मात्धातोः निष्पन्नः।
२५. जीरदानू इत्यस्य विग्रहं समासं च लिखत।
२६. जीरदानू इति शब्दस्य कः अर्थः।
२७. पिन्वतम् इति कस्मात्धातोः निष्पन्नः।
२८. अश्वासः इत्यस्य लौकिकं रूपं किम्।
२९. अधारयतम् इति रूपं कथं सिद्ध्येत्।
३०. निर्णिक् इति रूपं कथं सिद्ध्येत्।

---

**अनु॑ श्रु॒ताम॒मतिं॒ वर्ध॑दु॒र्वीं ब॒र्हिरि॑व॒ यजु॑षा॒ रक्ष॑माणा।**
**नम॑स्वन्ता धृतद॒क्षाधि॒ गर्ते॒ मित्रासा॑थे वरु॒णेळा॑स्व॒न्तः॥५॥**

**पदपाठः– अनु॑। श्रु॒ताम्। अ॒मति॑म्। वर्ध॑त्। उ॒र्वीम्। ब॒र्हिःऽइ॑व॒। यजु॑षा। रक्ष॑माणा॥**

**नम॑स्वन्ता। धृ॒त॒ऽद॒क्षा॒। अधि॑। गर्ते॑। मित्र॑। आसा॑थे॒ इति॑। व॒रु॒ण॒। इळा॑सु॒। अ॒न्तरिति॑॥**

**५॥**

**अन्वयः-** श्रुताम् अमतिम् अनुवर्धत्। बर्हिः यजुषा उर्वीं रक्षमाणा नमस्वन्ता धृतदक्षा मित्र वरुण इळासु अन्तः गर्ते अधि आसाथे।

**व्याख्या-** श्रुताम् विश्रुताम् अमतिम्। रूपनामैतत्। शरीरदीप्तिमित्यर्थः। ताम् अनुवर्धत् अनुवर्धयन्तौ। बर्हिः यज्ञः। स इव स यथा यजुषा मन्त्रेण रक्ष्यते तद्वत् उर्वीं रक्षमाणा पालयन्तौ नभस्वन्ता अन्नवन्तौ हे धृतदक्षा आत्तबलौ हे मित्र हे वरुण हे मित्रावरुणौ युवामुक्तलक्षणौ सन्तौ इळासु यागभूमिषु अन्तः मध्ये गर्ते अधि रथे आसाथे उपविशथः। "रथोऽपि गर्त उच्यते" (नि० ३।५) इति यास्कः। "आ रोहथो वरुण मित्र गर्तम्" (ऋ० सं० ५।६२।८) इति।

**सरलार्थः-** हे मित्रवरुणौ युवां विशेषशरीरदीप्तिं वर्धयतम्। यथा यज्ञीयकुशाः यज्ञे यजुर्मन्त्रैः रक्षिताः भवन्ति तथैव पृथिव्याः रक्षकौ युवाम् अन्नेन बलवन्तौ भूत्वा यज्ञभूमेः मध्यस्थलस्थरथे उपविशतम्।

**व्याकरणम्-**

- वर्धत्- वृध्-धातोः शतृप्रत्यये नपुंसकलिङ्गे प्रथमैकवचने वर्धत् इति रूपम्।
- उर्वीम्- उरुशब्दात् स्त्रीप्रत्यये उर्वीशब्दः निष्पन्नः। तस्य द्वितीयैकवचने उर्वीम् इति रूपम्।
- यजुषा- यजुष्-शब्दस्य तृतीयैकवचने यजुषा इति रूपम्।



- धृतदक्षा- धृतः दक्षः ययोस्तौ धृतदक्षौ इति बहुव्रीहिसमासः। सम्बद्धौ प्रथमायाः द्विवचने आकारः।
- आसाथे- आस्-धातोः आत्मनेपदे लट्-लकारे मध्यमपुरुषद्विवचने आसाथे इति रूपम्।

**अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः।**
**राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ॥६॥**

**पदपाठः- अक्रविऽहस्ता। सुऽकृते। परःऽपा। यम्। त्रासाथे इति। वरुणा। इळासु। अन्तरिति॥ राजाना। क्षत्रम्। अहृणीयमाना। सहस्रऽस्थूणम्। बिभृथः। सह।द्वौ॥६॥**

**अन्वयः-** वरुणा! युवां यम् इळासु अन्तः त्रासाथे सुकृते अक्रविहस्ता परस्पा। राजाना अहृणीयमाना द्वौ सह क्षत्रम् सहस्रस्थूणं विभृथः।

**व्याख्या-** अक्रविहस्ता अकृपणहस्तौ दानशूरावित्यर्थः। कस्मै। सुकृते शोभनस्तुतिकर्त्रे। परस्पा परस्तात् पातारौ रक्षितारौ हे वरुणा मित्रावरुणौ युवां यं यजमानम् इळासु यागभूमिषु अन्तः मध्ये त्रासाथे रक्षथः तस्मै सुकृते अक्रविहस्ता परस्पा च भवथ इति सम्बन्धः। किञ्च युवां राजाना राजमानौ अहृणीयमाना अक्रुध्यन्तौ द्वौ परस्परं सह साहित्येन क्षत्रं धनं सहस्रस्थूणम् अनेकावष्टम्भकस्तम्भोपेतं सौधादिरूपं गृहं च बभृथः धारयथः। सुकृते यजमानाय। अथवा क्षत्रं बलम् अपरिमिताभिः स्थूणाभिरुपेतं रथं चागमनार्थं सह धारयथः।

**सरलार्थः-** हे मित्रावरुणौ युवां यं यजमानं यज्ञभूमेः मध्यभागे रक्षथः, तं स्तुतिकारिणः यजमानं प्रति अकृपणहस्तौ तस्य पालनकारिणौ भवतम्। हे राजद्वय, युवां क्रोधहीनौ भूत्वा एकत्रीभूतशक्त्या सहस्रस्तम्भयुक्तस्थूणं धारयतम्।

**व्याकरणम्-**

- अक्रविहस्ता- न क्रविः अक्रविः, अक्रवी हस्तौ ययोस्तौ अक्रविहस्तौ इति बहुव्रीहिः, सुपः डादेशः।
- सुकृते- शोभनं करोति इति विग्रहे सुपूर्वककृ-धातोः क्विप्प्रत्यये सुकृत् इति शब्दः निष्पन्नः। तस्य चतुर्थ्येकवचने सुकृते इति रूपम्।
- अहृणीयमाना- हृणीङ्-धातोः शानच्प्रत्यये हृणीयमाना इति रूपम्। न हृणीयमाना अहृणीयमाना इति नञ्समासः।
- सहस्रस्थूणम्- सहस्रं स्थूणाः यस्य तं सहस्रस्थूणम् इति बहुव्रीहिसमासः।
- विभृथः- भृ-धातोः परस्मैपदे लट्-लकारे मध्यमपुरुषद्विवचने विभृथः इति रूपम्।

**हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य१श्वाजनीव।**
**भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य॥७॥**



**पदपाठः- हिरण्यनिर्णिक्। अयः। अस्य। स्थूणा। वि। भ्राजते। दिवि। अश्वाजनीऽइव॥ भद्रे। क्षेत्रे। निऽमिता। तिल्विले। वा। सनेम। मध्वः। अधिऽगर्त्यस्य॥७॥**

**अन्वयः-** हिरण्यनिर्णिक् अस्य स्थूणाः अयः, दिवि अश्वाजनीव विभ्राजते। भद्रे क्षेत्रे तिल्विले वा निमिता, मध्वः गर्तस्य अधि सनेम।

**व्याख्या-** अनयो रथो हिरण्यनिर्णिक् हिरण्यरूपः। निर्णिगिति रूपनाम। अस्य रथस्य स्थूणा कीलकादयः। अयः। हिरण्यनामैतत्। अयोविकारा इत्यर्थः। अयोमया वा। तादृशो रथो दिवि अन्तरिक्षे विभ्राजते। किमिव। अश्वाजनीइव। अश्वा व्यापनशीला मेघाः। तानजति गच्छतीत्यश्वाजनी विद्युत्। सेव दिवि भ्राजते। किञ्च भद्रे कल्याणे स्तुत्ये वा क्षेत्रे देवयजने तिल्विले वा। वाशब्दश्चार्थे, तिल स्नेहने (धा० ६।७६, १०।७३)। तिलुः स्निग्धा इला भूमिर्यस्य तत् क्षेत्रं तिल्विलं देवयजनम्। घृतसोमादिना स्निग्धे भद्रे च क्षेत्रे निमिता स्थूणा यूपयष्टिरिव स्थितः। मध्वः मधुपूर्णं गर्तस्य गर्तं रथं सनेम सम्भजेम। कर्मणि षष्ठ्यौ। अधीति पूरणः। अथवा गर्तस्याधि रथस्योपरि मध्वः मधु सोमरसं सनेम स्थापयेमेत्यर्थः।

**सरलार्थः-** हिरण्यनिर्मिताः अनयोः रथस्य स्थूणाः लौहनिर्मिताः। स रथः विद्युत् इव अन्तरिक्षलोके शोभितः भवति। कल्याणकारके स्थाने अथवा देवपूजितस्थाने निश्चलस्तम्भ इव मधुमयरथस्योपरि अवतिष्ठामः।

**व्याकरणम्-**

- हिरण्यनिर्णिक्- हिरण्यस्य निर्णिक् इव निर्णिक् यस्य तत् हिरण्यनिर्णिक् इति बहुव्रीहिसमासः।
- भ्राजते- भ्राज्-धातोः लट्-लकारे आत्मनेपदे प्रथमपुरुषैकवचने भ्राजते इति रूपम्।
- निमिता- निपूर्वकमि-धातोः क्तप्रत्यये सुपः डादेशे च निमिता इति रूपम्।
- अधिगर्त्यस्य- गर्ते इति अधिगर्तम् इति अव्ययीभावसमासः, अधिगर्ते भवः इति अधिगर्त्यः, तस्य अधिगर्त्यस्य।

**हिरण्यरूपमुषसो व्युष्टावयः स्थूणमुदिता सूर्यस्य।**
**आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च॥८॥**

**पदपाठः- हिरण्यऽरूपम्। उषसः। विऽउष्टौ। अयःऽस्थूणम्। उत्ऽइता। सूर्यस्य॥ आ। रोहथः। वरुण। मित्र। गर्तम्। अतः। चक्षाथे इति। अदितिम्। दितिम्। च॥८॥**

**अन्वयः-** वरुण मित्र उषसः व्युष्टौ सूर्यस्य उदिता हिरण्यरूपम् अयःस्थूणं गर्तम् आरोहथः। अतः अदितिं दितिं च चक्षाथे।



**व्याख्या-** उषसः व्युष्टौ प्रातःकाले इत्यर्थः। सूर्यस्य उदिता उदितावुदये। स एव कालः प्रकारान्तरेणोक्तेः। तस्मिन् काले हिरण्यरूपम् अयःस्थूणम् अयोमयशङ्कुं गर्तं रथं हे वरुण हे मित्र युवां गर्तम् आरोहथः यज्ञं प्राप्तुम्। अतः अस्माद्धेतोः अदितिम् अखण्डनीयां भूमिं दितिं खण्डितां प्रजादिकां च चक्षाथे पश्यथः।

**सरलार्थः-** हे मित्रवरुणौ युवां उषायाः प्रारम्भे सूर्यस्य उदये सति हिरण्यनिर्मिते लौहदण्डयुक्ते रथे आरोहणं कुरुतम्। किञ्च अदितिं दितिं च अवलोकयतम्।

**व्याकरणम्-**

- व्युष्टौ- विपूर्वकोच्छ-धातोः क्तिन्प्रत्यये व्युष्टि इति रूपम्। तस्य सप्तम्येकवचने व्युष्टौ इति रूपम्।
- आरोहथः- आङ्पूर्वकरुह्-धातोः लट्-लकारे मध्यमपुरुषद्विवचने आरोहथः इति रूपम्।
- चक्षाथे- चक्ष्-धातोः लट्-लकारे मध्यमपुरुषद्विवचने चक्षाथे इति रूपम्।

**यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा।**
**तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम॥९॥**

**पदपाठः- यत्। बंहिष्ठम्। न। अतिऽविधे। सुदानू इति सुऽदानू। अच्छिद्रम्। शर्म। भुवनस्य। गोपा॥ तेन। नः। मित्रावरुणौ। अविष्टम्। सिषासन्तः। जिगीवांसः। स्याम॥९॥**

**अन्वयः-** मित्रावरुणौ! सुदानू भुवनस्य गोपा वंहिष्ठं यत् अच्छिद्रं न अतिविधे शर्म नः अविष्टं सिषासन्तः जिगीवांसः स्याम।

**व्याख्या-** दाक्षायणयज्ञे 'यद् बंहिष्ठम्' इति नवमी द्वितायस्याममावास्यायां मैत्रावरुणस्य हविषो याज्या। सूत्रितञ्च 'आ नो मित्रावरुणा यद्' बंहिष्ठं नातिविधे सुदानू (आ० श्रौ० २।१४।११) इति। मैत्रावरुणे पशौ हविष एषैव याज्या। सूत्रितञ्च 'यद्बंहिष्ठं नातिविधे सुदानू हिरण्यगर्भः समवर्तताग्रे' (आ० श्रौ० ३।८।१) इति।

हे सुदानू शोभनदानौ, हे भुवनस्य गोपा, युवां बंहिष्ठं बहुलतमं यत् अच्छिदम् अनवच्छिन्नं शर्म सुखं गृहं वा नातिविधे अतिवेद्धुमशक्यं शर्म इति शर्मविशेषणम्। तादृशं शर्म धारयथः तेन शर्मणा नः अस्मान् अविष्टं रक्षतम्। हे मित्रावरुणौ सिषासन्तः धनानि सम्भक्तुमिच्छन्तो वयं जिगीवांसः शत्रूणां धनानि जेतुमिच्छन्तः स्याम भवेम।

**सरलार्थः-** हे दानशीलौ विश्वस्य रक्षकौ मित्रवरुणौ युवां द्वौ महत्तमौ, छेदहीनेन तथा क्षतिहीनेन सुखेन अस्माकं रक्षतम्। एवम् अभीप्सितधनयुक्ताः भूत्वा वयं यथा शत्रुविजयिनौ भवेमः।

**व्याकरणम्-**



- बंहिष्ठम्- बहुलशब्दात् इष्ठन्प्रत्यये बहुलस्थाने बंहादेशे द्वितीयैकवचने बंहिष्ठम् इति रूपम्।
- सुदानू- सु(शोभनम्) दानु ययोस्तौ सुदानू इति बहुव्रीहिसमासः।
- अच्छिद्रम्- अविद्यमानं छिद्रं यस्मिन् तत् अच्छिद्रम् इति बहुव्रीहिसमासः।
- शर्म- शृणाति हिनस्ति दुःखमिति शर्म।
- सिषासन्तः- सन्-धातोः सन्-प्रत्यये शतृप्रत्यते कृते प्रथमाबहुवचने सिषासन्तः इति रूपम्।
- जिगीवांसः- जि-धातोः क्वसुन्प्रत्यये प्रथमाबहुवचने जिगीवांसः इति रूपम्।
- स्याम- अस्-धातोः विधिलिङि उत्तमपुरुषबहुवचने स्याम इति रूपम्।



## पाठगतप्रश्नाः

३१. बर्हिः इति शब्दस्य कः अर्थः।

३२. उर्वीशब्दस्य कः अर्थः।

३३. इळासु इत्यस्य कः अर्थः।

३४. धृतदक्षा इत्यस्य कः विग्रहः कश्च समासः।

३५. आसाथे इति रूपं कथं सिद्ध्येत्।

३६. अक्रविहस्ता इत्यस्य कः अर्थः।

३७. अक्रविहस्ता इत्यस्य कः विग्रहः कश्च समासः।

३८. सहस्रस्थूणम् इत्यस्य कः विग्रहः कश्च समासः।

३९. निर्णिगिति किम्।

४०. किं तिल्विलम्।

४१. तिल्विलम् इत्यस्य कः विग्रहः।

४२. अधिगर्त्यः इति रूपं कथं सिद्ध्येत्।

४३. सुदानू इत्यस्य कः अर्थः।

४४. बंहिष्ठम् इत्यस्य कः अर्थः।

४५. शर्म इत्यस्य कः अर्थः।

## २०.५) मित्रावरुणस्वरूपम्

वैदिकयुगे प्रसिद्धासु देवतासु अन्यतमा हि वरुणदेवता। वैदिकदेवतामण्डलेषु विशिष्टं स्थानम् एकम् अलङ्करोति अयं वरुणः। तथापि वरुणदेवम् उद्दिश्य केवलं द्वादश सूक्तानि एव सम्पूर्णे ऋग्वेदे निवेदितानि। आच्छादनार्थकात् वृधातोः वरुणशब्दो निष्पन्नः। अत एव भगवान् यास्कः उक्तवान् - वरुणो वृणोतीति सतः। अर्थात् मेघद्वारा इयं देवता आकाशम् आवृणोति, तस्मात् अस्या नाम वरुणः इति।



अथर्ववेदस्य भाष्ये सायणाचार्यः - वरुणः रात्र्यभिमानिनी देवता इति वर्णितवान्। मित्रशब्दस्य व्युत्पत्तिदर्शनावसरे भगवान् यास्कः उक्तवान् - मित्रः प्रमीतेस्त्रायते इति। अर्थात् मित्रः प्रमीतेः मरणात् वर्षणद्वारा निखिलजनान् त्रायते। अन्यत्र पुनः तेनैव उक्तम् - मित्रः जलं प्रक्षिपन् अन्तरिक्षलोकं गच्छति इति। मित्रो हि जलवर्षणकारिणी देवता इति यास्कव्याख्यानात् ज्ञायते। मित्रः वरुणश्च यथाक्रमं दिनस्य रात्रेश्च अभिमानिन्यौ देवते इति आचार्यः सायणः उक्तवान्। तस्य उक्तिर्हि - मित्रः अहरभिमानिनी देवता वरुणः रात्र्यभिमानिनी। मैत्रं वा अहः वारुणी रात्रिः इति श्रुतिः। ऋग्वेदे मित्रस्य वरुणस्य च सम्मिलिततया बहवः स्तवाः वर्तन्ते। एतौ द्वौ युग्मतया मित्रावरुणौ इत्युच्येते। मित्रः वरुणश्च उभयौ सूर्यरूपेण एव ग्राह्यौ, यतो हि सूर्य एव दिवारात्र्यौः स्रष्टा। सूर्यरश्मिः मेघं सृजति, आकाशं च मेघावृतं करोति। अयं मेघः अथवा अन्धकारः एव वरुणस्य पाशस्वरूपः वर्तते। यस्मिन् सूर्यमण्डले मित्रावरुणयोः अवस्थितिः वर्तते, तन्मण्डलं सदा सत्यावृतं भवति। तत्स्थानात् एव ऋत्विजः अश्वगणान् अर्थात् सूर्यरश्मीन् विमोचयन्ति।

मित्रावरुणौ यत्र वसतः, तस्मिन् स्थाने प्रायः दशसहस्राणि रश्मयः समवेततया अवतिष्ठन्ते। मित्रावरुणयोः माहात्म्यात् एव निरन्तरभ्रमणरतः सूर्यः दैनिकगत्या बद्धान् जलराशीन् आकर्षयितुं समर्थो भवति। एतौ देवौ स्वयं भ्रमतः सूर्यस्य प्रीतिदायकान् दीप्तिसमूहान् वर्धयतः। एतयोः उभयोः एक एव रथः स च निरन्तरं भ्रमति। मित्रावरुणौ स्वसामर्थ्यवशात् इमां पृथिवीं स्वर्गं च धारयतः। जलसमूहः विग्रहं धारयित्वा एतयोः अनुसरणं करोति, किञ्च पुरातनाः नद्यः एनयोः अनुग्रहात् पुनः प्रवहन्ति। मित्रावरुणयोः रथः सुवर्णनिर्मितः वर्तते। अयं रथः अन्तरिक्षे विद्युत् इव शोभमानो वर्तते। प्रत्यूषसि मित्रावरुणौ सूर्योदयात् परं लोहकीलकसमन्वितसुवर्णरथे आरुह्य अदितिं दितिं च अवलोकेते। दानशीलौ विश्वरक्षकौ एतौ मित्रावरुणौ निरवच्छिन्नसुखस्य प्रदाने समर्थौ।

## २०.६) मित्रावरुणसूक्तस्य सारः

मित्रः वरुणश्च यथाक्रमं दिनस्य रात्रेश्च अभिमानिन्यौ देवते इति आचार्यः सायणः उक्तवान्। तस्य उक्तिर्हि - 'मित्रः अहरभिमानिनी देवता वरुणः रात्र्यभिमानिनी। मैत्रं वा अहः वारुणी रात्रिः' इति। ऋग्वेदे मित्रस्य वरुणस्य च सम्मिलिततया बहवः स्तवाः वर्तन्ते। एतौ द्वौ युग्मतया मित्रावरुणौ इत्युच्येते। मित्रः वरुणश्च उभौ सूर्यरूपेण एव ग्राह्यौ, यतो हि सूर्य एव दिवारात्र्यौः स्रष्टा। आत्रेय-ऋषिदृष्टे मित्रावरुणसूक्ते तावत् तयोः वर्णनं विहितम्। ऋतेन आच्छादितं मित्रावरुणयोः वासस्थानभूतं सूर्यमण्डलम् अहम् अपश्यम्। तत्र स्थितान् अश्वसमूहान् उपासकाः स्तोत्रेण विमोचयन्ति। प्रायः दशसहस्रं रश्मयः समवेततया तस्मिन् स्थले अवतिष्ठन्ते। देवानां रूपसमूहेषु श्रेष्ठं रूपम् अहम् अपश्यम् - इति यजमानः स्तौति। मित्रावरुणयोः माहात्यम् अतिप्रशस्तं, यद्वशात् एव निरन्तरभ्रमणरतः सूर्यः दैनिकगत्या बद्धान् जलराशीन् आकर्षयितुं समर्थो भवति। एतौ देवौ स्वयं भ्रमतः सूर्यस्य प्रीतिदायकान् दीप्तिसमूहान् वर्धयतः। एतयोः उभयोः समान एव रथः निरन्तरं भ्रमति। ये तु मित्रावरुणयोः स्तुतिं कुर्वन्ति, ते स्तोतारः एतयोः अनुग्रहात् राजपदं लभन्ते। स्वसामर्थ्यवशात् इमां पृथिवीं स्वर्गं च धारयतः इमौ देवौ। यजमानः प्रार्थयति यत् - हे क्षिप्रदातारौ! भवन्तौ ओषधीन् गोसमूहान् च वर्धयताम्, वर्षणं च कुरुताम्।



निपुणतया रथे योजिताः भवतोः अश्वगणाः भवन्तौ वहन्तु इति। जलसमूहः विग्रहं धारयित्वा मित्रावरुणयोः अनुसरणं करोति, किञ्च पुरातनाः नद्यः एनयोः अनुग्रहात् पुनः प्रवहन्ति।

यजमानः प्रार्थयति यत् - हे अन्नसम्पन्नौ बलशालिनौ मित्रावरुणौ! भवन्तौ सुप्रसिद्धाः स्वशरीरदीप्तीः वर्धयित्वा, मन्त्ररक्षितयज्ञवत् सम्पूर्णां पृथिवीम् इमां संरक्ष्य यज्ञभूमेः मध्यस्थे रथे आरोहणं कुरुताम् इति। यज्ञभूमौ भवन्तौ यं यजमानं रक्षतः, शोभनस्तुतिकारिणं तं प्रति भवन्तौ दानशालिनौ भवताम्। यतो हि भवन्तौ उभौ क्रोधविहीनौ सन्तौ धनं सहस्रस्तम्भसमन्वितं सौधं च धारयतः इति।। मित्रावरुणयोः रथः सुवर्णनिर्मितः वर्तते। अयं रथः अन्तरिक्षे विद्युत् इव शोभमानो वर्तते। वयं यजमानाः यथा उपयुक्तस्थाने यूपयष्टिसमन्वितायां यज्ञभूमौ रथोपरि सोमरसं स्थापयितुं समर्थाः भवेम तादृशम् अनुग्रहं भवन्तौ कुरुताम् इति प्रार्थना। दानशीलौ विश्वरक्षकौ एतौ मित्रावरुणौ निरवच्छिन्नसुखस्य प्रदाने समर्थौ। प्रत्यूषसि मित्रावरुणौ सूर्योदयात् परं लोहकीलकसमन्वितसुवर्णरथे आरुह्य अदितिं दितिं च अवलोकेते। मित्रावरुणौ निरवच्छिन्नस्य निरतिशयस्य च सुखस्य प्रदाने समर्थौ। अतः यजमानः प्रार्थयति यत् - भवन्तौ अस्मभ्यं तादृशं सुखं प्रयच्छताम् इति।



## मित्रावरुणसूक्तांशे पाठसारः

अस्मिन् पाठे द्वे सूक्ते आलोचिते। तयोः विष्णुसूक्तस्य सारादिकम् पूर्वार्धे विद्यते। उत्तरार्थे तु मित्रावरुणसूक्तम् आलोचितम्। अतः तस्य संक्षेपेण सारोऽत्र प्रदीयते।

आदिमसूक्तं मित्रावरुणसूक्तम्। विश्वे भातृत्वं कीदृशं भवितव्यमिति बोधयितुमेव प्रवृत्तमिदं सूक्तम्। अत्र मित्रः प्राणान् रक्षयति वरुणश्च जलानि धारयति। वरुणश्च जलधारकरूपेण अथवा वृष्टिकारकरूपेण प्रतिपादितः। ऋग्वेदस्य ऐतरेयब्राह्मणग्रन्थानुसारेण मित्रः रात्रिरूपेण वरुणश्च दिनरूपेण प्रतिपादितौ। अस्य मित्रावरुणसूक्तस्य आत्रेयः श्रुतिविद् ऋषिः, मित्रावरुणौ देवौ, त्रिष्टुप् छन्दः।



## पाठान्तप्रश्नाः

**(विष्णुसूक्ते)**

१. विष्णुसूक्तस्य सारं लिखत।
२. विष्णोर्नु कं वीर्याणि... इत्यादिमन्त्रं व्याख्यात।
३. प्र तद्विष्णुः... इत्यादिमन्त्रं व्याख्यात।
४. प्र विष्णवे शूषमेतु मन्म... इत्यादिमन्त्रं व्याख्यात।
५. यस्य त्री पूर्णा... इत्यादिमन्त्रं व्याख्यात।
६. तदस्य प्रयमभि पाथो अश्याम्... इत्यादिमन्त्रं व्याख्यात।



७. ता वां वास्तून्युश्मसि... इत्यादिमन्त्रं व्याख्यात।

**(मित्रावरुणसूक्ते)**

८. मित्रावरुणसूक्तस्य सारं लिखत।

९. ऋतेन ऋतमपिहितम्... इत्यादिमन्त्रं व्याख्यात।

१०. अक्रविहस्ता सुकृते... इत्यादिमन्त्रं व्याख्यात।

११. आ वामश्वासः... इत्यादिमन्त्रं व्याख्यात।

१२. यद्बंहिष्ठं नातिविधे... इत्यादिमन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरपूगः- (विष्णुसूक्ते)**

१. ऋषि: दीर्घतमा औचथ्यः, छन्दः विराट् त्रिस्टुप्, देवता विष्णुः।

२. नु कम्।

३. व्यापनशीलः।

४. वीरकर्माणि।

५. विविधं निर्मितवान्।

६. लोकवाची।

७. त्रेधा।

८. कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा।

९. अस्मत्कृत्यादिजन्यं बलं महत्त्वम्।

१०. अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि।

११. धृतवान्।

१२. त्रयाणां धातूनां समाहारः।

१३. अन्तरिक्षम्।

१४. सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः।

१५. कामयामहे।

**उत्तरपूगः- (मित्रावरुणसूक्ते)**

१६. आत्रेयः श्रुतविद् ऋषिः, मित्रावरुणौ देवते, त्रिष्टुप् छन्दः।

१७. ध्रुवम्।

१८. आच्छादितम्।



१९. उदकम्।

२०. स्था-धातोः लिट्-लकारे प्रथमपुरुषबहुवचने।

२१. सततगन्ता।

२२. ङीप्।

२३. पू-धातोः 'अच इः' इति औणादिकसूत्रेण इप्रत्यये।

२४. धे-धातोः।

२५. जीरं दानू ययोस्तौ इति बहुव्रीहिसमासः।

२६. क्षिप्रदानौ।

२७. पिव्-धातोः।

२८. अश्वाः।

२९. धृ-धातोः णिचि लङ्-लकारे मध्यमपुरुषद्विवचने।

३०. निर्पूर्वकनिज्-धातोः क्विप्प्रत्यये प्रथमैकवचने।

**उत्तरपूगः- (मित्रावरुणसूक्ते)**

३१. यज्ञः।

३२. पृथिवी।

३३. यागभूमिषु।

३४. धृतः दक्षः ययोस्तौ धृतदक्षौ इति बहुव्रीहिसमासः।

३५. आस्-धातोः आत्मनेपदे लट्-लकारे मध्यमपुरुषद्विवचने।

३६. अकृपणहस्तौ।

३७. न क्रविः अक्रविः, अक्रवी हस्तौ ययोस्तौ अक्रविहस्तौ इति बहुव्रीहिः।

३८. सहस्रं स्थूणाः यस्य तं सहस्रस्थूणम् इति बहुव्रीहिसमासः।

३९. रूपनाम।

४०. देवयजनस्थानम्।

४१. तिलुः स्निग्धा इला भूमिर्यस्य तत् क्षेत्रम्।

४२. गर्ते इति अधिगर्तम् इति अव्ययीभावसमासः, अधिगर्ते भवः इति अधिगर्त्यः।

४३. शोभनदानौ।

४४. बहुलतमम्।

४५. सुखं गृहं वा।

॥इति विंशः पाठः॥

# २१

# ॥अक्षसूक्तम्॥

## प्रस्तावना

ऋग्वेदे एकस्य प्रसिद्धदेवस्य स्तुतिं विधाय अभीष्टसिद्ध्यर्थं सः देवः प्रार्थ्यते। एवं मानवानां सामाजिकदुर्व्यवहाराणां निराकरणाय सूक्तानां सङ्कलनं कृतम्। यदा समाजे भोगविलासानां शक्तिः वर्धिता भवति तदा द्युतकार्यम् अपि वर्धते। वैदिककालतः एव अक्षक्रीडा बहुप्रचलितसामाजिककुक्रीडा अस्ति। ऋग्वेदस्य दशममण्डले चतुस्त्रिंशत्तमं सूक्तम् एनं विषयम् आधारीकृतवत्। इदमेव अक्षसूक्तम् इति नाम्ना विख्यातम्। अस्य सूक्तस्य ऐलूषकवषः ऋषिः, त्रिष्टुप् छन्दः, सप्तममन्त्रस्य जगती छन्दः, देवता च अक्षः ऋषिः। अस्मिन् सूक्ते यत् मुख्यतया उक्तं तत् अक्षक्रीडा न करणीया तत्स्थाने कृषिकर्म इत्यादिकर्म कर्तव्यम्। यथा मन्त्रे एव उक्तं- अक्षैर्मा दीव्यः कृषिमित्कृषस्व इत्यादि। एवं प्रकारेण सूक्तस्य माहात्म्यं प्रकटितम्।



## उद्देश्यानि

अस्य पाठस्य पठनात् भवान् -

- अक्षसूक्तस्य संहितापाठं  पदपाठम् अन्वयं व्याख्यां च पठिष्यति।
- अक्षक्रीडनस्य कुफलं भवान् ज्ञास्यति।
- अक्षक्रीडनात् किं किं त्यक्तं भवति तद् ज्ञास्यति।
- वैदिकशब्दान् ज्ञास्यति।
- वैदिकलौकिकशब्दयोः मध्ये भेदं ज्ञास्यति।
- अक्षक्रीडनस्य स्थाने किं करणीयम् इत्यपि अवगमिष्यति।

## २१.१)  अधुना मूलपाठं पठाम

**प्रावेपा मा बृहतो मादयन्ति**

**प्रवातेजा इरिणे वर्वृतानाः।**



सोम॑स्येव मौजव॒तस्य॑ भ॒क्षो
वि॒भीद॑को॒ जागृ॑वि॒र्मह्य॑मच्छान्॥१॥

न मा॑ मिमेथ॒ न जि॑हीळ ए॒षा
शि॒वा सखि॑भ्य उ॒त मह्य॑मासीत्।
अ॒क्षस्या॒हमे॑कप॒रस्य॑ हेतो-
रनु॑व्रता॒मप॑ जा॒याम॑रोधम्॥२॥

द्वेष्टि॑ श्व॒श्रूरप॑ जा॒या रु॑णद्धि॒
न ना॑थि॒तो वि॑न्दते मर्डि॒तार॑म्।
अश्व॑स्येव॒ जर॑तो॒ वस्न्य॑स्य॒
नाहं वि॑न्दामि कित॒वस्य॒ भोग॑म्॥३॥

अ॒न्ये जा॒यां परि॑ मृशन्त्यस्य॒
यस्यागृ॑धद्वेद॑ने वा॒ज्य१॒॑क्षः।
पि॒ता मा॒ता भ्रात॑र॒ एन॑माहु-
र्न जा॑नीमो॒ नय॑ता ब॒द्धमे॒तम्॥४॥

यदा॒दीध्ये॒ न द॑विषाण्येभिः
परा॒यद्भ्योऽव॑ हीये॒ सखि॑भ्यः।
न्यु॑प्ताश्च ब॒भ्रवो॒ वाच॒मक्र॑त॒
एमीदे॑षां निष्कृ॒तं जा॒रिणी॑व॥५॥

स॒भामे॑ति कित॒वः पृ॒च्छमा॑नो
जे॒ष्यामीति॑ त॒न्वा॒३॒॑ शूशु॑जानः।
अ॒क्षासो॑ अस्य॒ वि ति॑रन्ति॒ कामं॑
प्रति॒दीव्ने॒ दध॑त॒ आ कृ॒तानि॑॥६॥



अक्षास इदङ्कुशिनो नितोदिनो
निकृत्वानस्तपनास्तापयिष्णवः।
कुमारदेष्णा जयतः पुनर्हणो
मध्वा सम्पृक्ताः कितवस्य बर्हणा॥७॥

त्रिपञ्चाशः क्रीळति व्रात एषां
देव इव सविता सत्यधर्मा।
उग्रस्य चिन्मन्यवे ना नमन्ते
राजा चिदेभ्यो नम इत्कृणोति॥८॥

नीचा वर्तन्त उपरि स्फुर-
न्त्यहस्तासो हस्तवन्तं सहन्ते।
दिव्या अङ्गारा इरिणे न्युप्ताः
शीताः सन्तो हृदयं निर्दहन्ति॥९॥

जाया तप्यते कितवस्य हीना
माता पुत्रस्य चरतः क्व स्वित्।
ऋणावा बिभ्यद्धनमिच्छमानो-
ऽन्येषामस्तमुप नक्तमेति॥१०॥

स्त्रियं दृष्ट्वाय कितवं तताप-
न्येषां जायां सुकृतं च योनिम्।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रू-
न्त्सो अग्नेरन्ते वृषलः पपाद॥११॥

यो वः सेनानीर्महतो गणस्य
राजा व्रातस्य प्रथमो बभूव।



**तस्मै कृणोमि न धाना रुणध्मि**
**दशाहं प्राचीस्तदृतं वदामि॥१२॥**

**अक्षैर्मा दीव्यः कृषिमित्कृषस्व**
**वित्ते रमस्व बहु मन्यमानः।**
**तत्र गावः कितव तत्र जाया**
**तन्मे वि चष्टे सवितायमर्यः॥१३॥**

**मित्रं कृणुध्वं खलु मृळता नो**
**मा नो घोरेण चरताभि धृष्णु।**
**नि वो नु मन्युर्विशतामराति-**
**रन्यो बभ्रूणां प्रसितौ न्वस्तु॥१४॥**

---

## २१.१.१) इदानीं मूलपाठम् अवगच्छाम

**प्रावेपा मा बृहतो मादयन्ति**
**प्रवातेजा इरिणे वर्वृतानाः।**
**सोमस्येव मौजवतस्य भक्षो**
**विभीदको जागृविर्मह्यमच्छान्॥१॥**

**पदपाठः- प्रावेपाः। मा। बृहतः। मादयन्ति। प्रवातेऽजाः। इरिणे। वर्वृतानाः॥**

**सोमस्यऽइव। मौजऽवतस्य। भक्षः। विऽभीदकः। जागृविः। मह्यम्। अच्छान्॥१॥**

**अन्वयः-** प्रवातेजाः बृहतः इरिणे वर्वृतानां प्रावेपाः मा मादयन्ति। मौजवतस्य सोमस्य भक्ष इव जागृविः विभीदकः मह्यम् अच्छन्।

**व्याख्या-** बृहतः महतो विभीतकस्य फलत्वेन सम्बन्धिनः प्रवातेजाः प्रवणे देशे जाताः इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीलाः अक्षाः मा मां मादयन्ति हर्षयन्ति। किञ्च जागृविः जयपराजयोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्त्ता विभीदकविकाराऽक्षो मह्यं माम् अच्छान् अचच्छदत् अत्यर्थं मादयति। तत्र दृष्टान्तः। सोमस्येव यथा सोमस्य मौजवतस्य। मूजवति पर्वते जातो



मौजवतः। तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान् देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः- 'प्रवेपिणो मा महतो विभीतकस्य फलानि मादयन्ति। प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मूजवति जातो मूजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकामिषीकैषतेर्गतिकर्मण इयमपीतरेषीकैतस्मादेव विभीतको बिभेदनाज्जागृविर्जागरणन्मह्यमवच्छदत्' (निरु० ९.८)इति।

**सरलार्थः-** द्रुतप्रवहमानवायुप्रदेशे जाताः इरिणे कम्पमानाः अक्षाः माम् आनन्दयन्ति। विभीदकवृक्षजाताः जागरणकारिणः अक्षाः मां हर्षेण मत्तं कुर्वन्ति यथा मूजवति पर्वते उत्पन्नं सोमं पीत्वा जनाः उन्मत्ताः भवन्ति।

**व्याकरणम् -**

- वर्वृतानाः-वृद्-धातोः लङि, ततः लङः लुकि शानचि प्रथमाबहुवचने।
- मादयन्ति-मद्-धातोः णिचि लटि प्रथमपुरुषबहुवचने।
- अच्छन्-छन्द्-धातोः लुङि प्रथमपुरुषैकवचने।

**न मा॑ मिमेथ न जि॑हीळ एषा**
**शिवा सखि॑भ्य उत मह्य॑मासीत्।**
**अक्षस्या॒हमे॑कप॒रस्य॑ हेतो-**
**रनु॑व्रता॒मप॑ जा॒याम॑रोधम्॥२॥**

**पदपाठः- न। मा। मिमेथ। न। जिहीळे। एषा। शिवा। सखि॑ऽभ्यः। उत। मह्य॑म्। आसीत्॥ अक्षस्य॑। अहम्। एकऽपरस्य॑। हेतोः। अनु॑ऽव्रताम्। अप॑। जायाम्। अरोधम्॥२॥**

**अन्वयः-** एषा मा न मिमेथ, न जिहीळे, सखिभ्य उत मह्यम् शिवा आसीत्, अहम् एकपरस्य अक्षस्य हेतोः अनुव्रताम् जायाम् अप अरोधम्।

**व्याख्या-** एषा अस्मदीया जाया मा मां कितवं न मिमेथ न चुक्रोध, न जिहीळे न च लज्जितवती। सखिभ्यः अस्मदीयेभ्यः शिवा सुखकरी आसीत् अभूत्। उत अपि च मह्यं शिवासीत्। इत्थम्। अनुव्रताम् अनुकूलां जायाम् एकपरस्य एकः परः प्रधानं यस्य तस्य अक्षस्य हेतोः कारणात् अहम् अप अरोधं परित्यक्तवानस्मीत्यर्थः।

**सरलार्थः-** अस्मिन् मन्त्रे अक्षस्य परिणामः कथ्यते यत् मम पत्नी कदापि कलहं न कृतवती। मयि न क्रोधं चकार। मम मित्राणां च कृते सा कल्याणकारी आसीत्। परन्तु अक्षस्य कारणेन मम अनुकूला जाया मया परित्यक्ता।



**व्याकरणम् -**

- ममेथ-मिथ्-धातोः लिटि प्रथमपुरुषैकवचने।
- जिहीळे-हीड्-धातोः लिटि प्रथमपुरुषैकवचने।
- अरोधम्- रुध्-धातोः लुङि उत्तमपुरुषैकवचने(वैदिकम्)।

**द्वेष्टि श्वश्रूरप जाया रुणद्धि**
**न नाथितो विन्दते मर्डितारम्।**
**अश्वस्येव जरतो वस्न्यस्य**
**नाहं विन्दामि कितवस्य भोगम्॥३॥**

**पदपाठः- द्वेष्टि। श्वश्रूः। अप। जाया। रुणद्धि। न। नाथितः। विन्दते। मर्डितारम्॥**

**अश्वस्यऽइव। जरतः। वस्न्यस्य। न। अहम्। विन्दामि। कितवस्य। भोगम्॥३॥**

**अन्वयः-**श्वश्रूः द्वेष्टि, जाया अप रुणद्धि, नाथितः मर्डितारं न विन्दते। अहं वस्न्यस्य जरतः अश्वस्य इव कितवस्य भोगं न विन्दामि।

**व्याख्या-** श्वश्रूः जायाया माता गृहगतं कितवं द्वेष्टि निन्दतीत्यर्थः। किञ्च जाया भार्या अप रुणद्धि निरुणद्धि। अपि च नाथितः याचमानः कितवो धनं मर्डितारं धनदानेन सुखयितारं न विन्दते न लभते। इत्थं बुद्ध्या विमृशत्वात् नाहं जरतः वृद्धस्य वस्न्यस्य। वस्नं मूल्यं तदर्हस्य अश्वस्येव कितवस्य भोगं न विन्दामि न लभे।

**सरलार्थः-** यः कितवः भवति तस्य श्वश्रूः तं द्वेष्टि। तस्य पत्नी अपि तम् अपसारयति। धनं याचमानः कितवः सुखदं जनं न प्राप्नोति। बहुमूल्ययुक्तः वृद्धः अश्वः इव अहं(कितवः) जीवनं न इच्छामि।

**व्याकरणम् -**

- द्वेष्टि-द्विष्-धातोः लटि प्रथमपुरुषैकवचने।
- रुणद्धि-रुध्-धातोः लटि प्रथमपुरुषैकवचने।
- नाथितः-नाथ्-धातोः क्तप्रत्यये प्रथमैकवचने।
- मर्डितारम्-मृड्-धातोः तृच्प्रत्यये द्वितीयैकवचने।
- विन्दति-विद्-धातोः लटि प्रथमपुरुषैकवचने (वैदिकम्)
- जरतः-जृ-धातोः शतृप्रत्यये षष्ठ्यैकवचने।
- विन्दामि- विद्-धातोः लटि उत्तमपुरुषैकवचने।



**अन्ये जायां परि मृशन्त्यस्य**
**यस्यागृधद्वेदने वाज्य१क्षः।**
**पिता माता भ्रातर एनमाहु-**
**र्न जानीमो नयता बद्धमेतम्॥४॥**

**पदपाठः- अन्ये। जायाम्। परि। मृशन्ति। अस्य। यस्य। अगृधत्। वेदने। वाजी। अक्षः॥ पिता। माता। भ्रातरः। एनम्। आहुः। न। जानीमः। नयत। बद्धम्। एतम्॥४॥**

**अन्वयः**-यस्य वेदेन अक्षः अगृधत्, अस्य जायाम् अन्ये परिमृशन्ति, पिता माता भ्रातरम् एनम् आहुः न जानीमः बद्धम् एनं नयत।

**व्याख्या-** यस्य कितवस्य वेदने धने वाजी बलवान् अक्षः देवः अगृधत् अभिकाङ्क्षां करोति तस्य अस्य कितवस्य जायां भार्याम् अन्ये प्रतिकितवाः परिमृशन्ति वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति। किञ्च पिता जननी च भ्रातरः सहोदराश्च एनं कितवम् आहुः वदन्ति न वयमस्मदीयमेनं जानीमः। रज्ज्वा बद्धमेतं कितवं हे कितवाः यूयं नयत यथेष्टदेशं प्रापयेति।

**सरलार्थः-** यस्य कितवस्य धने बलवान् अक्षः इष्यते अन्यैः कितवैः, तस्य भार्याम् अन्ये कितवाः वस्त्रकेशाद्याकर्षणेन स्पृशन्ति। पित्रादयः अस्मिन् विषये ऋणदातारं कथयति यत् वयम् एनं न जानीमः यूयम् एनं रज्ज्वा बद्ध्वा नयत।

**व्याकरणम् -**

- अगृधत्-गृध्-धातोः लङि प्रथमपुरुषैकवचने(वैदिकः)।
- मृशन्ति- मृश्-धातोः लटि प्रथमपुरुषबहुवचने।
- आहुः-ब्रू-धातोःलिटि प्रथमपुरुषबहुवचने।
- जानीमः-ज्ञा-धातोः लटि उत्तमपुरुषबहुवचने।
- नयत- नी-धातोः लोटि मध्यमपुरुषबहुवचने(छान्दसदीर्घः)।
- वाज्य १ क्षः-वाजी+अक्षः, क्षैप्रसन्धिः।

**यदादीध्ये न दविषाण्येभिः**
**परायद्भ्योऽव हीये सखिभ्यः।**
**न्युप्ताश्च बभ्रवो वाचमक्रत**
**एमीदेषां निष्कृतं जारिणीव॥५॥**



**पदपाठः- यत्। आऽदीध्ये॑। न। दविषाणि। एभिः। परायत्ऽभ्य॑ः। अव॑। हीये।**

**सखि॑ऽभ्यः॥ नऽउ॑प्ताः। च। बभ्रव॑ः। वाच॑म्। अक्र॑त। एमि॑। इत्। एषाम्। निःऽकृतम्।**

**जरिणी॑ऽइव॥५॥**

**अन्वयः-** यत् आदीध्ये एभिः न दविषाणि परायद्भ्यः सखिभ्यः अव हीये, बभ्रवः न्युप्ताः वाचम् अक्रमत, एषां निष्कृतं जारिणी इव एमि इत्।

**व्याख्या-** यत् यद्वदा अहम् आदीध्ये ध्यायामि तदानीम् एभिः अक्षैः न दविषाणि न दूषये न परितपामि। यद्वा। न दविषाणि न देविष्याणीत्यर्थः। न द्वेषये परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्यः अव हीये अवहितो भवामि। नाहं प्रथममक्षान् विसृजामीति। किंच बभ्रवः बभ्रुवर्णा अक्षाः न्युप्ताः कितवैरवक्षिप्ताः सन्तः वाचमक्रत शब्दं कुर्वेति। तदा सङ्कल्पं परित्यज्य अक्षव्यसनेनाभिभूयमाना स्वैरिणी सङ्केतस्थानं याति तद्वत् एमीत् गच्छाम्येव।

**सरलार्थः-** यदा अहं(कितवः) चिन्तयामि यत् अक्षैः सह न क्रीडिष्यामीति तदा मित्रकितवेभ्यः स्वं गोपयामि। परन्तु यदा अक्षाः इरिणे निक्षिप्ताः भवन्ति तदा अहं(कितवः) व्यभिचारिणी स्त्री इव गच्छामि।

**व्याकरणम् -**

- आदीध्ये-आपूर्वकात् आत्मनेपदिनः धी-धातोः लटि उत्तमपुरुषैकवचने।
- दविषाणि- दिव्-धातोः लेटि उत्तमपुरुषैकवचने।
- हीये- हा-धातोः कर्मणि लटि उत्तमपुरुषैकवचने।
- न्युप्ताः-निपूर्वकात्वप्-धातोः क्तप्रत्यये प्रथमाबहुवचने।
- अक्रत- कृ-धातोः लुङि आत्मनेपदे प्रथमपुरुषबहुवचने(वैदिकम्)।
- एमि- इ-धातोः लटि उत्तमपुरुषैकवचने।



## पाठगतप्रश्नाः

१. अक्षसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।

२. इरिणे इत्यस्य कः अर्थः।

३. प्रावेपाः इत्यस्य कः अर्थः।

४. अच्छन् इति रूपं कथं सिद्ध्येत्।

५. जिहीळे इत्यत्र कः धातुः।

६. मर्डिता इत्यस्य कः अर्थः।

७. कितवस्य भार्याम् अन्ये प्रतिकितवाः किं कुर्वन्ति।



८. न्युप्ताः इत्यस्य कः अर्थः।

९. आदीध्ये इति रूपं कथं सिद्ध्येत्।

१०. वेदने इत्यस्य कः अर्थः।

---

**सभामेति कितवः पृच्छमानो**
**जेष्यामीति तन्वा३ शूशुजानः।**
**अक्षासो अस्य वि तिरन्ति कामं**
**प्रतिदीव्ने दधत आ कृतानि॥६॥**

**पदपाठः- सभाम्। एति। कितवः। पृच्छमानः। जेष्यामि। इति। तन्वा। शूशुजानः॥**

**अक्षासः। अस्य। वि। तिरन्ति। कामम्। प्रतिऽदीव्ने। दधतः। आ। कृतानि॥६॥**

**अन्वयः-** तन्वा शूशुजानः कितवः जेष्यामि इति पृच्छमानः सभाम् एति, अक्षासः प्रतिदीव्ने कृतानि दधतः अस्य कामं वि तिरन्ति।

**व्याख्या-** तन्वा शरीरेण शूशुजानः शोशुचानो दीप्यमानः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसम्बन्धिनीम् एति गच्छति। तत्र प्रतिदीव्ने प्रतिदेवित्रे कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः कितवस्य कामम् इच्छाम् अक्षासः अक्षाः वि तिरन्ति वर्धयन्ति।

**सरलार्थः-** दीप्तियुक्तशरीरी कितवः जेष्यमीति चिन्तयन् अक्षगृहं प्रति गच्छति। तत्र तस्य विरोधिकितवस्य कृते कृतानि प्रदाय अक्षाः इच्छां वर्धयन्ति।

**व्याकरणम् -**

- शूशुजानः- शुज्-धातोः कानचि प्रथमैकवचने।
- पृच्छमानः-प्रच्छ्-धातोः शानचि प्रथमैकवचने।
- अक्षासः-अक्षाः, (वैदिकम्)।
- दधतः-धाधातोः शतृप्रत्यये प्रथमाबहुवचने। अपि च षष्ठ्यैकवचने।
- तिरन्ति- तृ-धातोः लटि प्रथमपुरुषबहुवचने।

**अक्षास इदङ्कुशिनो नितोदिनो**
**निकृत्वानस्तपनास्तापयिष्णवः।**



**कुमारदेष्णा जयतः पुनर्हणो**
**मध्वा सम्पृक्ताः कितवस्य बर्हणा॥७॥**

**पदपाठः- अक्षासः। इत्। अङ्कुशिनः। निऽतोदिनः। निऽकृत्वानः। तपनाः। तापयिष्णवः॥ कुमारऽदेष्णाः। जयतः। पुनःऽहनः। मध्वा। सम्ऽपृक्ताः। कितवस्य। बर्हणा॥७॥**

**अन्वयः-** अक्षासः इत् अङ्कुशिनः नितोदिनः निकृत्वानः तपनाः तापयिष्णवः कुमारदेष्णाः पुनर्हणः कितवस्य बर्हणा मध्वा सम्पृक्ताः।

**व्याख्या-** अक्षास इत् अक्षा एव अङ्कुशिनः अङ्कुशवन्तः नितोदिनः नितोदितवन्तश्च निकृत्वानः पराजये निकर्तनशीलाश्छेत्तारो वा तपनाः पराजये कितवस्य सन्तापकाः तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य सन्तापशीलाश्च भवन्ति। किंच जयतः कुमारदेष्णाः धनदानेन धन्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति। अपि च मध्वा मधुना सम्पृक्ताः प्रतिकितवेन बर्हणा परिवृद्धेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हन्तारो भवन्ति।

**सरलार्थः-** अस्मिन् मन्त्रे उच्यते यत् अक्षाः अवश्यमेव अङ्कुशिनः इव अर्थात् यथा अङ्कुशिनः हस्तिनः शासनं कुर्वन्ति तथा अक्षाः अपि कितवस्य शासनं कुर्वन्ति, नितोदिनः इव अर्थात् यथा नितोदिनः अश्वं परिचालयन्ति तथैव अक्षाः अपि कितवान् परिचालयन्ति, विनाशिनः, सन्तापदाः अर्थात् कितवैः स्वपरिवाराय कष्टं अक्षाय प्रदीयते, पुत्रतुल्यधनदाः, विजयिनं पुनः हननकारिणः इव सन्ति।

**व्याकरणम् -**

- अक्षासः-अक्षशब्दस्य प्रथमाबहुवचने वैदिकं रूपम्।
- अङ्कुशिनः-अङ्कुशशब्दात् इनि प्रत्यये प्रथमाबहुवचने।
- निकृत्वानः-निपूर्वकात् कृद्-धातोः क्वनिप्प्रत्यये प्रथमाबहुवचने।
- तपनाः-तप्-धातोः ल्युटि प्रथमाबहुवचने।
- तापयिष्णवः-तप्-धातोः णिचि इष्णुच्प्रत्यये प्रथमाबहुवचने।
- जयतः-जिधातोः शतृप्रत्यये पञ्चम्येकवचने वा षष्ठ्यैकवचने।
- सम्पृक्ताः-सम्पूर्वकात् पृच्-धातोः क्तप्रत्यये प्रथमाबहुवचने।

**त्रिपञ्चाशः क्रीळति व्रात एषां**
**देव इव सविता सत्यधर्मा।**



**उग्रस्यं चिन्मन्यवे ना नमन्ते**
**राजा चिदेभ्यो नम इत्कृणोति॥८॥**

**पदपाठः- त्रिऽपञ्चाशः। क्रीळति। व्रातः। एषाम्। देवःऽइव। सविता। सत्यऽधर्मा॥**
**उग्रस्य। चित्। मन्यवे। न। नमन्ते। राजा। चित्। एभ्यः। नमः। इत्। कृणोति॥८॥**

**अन्वयः-** सत्यधर्मा सविता देव इव एषाम् त्रिपञ्चाशः व्रातः क्रीळति, उग्रस्य मन्यवे न नमन्ते। राजा चित् एभ्यः नमः कृणोति।

**व्याख्या-** एषाम् अक्षाणां त्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्याकः व्रातः संघः क्रीळति आस्फारे विहरति। आक्षिकाः प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि। तत्र दृष्टान्तः। सत्यधर्मा। सविता सर्वस्य जगतः प्रेरकः सूर्यो देव इव। यथा सविता देवो जगति विहरति तद्वदक्षाणां संघ आस्फारे विहरतीत्यर्थः। किञ्च, उग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधाय एते अक्षाः न नमन्ते न प्रह्वीभवन्ति। न वशे वर्तन्ते। तं नमयन्तीत्यर्थः। राजा चित् जगतः ईश्वरोऽपि एभ्यः नम इत् नमस्कारमेव देवनवेलायां कृणोति। नावज्ञां करोतीत्यर्थः।

**सरलार्थः-** सूर्यदेवतुल्याः एते त्रिपञ्चाशत् अक्षाः क्रीडन्ति। एते अक्षाः कदापि क्रोधिनः सम्मुखे न नमन्ति। राजा अपि एतान् नमस्कुर्वन्ति। अवज्ञां न कुर्वन्ति इत्यर्थः।

**व्याकरणम् -**

- क्राळति-क्रीड्-धातोः लटि प्रथमपुरुषैकवचने। (स्वरद्वयस्य मध्यस्थत्वात् डकारस्य ळकारः)
- नमन्ते-नम्-धातोः लटि प्रथमपुरुबहुवचने वैदिकं रूपम्।
- कृणोति-कृ-धातोः लटि प्रथमपुरुषैकवचने वैदिकं रूपम्।

**नीचा वर्तन्त उपरि स्फुर-**
**न्त्यहस्तासो हस्तवन्तं सहन्ते।**
**दिव्या अङ्गारा इरिणे न्युप्ताः**
**शीताः सन्तो हृदयं निर्दहन्ति॥९॥**

**पदपाठः- नीचा। वर्तन्ते। उपरि। स्फुरन्ति। अहस्तासः। हस्तऽवन्तम्। सहन्ते॥**
**दिव्याः। अङ्गाराः। इरिणे। निऽउप्ताः। शीताः। सन्तः। हृदयम्। निः। दहन्ति॥९॥**

**अन्वयः-** नीचाः वर्तन्ते उपरि स्फुरन्ति। अहस्तासः हस्तवन्तं सहन्ते। इरिणे न्युप्ताः दिव्याः अङ्गाराः शीताः सन्तः हृदयं निर्दहन्ति।



**व्याख्या-** अपि चैतेऽक्षाः नीचा नीचीनस्थले वर्तन्ते। तथापि उपरि पराजयात् भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्ति। अहस्तासः हस्तरहिताः अप्यक्षाः हस्तवन्तं द्युतकरं कितवं सहन्ते पराजयकरणेनाभिभवन्ति। दिव्याः दिवि भवा अपकृताः अङ्गाराः अङ्गारसदृशाः अक्षाः इरिणे इन्धनरहिते आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तः हृदयं कितवानामन्तः करणं निर्दहन्ति पराजयजनितसन्तापेन भस्मीकुर्वन्ति।

**सरलार्थः-** एते अक्षाः अधः पतन्ति। पराजयात् भीतानां कितवानां हृदयस्य उपरि च स्फुरन्ति। एते हस्तरहिताः सन्तः अपि कितवान् अभिभवन्ति। एते शीतस्पर्शाः अङ्गारसदृशाः सन्तः अपि कितवान् हृदयं दहन्ति।

**व्याकरणम् -**

- अहस्तासः-प्रथमाबहुवचने, (वैदिकः)लोके तु अहस्ताः, न विद्येते हस्तौ येषां ते अहस्तासः नञ्तत्पुरुषः।
- सहन्ते-आत्मनेपदिनः सह्-धातोः लटि प्रथमपुरुषबहुवचने।
- दिव्याः-दिवि भवाः दिव्याः, दिव्-धातोः यत्प्रत्यये, प्रथमाबहुवचने।
- न्युप्ताः- निपूर्वकवप्-धातोः क्तप्रत्यये प्रथमाबहुवचने।
- निर्दहन्ति-निर्पूर्वकात् दह्-धातोः लटि प्रथमपुरुषबहुवचने।

**जाया तप्यते कितवस्य हीना**
**माता पुत्रस्य चरतः क्व स्वित्।**
**ऋणावा बिभ्यद्धनमिच्छमानो-**
**ऽन्येषामस्तमुप नक्तमेति॥१०॥**

**पदपाठः- जाया। तप्यते। कितवस्य। हीना। माता। पुत्रस्य। चरतः। क्व। स्वित्॥**

**ऋणऽवा। बिभ्यत्। धनम्। इच्छमानः। अन्येषाम्। अस्तम्। उप। नक्तम्। एति॥१०॥**

**अन्वयः-** कितवस्य हीना जाया तप्यते, क्व स्वित् चरतः पुत्रस्य माता , ऋणावा बिभ्यत् धनम् इच्छमानः नक्तम् अन्येषाम् अस्तम् उप एति।

**व्याख्या-** क्व चित् क्वापि चरतः निर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसन्तापेन सन्तप्ता भवति। माता जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य सम्बन्धाद्धीना तप्यते। पुत्रशोकेन सन्तप्ता भवति। ऋणावा अक्षपराजयादृणवान् कितवः सर्वतो बिभ्यद्धनं स्तेयजनितम् इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनाम् अस्तं गृहम्। 'अस्तं पस्त्यम्' इति गृहनामसु पाठात्। नक्तं रात्रौ उप एति चौर्यार्थमुपगच्छति।

**सरलार्थः**-कितवस्य आश्रयहीना पत्नी सन्तप्ता भवति। क्वचिदपि विचरतः कितवपुत्रस्य माता दुःखिता भवति। ऋणी कितवः ऋणदातुः बिभेति। कितवश्च धनाय रात्रौ अन्यस्य गृहं प्रविशति।

**व्याकरणम् -**

- हीना-हाधातोः क्तप्रत्यये टापि प्रथमैकवचने।
- तप्यते-आत्मनेपदिनः तप्-धातोः लटि प्रथमपुरुषैकवचने।
- चरतः-चर्-धातोः शतृप्रत्यये षष्ठ्यैकवचने।
- बिभ्यत्-भीधातोः शतृप्रत्यये प्रथमैकवचने वैदिकं रूपम्।
- इच्छमानः-इष्-धातोः शनचि प्रथमैकवचने।



## पाठगतप्रश्नाः

११. कितवः किं पृच्छन् सभाम् एति।
१२. अक्षासः इत्यस्य लौकिकं रूपं किम्।
१३. शूशुजानः इति रूपं कथं सिद्ध्येत्।
१४. मध्वा इत्यस्य लौकिकं रूपं किम्।
१५. तापयिष्णवः इति रूपं कथं सिद्ध्येत्।
१६. निकृत्वानः इति रूपं कथं सिद्ध्येत्।
१७. किमिव अक्षाणां संघः आस्फारे विहरति।
१८. कति अक्षाः आस्फारे विहरन्ति।
१९. कथं कितवस्य जाया सन्तप्ता भवति।
२०. कीदृशः कितवः ब्राह्मणादीनां गृहं प्रवशति।

---

**स्त्रियं दृष्ट्वाय कितवं तताप-**
**न्येषां जायां सुकृतं च योनिम्।**
**पूर्वाह्णे अश्वान्युयुजे हि बभ्रू-**
**न्त्सो अग्नेरन्ते वृषलः पपाद॥११॥**

**पदपाठः-** **स्त्रियम्। दृष्ट्वाय। कितवम्। तताप। अन्येषाम्। जायाम्। सुऽकृतम्। च। योनिम्॥ पूर्वाह्णे। अश्वान्। युयुजे। हि। बभ्रून्। सः। अग्नेः। अन्ते। वृषलः। पपाद॥ ११॥**



**अन्वयः-** कितवं स्त्रियम् अन्येषां जायां सुकृतं योनिं दृष्ट्वाय तताप पूर्वाह्णे बभ्रून् युयुजे, वृषलः अग्नेः अन्ते पपाद।

**व्याख्या-** कितवं कितवः। विभक्तिव्यत्ययः। अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृतं सुष्ठुकृतं योनिं गृहं दृष्ट्वा मज्जाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा तताप तप्यते। पुनः पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रूवर्णान् अश्वान् व्यापकानक्षान् युयुजे युनक्ति। पुनश्च वृषलः वृषलकर्मा सः कितवो रात्रौ अग्नेरन्ते समीपे पपाद शीतार्तः सन् शेते।

**सरलार्थः-** कितवः दुःखितां स्वपत्नीं स्वगृहं च दृष्ट्वा अन्यस्य पत्नीं सुसज्जितगृहं च पश्यन् दुःखी भवति। प्रातः अक्षान् युयुजे। सायं च अग्नेः समीपे शयानः रात्रिं यापयति।

**व्याकरणम् -**

- दृष्ट्वाय-दृश्-धातोः कत्वाय(वैदिकः) लोके तु दृष्ट्वा।
- तताप-तप्-धातोः लिटि प्रथमपुरुषैकवचने।
- युयुजे-युज्-धातोः लिटि प्रथमपुरुषैकवचने।
- पपाद-पद्-धातोः लिटि प्रथमपुरुषैकवचने(लडर्थे लिट्)।

**यो वः सेनानीर्महतो गणस्य**
**राजा व्रातस्य प्रथमो बभूव।**
**तस्मै कृणोमि न धाना रुणध्मि**
**दशाहं प्राचीस्तदृतं वदामि॥१२॥**

**पदपाठः- यः। वः। सेनाऽनीः। महतः। गणस्य। राजा। व्रातस्य। प्रथमः। बभूव॥**

**तस्मै। कृणोमि। न। धना। रुणध्मि। दश। अहम्। प्राचीः। तत्। ऋतम्। वदामि॥१२॥**

**अन्वयः-** वः महतः गणस्य यः सेनानीः बभूव, व्रातस्य प्रथमः राजा, तस्मै अहम् दश प्राचीः कृणोमि, धना न रुणध्मि, तत् ऋतं वदामि।

**व्याख्या-** हे अक्षाः वः युष्माकं महतो गणस्य संघस्य यः अक्षः सेनानीः नेता बभूव भवति व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा ईश्वरः प्रथमः मुख्यो बभूव तस्मै अक्षाय कृणोमि अहमञ्जलिं करोमि। अतः परं धना धनानि अक्षार्थमहं न रुणध्मि न सम्पादयामीत्यर्थः। एतदेव दर्शयति। अहं दशसंख्याका अङ्गुलीः प्राचीः प्राङ्मुखीः करोमि। तत् एतत् अहम् ऋतं सत्यमेव वदामि। नानृतं ब्रवीमीत्यर्थः।

**सरलार्थः-** अस्मिन् मन्त्रे अक्षान् प्रति उच्यते यत् हे अक्षाः युष्माकम् एकः महान् गणः अस्ति। तत्र यः प्रधानः तम् अहं नमस्करोमि। अहम् अञ्जलिं कृत्वा सत्यं वदामि यत् अहं(कितवः) धनानि न ग्रहिष्यामीति।

**व्याकरणम् -**

- बभूव-भूधातोः लिटि प्रथमपुरुषैकवचने।
- कृणोमि- कृधातोः लटि उत्तमपुरुषैकवचने वैदिकं रूपम्।
- रुणध्मि-रुध्-धातोः लटि उत्तमपुरुषैकवचने।
- धना- द्वितीयाबहुवचने वैदिकं रूपम्।

**अक्षैर्मा दीव्यः कृषिमित्कृषस्व**
**वित्ते रमस्व बहु मन्यमानः।**
**तत्र गावः कितव तत्र जाया**
**तन्मे वि चष्टे सवितायमर्यः॥१३॥**

**पदपाठः- अक्षैः। मा। दीव्यः। कृषिम्। इत्। कृषस्व। वित्ते। रमस्व। बहु। मन्यमानः॥**
**तत्र। गावः। कितव। तत्र। जाया। तत्। मे। वि। चष्टे। सविता। अयम्। अर्यः॥१३॥**

**अन्वयः-** कितव ! अक्षैः मा दीव्यः कृषिम् इत् कृषस्व। बहु मन्यमानः वित्ते समस्व, तत्र गावः, तत्र जाया तत् मे अयम् अर्यः सविता विचष्टे।

**व्याख्या-** हे कितव बहु मन्यमानः मद्वचने विश्वासं कुर्वंस्त्वम् अक्षैर्मा दीव्यः द्यूतं मा कुरु। कृषिमित् कृषिमेव कृषस्व कुरु। वित्ते कृष्या सम्पादिते धने रमस्व रतिं कुरु। तत्र कृषौ गावः भवन्ति। तत्र जायाः भवन्ति। तत् एव धर्मरहस्यं श्रुतिस्मृतिकर्त्ता सविता सर्वस्य प्रेरकः अयं दृष्टिगोचरः अर्यः ईश्वरः मे मह्यं वि चष्टे विविधमाख्यातवान्।

**सरलार्थः-** सविता कितवं प्रति कथयति यत् हे कितव अक्षैः मा क्रीड। कृषिकार्यं कुरु। तेन यत् धनं त्वं प्राप्स्यसि तत्रैव आनन्दम् अनुभव। तेनैव धनेन त्वं गाः स्वस्त्रीः च प्राप्स्यसि।

**व्याकरणम् -**

- दीव्यः-दीव्-धातोः लङि मध्यमपुरुषैकवचने।
- कृषस्व-कृष्-धातोः लोटि मध्यमपुरुषैकवचने(वैदिकः)।
- रमस्व-रम्-धातोः लोटि मध्यमपुरुषैकवचने।
- चष्टे-चक्ष्-धातोः लटि प्रथमपुरुषैकवचने।



**मित्रं कृणुध्वं खलु मृळता नो**
**मा नो घोरेण चरताभि धृष्णु।**
**नि वो नु मन्युर्विशतामराति-**
**रन्यो बभ्रूणां प्रसितौ न्वस्तु॥१४॥**

**पदपाठः- मित्रम्। कृणुध्वम्। खलु। मृळत। नः। मा। नः। घोरेण। चरत। अभि। धृष्णु॥ नि। वः। नु। मन्युः। विशताम्। अरातिः। अन्यः। बभ्रूणाम्। प्रऽसितौ। नु। अस्तु॥१४॥**

**अन्वयः-** मित्रं कृणुध्वम्, खलु नः मृळत, धृष्णु, घोरेण मा अभिचरत। नु वः मन्युः अरातिः नि विशतां, नु अन्यः बभ्रूणां प्रबन्धने प्रसितौ अस्तु।

**व्याख्या-** हे अक्षाः यूयं मित्रं कृणुध्वम्। अस्मासु मैत्रीं कुरुत। खलु इति पादपूरणः। न अस्मान् मृळत सुखयत च। नः अस्मान् धृष्णु धृष्णुना तृतीयार्थे प्रथमा। घोरेण असह्येन मा अभिचरत मा गच्छत। किञ्च वः युष्माकं मन्युः क्रोधः अरातिः अस्माकं शत्रुः नि विशताम् अस्मच्छत्रुषु तिष्ठतु। अन्यः न अस्माकं शत्रुः कश्चित् बभ्रूणां बभ्रूवर्णानां युष्माकं प्रसितौ प्रबन्धने नु क्षिप्रं अस्तु भवतु।

**सरलार्थः-**अस्मिन् मन्त्रे कितवाः अक्षान् प्रति वदति यत् हे अक्षाः यूयम् अस्माभिः सह मित्रं कुरुत। अस्मासु दयां कुरुत। तव भयङ्करप्रभावात् अस्मान् रक्षत। युष्माकं क्रोधं शत्रुतां च अधुना स्थिरीकुरुत। अधुना कश्चदपि अन्यः जनः अक्षमोहे मा पतेत्।

**व्याकरणम् -**

- कृणुध्वम्- आत्मनेपदिनः कृधातोः लोटि मध्यमपुरुषबहुवचने।
- मृळत-मृड्-धातोः लोटि मध्यमपुरुषबहुवचने।
- विशताम्-विश्-धातोः लोटि प्रथमपुरुषैकवचने।
- प्रसितौ- प्रपूर्वकात् सिधातोः क्तिन्प्रत्यये सप्तम्येकवचने।
- अरातिः-न रातिः अरातिः नञ्तत्पुरुषः, नपूर्वकात् राधातोः क्तिन्प्रत्यये प्रथमैकवचने।



## पाठगतप्रश्नाः

२१. कितवः किं दृष्ट्वा तप्यते।
२२. कृणोमि इत्यस्य लौकिकं रूपं किम्।
२३. धना इत्यस्य लौकिकं रूपं किम्।



२४. दृष्ट्वाय इति रूपं क्व साधु।

२५. कथं कृषिमित्कृषष्व इति कितवं प्रति उच्यते।

२६. दीव्यः इति रूपं कथं सिद्ध्येत्।

२७. मित्रं कृणुध्वं खलु...इत्यादिमन्त्रे खलु इति किमर्थम्।

२८. मृळत इत्यस्य कः अर्थः।

२९. धृष्णु इत्यत्र कस्मिन् अर्थे प्रथमा।

३०. पपाद इत्यत्र कस्मिन्नर्थे लिट्।

## २१.२) अक्षसूक्तस्य सारः

ऋग्वेदे अक्षसूक्तेन अक्षनामकः देवः अभीष्टसिद्ध्यर्थं प्रार्थ्यते। सामाजिकानां कुरीतीनां, मानवेषु वर्तमानानां दुर्वासनानां च सम्पूर्णतः नाशाय अस्य सूक्तस्य आरम्भः। समाजेषु यदा भोगविलासानां तथा शक्तेः उदयः जायते तत्समकालम् एव द्यूतक्रीडायाः अपि महान् प्रचारः प्रसारश्च परिलक्ष्यते। ऋग्वेदीययुगे द्यूतक्रीडा आसीत् समाजस्थो महान् व्याधिः। इदम् अक्षसूक्तं तद्विषयम् एव आलोचयति। इदम् एव सूक्तम् अन्ते कृषिः एव करणीया इति जनान् उद्दिश्य उपदिशति।

ऋग्वेदस्य दशममण्डलस्य चतुस्त्रिंशं सूक्तं हि अक्षसूक्तम्। अस्य सूक्तस्य ऋषिः ऐलूषः कवषः मूजवत्पुत्रः अक्षो वा। अत्र सूक्ते प्रथम-सप्तम-नवम-द्वादशमन्त्रस्य च अक्षा देवताः। द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठ-अष्टम-दशम-एकादश-चतुर्दशमन्त्रस्य च कितवः अक्षाश्च देवताः। त्रयोदशमन्त्रस्य च कृषिर्देवता। केवलं सप्तममन्त्रं विहाय सर्वत्र त्रिष्टुप्छन्दः। सप्तममन्त्रे तु जगतीच्छन्दः अस्ति। अस्मिन् अक्षसूक्ते मूलतः अक्षक्रीडनस्य कुफलम् एव उक्तम्। अस्मिन् सूक्ते एकस्य कितवस्य जीवनं कथं भवति इति विषये उक्तम्। कथं कितवाः जीवनं यापयन्ति। तेषां पत्नीनां कीदृशी अवस्था भवति। कीदृशं तेषां गृहवैभवं भवति इत्येते मन्त्राः चतुर्दश। मन्त्रेषु यदुक्तं तदेव साररूपेण उच्यते।

द्यूतक्रीडायाः दुष्परिणामो हि लोके द्यूतासक्तः जनः निन्द्यः। तस्य पत्नी, श्वश्रूः, अन्ये शुभाकाङ्क्षिणः च तस्मै द्विषन्ति। तं प्रति कः अपि दयाभावं न प्रदर्शयति। बहुमूल्योपेतः स्थविरः अश्वः इव प्रियपात्रं न भवति द्यूतकारः। द्यूतकारः पतिव्रतां स्वपत्नीम् अपि द्यूतक्रीडायां पणरूपेण स्थापयति। अपरस्य गृहं पत्नीं च दृष्ट्वा द्यूतोन्मत्तः जनः खेदं करोति। द्यूतक्रीडायाः कठिनः दुष्परिणामः तदैव दृश्यते यदा पराजितस्य पत्नीं कश्चिद् अपरः आलिङ्गति। यदा द्यूतकारः तस्य धनराशिं पणरूपेण प्रतिज्ञाय अपि तान् प्रदातुं नेच्छति तदा राजजनैः रज्जुभिः बद्धः सः राजसमीपं नीयते। तदा तदीयां दुर्दशां परिपश्यन् स्वजनः अपि करुणां न करोति तं च परिचाययितुं न इच्छति।

अस्मिन् सूक्ते अक्षक्रीडायाः प्रभावः प्रदर्शितोस्ति। अक्षसूक्ते कितवनामकः कश्चित् अक्षक्रीडायां मत्तः आसीत्। सः बहुवारं पराजितः भूत्वा अपि न तस्याः आसक्तेः मुक्तः। अद्य जेष्यामि इति चिन्तयन् द्यूतं क्रीडित्वा यद्यपि जयति परन्तु, दिनान्ते सः सर्वशून्यः दरिद्रः भिक्षुकः इव गृहं प्राप्य अग्निसमीपवर्ति



स्थानम् आश्रयति। 'सः अग्नेरन्ते वृषलः पपाद' (१०-३४-११)। कितवस्य स्त्री यद्यपि अक्षक्रीडनात् पूर्वं कलहं न कृतवती, कितवमित्राणां कृते अनुकूला एव आसीत्। परन्तु, अक्षक्रीडनात् परं सा परित्यक्ता भवति। यः अत्र कितवः भवति तस्य भार्याम् अन्ये कितवाः केशाद्याकर्षणेन स्पृशन्ति। एवं यथा कितवस्य प्रतिकूला अवस्था जायते तथैव तस्य भार्यायाः अपि। यत्र अपरजनानां पत्न्यः सौभाग्यसुखेन जीवन्ति तत्र तत्पत्नी हीना दीना च भूत्वा अन्तर्दुःखेन दग्धा भवति। माता च मार्गेषु अटति। सः पाशक्रीडायां पराजितः सन् ऋणं करोति, परस्य गृहे आत्मानं गोपायति। इत्थं हृदयविदारकं चित्रम् अस्मिन् मन्त्रे चित्रितम्।

'जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित।।

ऋणावा विभ्यद् धनमिच्छमानः अन्येषामस्तमुप नक्तमेति'।। इति।(१०-३४-१०)

अन्ते च द्यूतकारस्य बोधोदयः जातः। सः सर्वत्र पराजयम् अनुभवन् अन्ते एतां शिक्षां लब्धवान् यत् द्यूतम् अकल्याणकरं वित्तच्छेदि व्यसनं च। सः ज्ञातवान् कृषिकर्म एव प्रकृतं सुखकरं कर्म। द्यूतप्रभृतयः क्रीडाः मनुष्यान् जीवनस्रोतसः विच्छेदयन्ति। तेषु द्यूतादिषु अर्जितं धनं बहूनां परिश्रमेण उपार्जितम्। कितवः एनां शिक्षां जनेषु प्रचारयति यत्- 'अक्षैर्मा दीव्य कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः" इति। स्वयं सवितृदेवः अस्य सत्यस्य साक्षिरूपेण अस्ति। 'तन्मे वि चष्टे सवितायमर्यः'(१०-३४-१३)। अन्ते च कितवः अक्षाभिमानिनीं देवतां प्रणमति।

**अमरसन्देशः**

अक्षसूक्तस्य अधिकाधिके स्थले द्यूतक्रीडायाः दुष्परिणामं कथयन् वैदिकः ऋषिः अमरसन्देशं जनेषु प्रचारयति यत् अक्षेषु कदापि आसक्तः मा भवतु, स्वक्षतिं च मा करोतु। तथा च आम्नातम् ऋग्वेदीये अक्षसूक्ते 'अक्षैः मा दिव्यः कृषिमित् कृषस्व' इति। (१०-३४-१३) कृषिद्वारा लब्धेषु धनेषु आदरभावं प्रदर्शयन्तः तस्मादेव सुखं लभन्ताम्। कृषिकार्ये गौः तथा पालितपशुः तिष्ठति। तेन च अस्माकं समृद्धिः भवति। अतः हे अक्षभगवन् मया सह सख्यतां विधेहि। तव मोहिनीशक्तिं मयि मा विस्तारय। सदैव मम सहायको भव। एतदर्थमेव अस्मिन् सूक्ते अक्षदेवः प्रार्थ्यते 'प्रावेपा मा बृहतो मादयन्ति' इत्यादिमन्त्रैः इति शम्।

## २१.३) अक्षस्वरूपम्

मानवेषु सामाजिकदुर्व्यवहाराणां निराकरणाय सूक्तानि सङ्कलितानि। अक्षसूक्तमपि एतादृशमेकं सूक्तं यत्र अक्षक्रीडायाः दुष्परिणामो वर्णितो वर्तते। अक्षसूक्ते अक्षस्वरूपं वर्णितं वर्तते। अक्षः द्यूतक्रीडायाः देवतारूपेण परिचीयते। सः देवः अक्षं तथा श्रद्दधति यथा शिल्पकारः स्वोपकरणानि श्रद्दधाति। यथा वा लेखकः स्वलेखनीं श्रद्दधाति, वणिक् च स्वतुलादण्डं श्रद्धधति। अक्षः कस्यापि फलस्य बीजात् निर्मीयते। अयं धूसरवर्णीयः भवति। एनम् कस्मिंश्चित् पात्रे संस्थाप्य हस्तैः तस्य चालनं कृत्वा क्रीडा चाल्यते। अक्षक्रीडा हि गर्हितं कर्म। मनुसंहितायाः राजधर्मप्रसङ्गे (७.४७) येषां दशानां कामजव्यसनानाम् उल्लेखः प्राप्यते तत्र अक्षक्रीडा उल्लिखिता अस्ति। तथा च श्लोकः-

'मृगयाक्षः सुरापानं दिवास्वप्नः स्त्रियो मदः।

तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः'।। इति।

महाभारतस्य सभापर्वणि अपि एतत् कर्म समं निन्दितम्। 'द्यूते क्षतः कलहो विद्यते, न को वै द्यूतं रोचते बुध्यमानः' इत्येषा पङ्क्तिः महाभारतस्य सभापर्वणि समायाति। परन्तु काचित् अज्ञाता आसक्तिः वैदिककालादेव जनान् अस्मिन् द्यूते कर्मणि आसज्जयति। अस्मिन् अक्षसूक्ते तस्य द्यूतस्य विषये तथा तस्मात् जनानां विमुक्तिविषये उच्यते।

अक्षः दिव्याङ्गारस्वरूपः महाशक्तिशाली च। अयम् अक्षः द्यूतक्रीडकं तथा आनन्दयति यथा सोमरसः देवान् आनन्दयति। अयम् अक्षः द्यूतासक्तं जनं समग्रां रात्रिं व्याप्य जागरयति। द्यूतमत्तः जनः चिन्तासक्तो भूत्वा आरात्रिं जागर्ति। अक्षस्य अन्तः विराजते काचित् मोहिनी शक्तिः। द्यूतक्रीडकः अस्याः शक्तेः वशीभवति। द्यूतासक्तः जनः द्यूतकार्यविमुखः भविष्यति इति चिन्तयन् अपि द्यूतस्थले स्वसंकल्पं विस्मरति। द्यूतासक्तः जनः तस्यां क्रीडायां कुशलं जनं दृष्ट्वा स्वपराजयं विजानन्नपि न बिभेति कदाचन। अक्षक्रीडायाः शब्देन आसक्तः जनः द्यूतस्थलं प्रति धावति यथा पुंश्चली कुलटा स्त्री वा स्वसंकेतस्थलं प्रति धावति।

द्यूतस्थले निक्षिप्तः अपि अक्षः क्रीडकस्य मर्मस्थलं तुदति भिनत्ति च। स्वयं दन्तरहितः सन् अपि सहस्रजनान् पराजेतुम् इच्छति। अक्षः शीतलस्पर्शविशिष्टः अपि द्यूतकारहृदयं दहति। प्रकृत्या काष्ठं भूत्वापि द्यूतसमये सः कञ्चिद् द्यूतकारं स्थगयति कञ्चिच्च प्रतिष्ठापयति। विजेतुः कृते सः आनन्दप्रदः पराजेतुः कृते च दुःखप्रदः।

ऋग्वेदे अक्षाणां संख्याविषये सूचनां प्रदातुं त्रिपञ्चाशः इति शब्दः प्रयुक्तः। विद्वांसः अस्य शब्दस्य अनेकान् अर्थान् कृतवन्तः। यथा- पञ्चदश, त्रिपञ्चाशत्, पञ्चविंशत्युत्तरम् एकशतम् इति। परस्मिन् समये संहिताग्रन्थेषु ब्राह्मणग्रन्थेषु च द्यूतचालनासम्बन्धिनाम् उक्तीनां तालिका समुपलभ्यते। द्यूतक्रीडार्थं भूम्याम् एकं निम्नं स्थानं निर्मीयते।



## पाठसारः

अस्मिन् अक्षसूक्ते मूलतः अक्षक्रीडनस्य कुफलमेव उक्तम्। अस्मिन् सूक्ते एकस्य कितवस्य जीवनं कथं भवति इति विषये उक्तम्। कथं कितवाः जीवनं यापयन्ति। तेषां पत्नीनां कीदृशी अवस्था भवति। कीदृशं तेषां गृहवैभवं भवति। इत्येते विषयाः चतुर्दशमन्त्रैः आबद्धाः। मन्त्रेषु यदुक्तं तदेव अत्र साररूपेण कथ्यते। या कितवस्य स्त्रीः भवति सा यद्यपि अक्षक्रीडनात् पूर्वं कलहं न कृतवती, कितवमित्राणां कृते अनुकूला एव आसीत्। परन्तु, अक्षक्रीडनात् परं सैव अनुकूला स्त्री परित्यक्ता भवति। यः कितवः भवति तस्य श्वश्रूः अपि तं निवारयति। जायापि सदैव दुःखिता भवति। किञ्च यः कितवः भवति तस्य भार्याम् अन्ये कितवाः केशाद्याकर्षणेन स्पृशन्ति। एवं यथा कितवस्य प्रतिकूला अवस्था जायते तथैव तस्य भार्यायाः अपि। यद्यपि कितवः चिन्तयति यत् न क्रीडिष्यामीति तथापि इरिणे अक्षेषु



पतितेषु व्यभिचारिणीः स्त्रीः एव गच्छति। एवं तस्य दुरवस्था भवति। अक्षस्य कानिचन विशेषणानि अपि सन्ति। तानि च- अङ्कुशिनः, नितोदिनः, विनाशिनः, सन्तापदाः, पुत्रतुल्यधनदाः। एवंभूताः अक्षाः भवन्ति। न केवलम् एवंभूताः अपि तु ते क्रोधिनः सम्मुखे न नमन्ति। ते अङ्गारसदृशाः भवन्तः अपि कितवानां हृदयं दहन्ति। राजा अपि तान् अवज्ञां न करोति। ततः कितवानां का स्थितिः भवतीति उच्यते। ये कितवाः भवन्ति तेषां स्त्रियः दुःखिताः भवन्ति। कितवश्च ऋणदातुः बिभेति। कितवः रात्रौ अन्यस्य गृहं प्रविशति चौरार्थम्। कितवः स्वस्य स्त्रियं गृहवैभवम् अन्यस्य भार्यां गृहवैभवं च दृष्ट्वा दुःखितः भवति। एवं कितवस्य जीवनं चलति। ततः अक्षसूक्तस्य द्वादशचतुर्दशयोः मन्त्रयोः अक्षान् प्रति कितवानां प्रार्थनाज्ञापनम् अस्ति। किञ्च त्रयोदशमन्त्रे अक्षक्रीडां परित्यज्य कृषिकरणाय उक्तम्। एवमेव सम्पूर्णाक्षसूक्ते अक्षाणां विवरणं, तेषां कुफलं, कितवानां परिणामं च सन्ति।



## पाठान्तप्रश्नाः

१. अक्षसूक्तस्य सारं लिखत।

२. अक्षक्रीडनात् कितवस्य किं भवति इति समन्त्रं व्याख्यात।

३. अक्षकीडां परित्यज्य किं करणीयम् इति विषयकं मन्त्रं लिखित्वा व्याख्यात।

४. मित्रं कृणुध्वं खलु... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।

५. नीचा वर्तन्त उपरि... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. ऐलूषकवषः ऋषिः, त्रिष्टुप् ७जगती च छन्दसी, अक्षः ऋषिः देवता।

२. आस्फारे।

३. कम्पनशीलाः।

४. छन्द्-धातोः लुङि प्रथमपुरुषैकवचने।

५. हीड्धातुः।

६. सुखयिता।

७. वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति।

८. अवक्षिप्ताः।

९. आपूर्वकात् आत्मनेपदिनः धीधातोः लटि उत्तमपुरुषैकवचने।

१०. धने।



**उत्तराणि-२**

११. कोऽत्रास्ति धनिकस्तं जेष्यामीति।

१२. अक्षाः।

१३. शुज्-धातोः कानचि प्रथमैकवचने।

१४. मधुना।

१५. तप्-धातोः णिचि इष्णुच्प्रत्यये प्रथमाबहुवचने।

१६. निपूर्वकात् कृद्-धातोः क्वनिप्प्रत्यये प्रथमाबहुवचने।

१७. यथा सविता देवो जगति विहरति।

१८. त्रिपञ्चाशत्।

१९. वियोगजसन्तापेन पुत्रशोकेन च।

२०. अक्षपराजयादृणवान्।

**उत्तराणि-३**

२१. स्वव्यतिरिक्तपुरुषाणां सुखेन वर्तमानां जायां सुष्ठुकृतं गृहं च दृष्ट्वा मज्जाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा।

२२. करोमि।

२३. धनानि।

२४. वेदे।

२५. तत्र कृषौ गावः भवन्ति। तत्र जायाः भवन्ति। तत् एव धर्मरहस्यम्।

२६. दीव्-धातोः लङि मध्यमपुरुषैकवचने।

२७. पादपूरणार्थम्।

२८. सुखयत।

२९. तृतीयार्थे।

३०. लडर्थे।

॥ इति एकविंशः पाठः ॥



२२

# ॥पर्जन्यसूक्तं मनुमत्स्यकथा च॥

## प्रस्तावना

देववाणी वेदवाणी च संस्कृतम्। संस्कृतभाषायाम् अति प्राचीनं साहित्यं लभ्यते तद्धि वेदः। संस्कृतवाङ्मयगगने वेदाः एव खगराजाः। भारतभूमौ धर्मः अध्यात्मं च वेदादेव ज्ञायते। वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्। स्मृत्यादयः तु वेदमूलकतया प्रमाणपदवीम् आरोहन्ति। अत एव श्रुतिस्मृत्योः विरोधे जाते श्रुतेः ज्यायस्त्वम् अङ्गीक्रियते सर्वैरपि आस्तिकैः। भारतस्य अज्ञातेतिहास्य जनजीवनस्य ज्ञानं वेदज्ञानं विना नैव सम्भवति। तत्र विद्यन्ते धर्मादयः पुरुषार्थाः यैः ते वेदाः इति। सायणमतेन अपौरुषेयं वाक्यं वेदः। सुखलिप्सुः मनुजः। दुःखपरिजिहिर्षुश्च। तत्र इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकम् उपायं वेदयति वेदः। तथाहि श्लोकः -

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

वेदाः वै चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति।

**अस्मिन् पाठे पर्जन्यसूक्तम् मनुमत्स्यकथा च पाठ्यत्वेन विद्यते।** पूर्वार्धे **पर्जन्यसूक्तम्** विद्यते, उत्तरार्धे च **मनुमत्स्यकथा** उपन्यस्तमस्ति।

चतुर्षु वेदेषु तत्र ऋग्वेदे अग्न्यादिदेवानां स्तुतिः विद्यमाना तथैव पर्जन्यदेवस्यापि स्तुतिः विद्यते। ऋग्वेदीयं सूक्तमिदं पञ्चममण्डले विद्यमानं त्र्यशितितमम्। अस्य सूक्तस्य पर्जन्यः देवता, अत्रिः ऋषिः, प्रथमस्य पञ्चमस्य षष्ठस्य सप्तमस्य अष्टमस्य दशमस्य त्रिष्टुप् छन्दः, द्वितीयस्य तृतीयस्य चतुर्थस्य जगती छन्दः, नवमस्य अनुष्टुप् छन्दः। प्रत्येकं सूक्तस्य सायणभाष्यं व्याख्यारूपेण प्रदत्तम् अस्ति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- सूक्तस्थानां मन्त्राणां संहितापाठं ज्ञास्यति।
- सूक्ते विद्यमानानां मन्त्राणां पदपाठं ज्ञास्यति।
- सूक्तस्थानां मन्त्राणाम् अन्वयं कर्तुं समर्थो भवेत्।



- सूक्तस्थानां मन्त्राणां व्याख्यानं कर्तुं समर्थो भवेत्।
- सूक्ते विद्यमानानां मन्त्राणां सरलार्थं ज्ञास्यति।
- मन्त्रे स्थितं व्याकरणं ज्ञातुं समर्थो भवेत्।
- सूक्ततात्पर्यं सूक्ततत्त्वं च अवगच्छेत्।
- सूक्तार्थं ज्ञात्वा सूक्तमहिमानम् ज्ञास्यति।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- वैदिकलौककयोः भेदं ज्ञातुं शक्नुयात्।
- केषाञ्चित् वैदिकरूपाणि ज्ञास्यति।

## २२.१) अधुना मूलपाठं पठाम (पर्जन्यसूक्तम्)

**अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास।**
**कनिक्रदद्वृषभः जीरदानू रेतो दधात्योषधीषु गर्भम्॥१॥**

**वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्।**
**उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः॥२॥**

**रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ३ अह।**
**दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः॥३॥**

**प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः।**
**इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति॥४॥**

**यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति।**
**यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ॥५॥**

**दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः।**
**अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः॥६॥**

**अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन।**
**दृतिं सुकर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः॥७॥**



महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।
घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः॥८॥

यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृतः।
प्रतीदं विश्वं मोदते यत् किंच पृथिव्यामधि॥९॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदः मनीषाम्॥१०॥

## २२.१.१) इदानीं मूलपाठम् अवगच्छाम (पर्जन्यसूक्तम्)

**अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास।**

**कनिक्रदद्वृषभः जीरदानू रेतो दधात्योषधीषु गर्भम्॥१॥**

**पदपाठः- अच्छ। वद। तवसम्। गीःऽभिः। आभिः। स्तुहि। पर्जन्यम्। नमसा। आ। विवास। कनिक्रदत्। वृषभः। जीरऽदानुः। रेतः। दधाति। ओषधीषु। गर्भम्॥**

**अन्वयः-** आभिः गीर्भिः तवसम् अच्छ वद, नमसा पर्जन्यं स्तुहिः, आ विवास, जीरदानुः वृषभः कनिक्रदत् ओषधिषु गर्भं रेतः दधाति।

**व्याख्या-**हे स्तोतः तवसं बलवन्तं पर्जन्यम् अच्छ अभिप्रप्य वद प्रार्थय। पर्जन्यशब्दो यास्केन बहुधा निरुक्तः-'पर्जन्यस्तृपेराद्यन्त विपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा 'रसानाम्' (निरु॰१०.१०) इति। आभिः गीर्भिः स्तुवाग्भिः स्तुहि। नमसा अन्नेन हविर्लक्षणेन आ विवास सर्वतः परिचर। यः पर्जन्यः वृषभः अपां वर्षिता जीरदानुः क्षिप्रदानः कनिक्रदत् गर्जनशब्दं कुर्वन् ओषधीषु गर्भं गर्भस्थानीयं रेतः उदकं दधाति स्थापयति तं स्तुहि।

**सरलार्थः-** (हे स्तोतः) आभिः स्तुतिभिः बलशालिनः प्रार्थनां कुरु। हविषा स्तुतिं कुरु तथा सर्वथा सेवां कुरु। शीघ्रं यच्छत्सु, वर्षनकारकेषु, गर्जनं कुर्वत्सु ओषधिषु गर्भस्वरूपं जलं धारयति।

**व्याकरणविमर्शः-**

- विवास- विपूर्वकात् वस्-धातोः मध्यमपुरुषैकवचने रूपमिदम्।
- कनिक्रदत्- क्रन्द्-धातोः यङ् तुङन्ते प्रथमापुरुषैकवचने रूपमिदम्।
- दधाति- धा-धातोः लटि प्रथमैकवचने रूपमिदम्।



**वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्।**

**उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः॥२॥**

**पदपाठः- वि। वृक्षान्। हन्ति। उत। हन्ति। रक्षसः। विश्वम्। बिभाय। भुवनम्। महाऽवधात्। उत। अनागाः। ईषते। वृष्ण्यऽवतः। यत्। पर्जन्यः। स्तनयन्। हन्ति। दुःऽकृतः॥**

**अन्वयः-** पर्जन्यः वृक्षान् विहन्ति उत रक्षसकः हन्ति। महाबधात् विश्वं भुवनं विभाय यत् स्तनयन् दुष्कृतः हन्ति अनागाः वृष्ण्यावतः ईषते।

**व्याख्या**-अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः, तदेवात्र लिख्यते- 'पर्जन्यो विहन्ति वृक्षान्विहन्ति च रक्षांसि सर्वाणि चास्मद्भूतानि विभ्यति महाबधात् महान् ह्यस्य बधः। अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः (निरु० १०.११)' इति॥

**सरलार्थः-** पर्जन्यदेवः वृक्षान् नाशयति किञ्च राक्षसान् नाशयति। शक्तिशालिनः आयुधयुक्तात् पर्जन्यात् सम्पूर्णलोकः बिभेति। यदा  गर्जनं कुर्वन् पर्जन्यः असुरान् ताडयति तदा पापकर्म ये न कुर्वन्ति ते जनाः शक्तिशालिनः पर्जन्यात् दूरम् अपसरति।

**व्याकरणविमर्शः-**

- स्तनयन्- स्तन्धातोः शतृप्रत्यये प्रथमैकवचने रूपमिदम्।
- ईषते- ईष्धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।
- विभाय-भीधातोः लिटि प्रथमपुरुषैकवचने रूपमिदम्।

**रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ३ अह।**

**दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः॥३॥**

**पदपाठः- रथीऽइव। कशया। अश्वान्। अभिऽक्षिपन्। आविः। दूतान्। कृणुते। वर्ष्यान्। अह। दूरात्। सिंहस्य। स्तनथाः। उत्। ईरते। यत्। पर्जन्यः। कृणुते। वर्ष्यम्। नभः॥**

**अन्वयः-** कशया अश्वान् अभिक्षिपन् रथी इव अहं वर्ष्यान् दूतान् आविष्कृणुते यत् पर्जन्यः नभः वर्षम् कृणुते, दूरात् सिंहस्य स्तनथाः उदीरते॥



**व्याख्या-** रथीव रथस्वामीव। स यथा कशया अश्वान् अभिक्षिपन् दूतान् भटान् आविष्करोति तद्वदसौ पर्जन्योऽपि कशया अश्वान् मेघान् अभिक्षिपन् अभिप्रेरयन् वर्ष्यान् वर्षकान् दूतान् दूतवत् वृष्टिप्रेरकान् मेघान् मरुतो वा आविः कृणुते प्रकटयति। अह इति पूरणः। एवं सति सिंहस्य। सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः। अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य स्तनथाः, गर्जनशब्दाः दूरात् उदीरते उद्गच्छन्ति। कदा। यत् यदा पर्जन्यः नभः अन्तरिक्षं वर्ष्यं वर्षोपेतं कृणुते करोति तदा॥

**सरलार्थः-** कशया अश्वं प्रेरणं कुर्वन् रथस्वामी इव (पर्जन्यदेवः) वर्षासम्बन्धिदूतान् प्रकटयति। यदा पर्जन्यदेवः आकाशात् वर्षणं करोति तदा दूरात् गर्जनस्य ध्वनिः श्रूयते।

**व्याकरणविमर्शः-**

- अभिक्षिपन्- अभि पूर्वकात् क्षिप्-धातोः शतृप्रत्यये प्रथमपुरुषैकवचने रूपमिदम्।
- उदीरते- उत् पूर्वकात् ईर्धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।
- कशया- कश्धातोः अच्प्रत्यये टाप्प्रत्यये तृतीयाबहूवचने रूपमिदम्।

**प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः।**

**इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति॥४॥**

**पदपाठः- प्र। वाताः। वान्ति। पतयन्ति। विऽद्युतः। उत्। ओषधीः। जिहते। पिन्वते। स्वरितिस्वः। इरा। विश्वस्मै। भुवनाय। जायते। यत्। पर्जन्यः। पृथिवीम्। रेतसा। अवति॥**

**अन्वयः-** यत् पर्जन्यः पृथिवीं रेतसा अवति, वताः प्रवान्ति, विद्युतः पतयन्ति, ओषधीः उज्जिहते. स्वः पिन्वते, विश्वस्मैस भुवनाय इरा जायते।

**व्याख्या-** 'प्र वाताः' इति चतुर्थी पर्जन्यस्य चरोर्याज्या। सूचित्रं च- 'प्र वाता वान्ति पतयन्ति विद्युत् इत्यग्न्याधेय प्रभृति' (आश्व०२.१५) इति। प्र वान्ति वाताः वृष्ट्यर्थम्। पतयन्ति गच्छन्ति समन्तात् सञ्चरन्ति विद्युतः। ओषधीः ओषधयः उत् जिहते उद्गच्छन्ति प्रवर्धन्ते। स्वः अन्तरिक्षं पिन्वते क्षरति। इरा भूमिः विश्वस्मै सर्वस्मै भुवनाय सर्वजगद्धिताय जायते समर्थाः भवति। कदैवमिति। यत् यदा पर्जन्यः देवः पृथिवीं रेतसां उदकेन अवति रक्षति अभिगच्छति वा तदैवं भवति।

**सरलार्थः-** यदा पर्जन्यदेवः पृथिवीं जलेन सिञ्चति, तदा वायुः शीघ्रं वाति, विद्युत् पतति, ओषधयः जायन्ते, आकाशं पिन्वते, सम्पूर्णलोकस्य कृते पृथिवी(भोजनप्रदाने) समर्था भवति।

**व्याकरणविमर्शः-**

- वान्ति- वा-धातोः लटि प्रथमपुरुषबहुवचने।



- पतयन्ति- पत्-धातोः लटि प्रथमपुरुषबहुवचने।
- उज्जिहते- उत्पूर्वकात् आत्मनेपदिनः हा-धातोः लटि प्रथमपुरुषैकवचने।
- पिन्वते- आत्मनेपदिनः पिन्व्-धातोः लटि प्रथमपुरुषैकवचने।

**यस्य॑ व्र॒ते पृ॑थि॒वी नन्न॑मीति॒ यस्य॑ व्र॒ते श॒फव॒ज्जर्भु॑रीति।**

**यस्य॑ व्र॒त ओष॑धीर्वि॒श्वरू॑पा॒: स न॑: पर्जन्य॒ महि॒ शर्म॑ यच्छ॥५॥**

**पदपाठः- यस्य॑। व्र॒ते। पृ॒थि॒वी। नन्न॑मीति। यस्य॑। व्र॒ते। श॒फऽव॑त्। जर्भु॑रीति। यस्य॑। व्र॒ते। ओष॑धीः। वि॒श्वऽरू॑पाः। सः। न॒:। प॒र्ज॒न्य॒। महि॑। शर्म॑। य॒च्छ॒॥**

**अन्वयः-** यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवत् जर्भुरीति, यस्य व्रते ओषधीः विश्वरूपाः स पर्जन्यः नः महि शर्म यच्छ।

**व्याख्या-** यस्य पर्जनस्य व्रते कर्मणि पृथिवी नन्नमीति अत्यर्थं नमति सर्वेषामधो भवति। यस्य व्रते शफवत् पादोपेतं जर्भुरीति भ्रियते पूर्यते गच्छतीति वा। यस्य व्रते कर्मणि ओषधीः ओषधयः विश्वरूपाः नानारूपाः भवन्ति। हे पर्जन्यः सः महांस्त्वं नः अस्माभ्यं महि शर्म महत् सुखं यच्छ प्रयच्छ।

**सरलार्थः-** यस्य आज्ञया पृथिवी नमति, यस्य आज्ञया क्षुरधारिणः पशवः विचरन्ति, यस्य आज्ञया ओषधयः विविधरूपाः भवन्ति। हे पर्जन्य देव त्वम् अस्माकं कृते महत् सुखं प्रयच्छतु।

**व्याकरणविमर्शः-**

- नन्नमीति- नम्-धातोः यङ्लुकि लटि प्रथमपुरुषैकवचने।
- जर्भुरीति- भुर्-धातोः यङ्लुकि लटि प्रथमपुरुषैकवचने।
- यच्छ- यम्-धातोः लोटि मध्यमपुरुषैकवचने।



## पाठगतप्रश्नाः

१. पर्जन्यसूक्तम् कस्मिन् वेदे अन्तर्भवति।

२. पर्जन्यसूक्तस्य ऋषिः कः भवति।

३. पर्जन्यसूक्तस्य देवता का।

४. विवास इति पदस्य निष्पत्तिः कुतः।

५. कनिक्रदत् इति पदस्य निष्पत्तिः कुतः।

६. पर्जन्यः कान् विहन्ति।

७. ईषते इति पदस्य निष्पत्तिः कुतः।



८. विभाय इति पदस्य निष्पत्तिः कुतः।

**दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः।**

**अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः॥६॥**

**पदपाठः- दिवः। नः। वृष्टिम्। मरुतः। ररीध्वम्। प्र। पिन्वत। वृष्णः। अश्वस्य। धाराः।**

**अर्वाङ्। एतेन। स्तनयित्नुना। आ। इहि। अपः। निऽसिञ्चन्। असुरः। पिता। नः॥**

**अन्वयः-** मरुतः दिवः न वृष्टिं ररीध्वम्, वृष्णः अश्वस्य धाराः प्रपिन्वतः। नः पिता असुरः अपः निषिञ्चन् एतेन स्तनयित्नुना अर्वाङ् एहि।

**व्याख्या-** हे मरुतः यूयं दिवः अन्तरिक्षसकासात् नः अस्मादर्थं वृष्टिं ररीध्वं दत्त। वृष्णः वर्षकस्य अश्वस्य व्यापकस्य मेघस्य सम्बन्धिन्यः धाराः उदकधाराः प्रपिन्वतः प्रक्षरत। हे पर्जन्य त्वम् एतेन स्तनयित्नुना गर्जता मेघेन सह अर्वाङ् अस्मदभिमुखान् एहि आगच्छ। अपः तिं कुर्वन्। अपः अस्माभिः निषिञ्चन् स देवः असुरः उदकानां निरसितापि सन् नः अस्माकं पिता पालकञ्च।

**सरलार्थः-** हे मरुतः, अन्तरिक्षात् अस्माकं कृते जलं प्रयच्छतु। वर्षणं कुर्वतां मेघानां धारां प्रवाहयतु। अस्माकं पालकः, प्राणदः त्वं जलं प्रयच्छन् गर्जनं कुर्वता मेघेन सह आगच्छतु।

**व्याकरणविमर्शः-**

- ररीध्वम्- आत्मनेपदिनः रा-धातोः लटि मध्यमपुरुषबहुवचने।
- प्रपिन्वत- प्रपूर्वकात् पिन्व्-धातोः लोटि मध्यमपुरुषबहुवचने
- निषिञ्चन्- निपूर्वकात् सिञ्च्-धातोः शतृप्रत्यये प्रथमैकवचने।
- असुरः- असून् प्राणान् राति ददाति इति असुरः।

**अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन।**

**दृतिं सुकर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः॥७॥**

**पदपाठः- अभि। क्रन्द। स्तनय। गर्भम्। आ। धाः। उदन्ऽवता। परिऽदीय। रथेन।**

**दृतिम्। सु। कर्ष। विऽसितम्। न्यञ्चम्। समाः। भवन्तु। उत्ऽवतः। निऽपादाः॥**



**अन्वयः-** अभि क्रन्द, स्तनय, गर्भम् आ धाः, उदन्वता रथेन परि दीय, विषितं दृतिं न्यञ्चम् सु कर्ष। उद्वतः निपादाः समाः भवन्तु।

**व्याख्या-** अभि भूम्यभिमुखं क्रन्द शब्दय। तदेव पुनरुच्यते। दाढ्र्याय। स्तनय गर्ज। गर्भं गर्भस्थानीयमुदकम् ओषधीषु आ धाः आधेहि। तदर्थम् उदन्वता उदकवता रथेन परिदीय परितो गच्छ। दृतिं दृतिवदुदकधारकं मेघं विषितं विशेषेण सितं बद्धं न्यञ्चं न्यक् अधोमुखं सु सुष्ठु आकर्ष वृष्ट्यर्थम्। यद्वा। विषितं विमुक्तबन्धनमेवं कर्ष। एवं कृते उद्वतः ऊर्ध्ववन्तः उन्नतप्रदेशाः निपादाः न्यग्भूतपादा निकृष्टपादा वा निम्नोन्नतप्रदेशाः समाः एकस्थाः। भवन्तु उदकपूर्णा भवन्त्वित्यर्थः।

**सरलार्थः-** (हे पर्जन्यदेव) (भूमिम्) अभिमुखीकृत्य गर्जनं करोतु। (ओषधिषु) गर्भं (जलं) स्थापयतु। जलयुक्तं रथं परितः भ्रमतु। विशिष्टरूपेण बद्धं जलपात्रम् अधोमुखीकृत्य जलं पिन्वताम्। येन ऊर्ध्वस्थानम् अधोस्थानं च समानं भवेत्।

**व्याकरणविमर्शः-**

- क्रन्द- क्रन्द्-धातोः लोटि मध्यमपुरुषैकवचने।
- स्तनय-स्तन्-धातोः लोटि मध्यमपुरुषैकवचने।
- धाः- धा-धातोः लुङि मध्यमपुरुषैकवचने।
- दीया- दी-धातोः लोटि मध्यमपुरुषैकवचने वैदिकं रूपम्।

**महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।**

**घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः॥८॥**

**पदपाठः- महान्तम्। कोशम्। उत्। अच। नि। सिञ्च। स्यन्दन्ताम्। कुल्याः। विऽसिताः। पुरस्तात्। घृतेन। द्यावापृथिवी इति। वि। उन्धि। सुऽप्रपानम्। भवतु। अघ्न्याभ्यः॥**

**अन्वयः-** महान्तं कोशम् उदच, निषिञ्च। कुल्याः विषिताः पुरस्तात् स्यन्दन्ताम्। घृतेन द्यावापृथिवी वि उन्धि। अघ्न्याभ्यः सु प्रपाणं भवतु।

**व्याख्या-** हे पर्जन्य त्वं महान्तं प्रवृद्धं कोशं कोशस्थानीयं मेघम् उदच् उद्गच्छ। उद्गमय वा। तथा कृत्वा निषिञ्च नीचैः क्षारय। कुल्या नद्यः विषिताः विष्यूताः सत्यः स्यन्दन्तां प्रवहन्तु पुरस्तात् पूर्वाभिमुखम्। प्रायेण नद्यः प्राच्यः स्यन्दते घृतेन उदकेन द्यावापृथिवी दिवं च पृथिवीं च व्युन्धिं क्लेदय अत्यधिकम्। अन्ध्याभ्यः गोभ्यः सुप्रपाणं सुष्ठु प्रकर्षेण पातव्यमुदकं भवतु।



**सरलार्थः-** (हे पर्जन्यदेव) मेघम् उर्ध्वभागम् आदाय गच्छतु किञ्च वर्षणं करोतु। नद्यः बन्धनरहिताः सन्तः सम्मुखभागं प्रवहन्तु। जलेन द्युलोकं तथा पृथिवीलोकं विशेषरूपेण सिक्तं करोतु। गवां कृते पानीयं जलं वर्षतु।

**व्याकरणविमर्शः-**

- उदच- उत्पूर्वकात् अच्-धातोः लोटि मध्यमपुरुषैकवचने वैदिकं रूपम्।
- निषिञ्च- निपूर्वकात् सिञ्च्-धातोः लोटि मध्यमपुरुषैवचने।
- स्यन्दन्ताम्- स्यन्द्-धातोः लोटि मध्यमपुरुषबहुवचने।
- उन्धि- उद्-धातोः लोटि मध्यमपुरुषैकवचने।

**यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृतः।**

**प्रतीदं विश्वं मोदते यत् किंच पृथिव्यामधि॥९॥**

**पदपाठः- यत्। पर्जन्य। कनिक्रदत्। स्तनयन्। हंसि। दुःऽकृतः। प्रति। इदम्। विश्वम्। मोदते। यत्। किम्। च। पृथिव्याम्। अधि॥**

**अन्वयः-** पर्जन्य! यत् कनिक्रदत् स्तनयन् दुष्कृतः हंसि इदं विश्वं यत् किंच पृथिव्याम् अधि मोदते।

**व्याख्या-** हे पर्जन्य यत् यदा त्वं कनिक्रदत् अत्यर्थं शब्दयन् स्तनयन् दुष्कृतः पापकृतो मेघान् हंसि विदारयसि तदानीम् इदं विश्वं जगत् प्रति मोदते। यत्किञ्च पृथिव्यामधि भूम्यामधिष्ठितं यच्चरात्मकं तदिदं मोदते वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम्।

**सरलार्थः-** हे पर्जन्य देव यदा भवान् तीव्रशब्दं कुर्वतः, गर्जनं कुर्वतः दुष्कर्म कुर्वतां जनानां हननं करोति तदा ये पृथिव्यां तिष्ठन्ति ते आनन्दिताः भवन्ति।

**व्याकरणविमर्शः-**

- हंसि- हन्-धातोः लटि मध्यमपुरुषैकवचने।
- मोदते- आत्मनेपदिनः मुद्-धातोः लटि प्रथमपुरुषैकवचने।

**अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ।**

**अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदः मनीषाम्॥१०॥**



**पदपाठः- अवर्षीः। वर्षम्। उत्। ऊँ इति। सु। गृभाय। अकः। धन्वानि। अतिऽएतवै। ऊँ इति। अजीजनः। ओषधीः। भोजनाय। कम्। उत। प्रऽजाभ्यः। अविदः। मनीषाम्॥**

**अन्वयः-** वर्षम् अवर्षीः। उत् उ सु गृभाय। धन्वानि अति एतवै अकः। भोजनाय कम् ओषधीः अजीजनः उत प्रजाभ्यः मनीषाम् अविदः।

**व्याख्या-** इयमतिवृष्टिविमोचनी। हे पर्जन्य त्वम् अवर्षीः वृष्टवानसि। वर्षमृदु षू गृभाय उत्कृष्टं सु सुष्ठु गृभाय गृहाण। परिहरेत्यर्थः। धन्वानि निरुदकप्रदेशान् अकः जलवतः कृतवानसि। किमर्थम् अत्येतवा उ अतिक्रम्य गन्तुम्। ओषधीः अजीजनः उत्पादय। किमर्थम्। भोजनाय धनाय भोगाय वा कम् इत्ययं 'शिशिरं जीवनाय कम्' इतिवद् पादपूरणः (निरु. १.१०)। अपि च प्रजाभ्यः सकाशात् मनीषाम् अविदः प्राप्तवानसि।

**सरलार्थः-** (हे पर्जन्य देव) भवान् वर्षणं करोतु। भवान् यत् पूर्णरूपेण रोधं करोतु। जलहीनप्रदेशम् अतिक्रम्य गमनयोग्यः भवतु। भोगकरणाय ओषधीनाम् उत्पन्नं करोतु, तथा लाकात् प्रशंसां प्राप्नोतु।

**व्याकरणविमर्शः-**

- अवर्षीः- वृष्-धातोः लुङि मध्यमपुरुषैकवचने।
- गृभाय- ग्रभ्-धातोः लटि लोटि वा मध्यमपुरुषैकवचने। केषाञ्चित् मतं यत् ग्रह्-धातोः वैदिकं रूपमिदम्।
- एतवै- इण्-धातोः तुमर्थकतवैप्रत्यये।
- अकः- कृ-धातोः लुङि मध्यमपुरुषैकवचने वैदिकरूपम्।



## पाठगतप्रश्नाः

९. ररीध्वम् इति कुत्रत्यं रूपम्।

१०. असुरः इत्यस्य निवर्चनं लिखत।

११. दीया इति कुत्रत्यं रूपम्।

१२. महान्तं कोशम्....इति मन्त्रं पूरयत।

१३. गृभाय इत्यस्य कोऽर्थः।

१४. हंसि इति कुत्रत्यं रूपम्।



## २२.२) पर्जन्यसूक्तसारः

ऋग्वेदस्य पञ्चमे मण्डले त्र्यशीतितमं सूक्तमिदं पर्जन्यसूक्तम्। अस्य सूक्तस्य अत्रिः ऋषिः, पर्जन्यो देवता, जगत्यादीनि च छन्दांसि। अस्मिन् सूक्ते साकल्येन दश मन्त्राः सन्ति। तेषु च मन्त्रेषु पर्जन्यदेवताम् उद्दिस्य विविधाः प्रार्थनाः विहिताः। अस्मिन् सूक्ते प्रधानतः जलवर्षणस्य कृते प्रार्थना विधीयते। तथाहि अत्र पर्जन्यदेवतायाः माहात्म्यस्य प्रकटनं क्रियते, ततः तस्य भयङ्करं रूपं वर्ण्यते, ततश्च अस्यां पृथिव्याम् उपयुक्तेन जलवर्षणेन शस्यविधानाय प्रार्थनाः क्रियन्ते।

तत्रादौ उच्यते सूक्तिभिः स महान् पर्जन्यदेवः स्तोतव्यः, किञ्च नमस्कारमाध्यमेन स प्रसन्नीकर्तव्यः। यतो हि स जलवर्षकः ओषधीषु गर्भरूपेण बीजानि धारयति। अत आम्नातं-

अच्छा वद तवसं गीर्भिराभिःस्तुहि पर्जन्यं नमसा विवास।

कनिक्रदद् वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम्।। इति।

स हि वृक्षान् खण्डशः विभक्तान् करोति, किञ्च भयङ्करैः अस्त्रैः गर्जन् अस्मिन् संसारे पापिजनानां नाशं करोति। रथारूढः स्वामी इव गच्छन् स्वस्य दूतान् मेघान् प्रकटीकरोति। सिंहवत् गर्जन् सम्पूर्णम् आकाशं मेघाच्छन्नं करोति। स वायुं प्रवहन् विद्युतं प्रकटयन् ओषधीश्च उत्पादयन् जलेन पृथिव्यां प्राणिनः रक्षति।

एतदनन्तरम् अत्र पर्जन्यदेवम् उद्दिश्य विविधाः प्रार्थनाः उच्चार्यन्ते। यथा- यस्य आज्ञया ओषधयः विविधवर्णयुक्ताः भवन्ति, स पर्जन्यदेवः अस्मान् रक्षतु। आकाशतः अस्मभ्यं वृष्टिं प्रददातु, शक्तिशालिभिः मेघैः जलधारां प्रवाहयतु किञ्च जलसेकेन पितृवत् अस्माकं सुरक्षां विदधातु। महाजलपात्रतः पृथिव्यां जलं वर्षयतु, अपि च नद्यः बन्धनरहिताः भूत्वा अग्रे प्रवहन्तु, अवध्यानां गवां कृते पर्याप्तं जलं भवतु। घृतरूपिणा वर्षाजलेन समग्रां पृथिवीं तथा आकाशञ्च सिञ्चतु। अत एव आम्नातं-

महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।

घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः।। इति।

ततश्च उच्यते - हे पर्जन्यदेव ! अतीव गर्जन् भयङ्करशब्दं कुर्वन् च यदा भवान् पापिजनं हन्ति, तदा समग्रा पृथिवी प्रसन्ना भवति। एवञ्च प्रार्थ्यते यत् जलवर्षणाद् अनन्तरम्, ओषधीनां च उत्पादानाद् अनन्तरम्, अस्माकं स्तुतीः च श्रुत्वा भवान् पूर्णरूपेण स्थिरीभवतु इति।

## २२.३) पर्जन्यदेवतास्वरूपम्

पर्जन्यसूक्ते पर्जन्यदेवतायाः स्वरूपं ज्ञायते। पर्जन्यः वृष्टिकारकः देवः। अस्य प्रधानं वैशिष्ट्यं हि अयं जलं वर्षति, जलमयेन रथेन आरूढो भूत्वा भ्रमति। जलचर्म आकुञ्च्य ततः जलं सिञ्चति। पर्जन्यः शीघ्रं वृष्टिं कारयति। यदा अयं आकाशं मेघयुक्तं करोति, तदा सिंहवत् भीषणं गर्जति।

पर्जन्यः समस्तविश्वस्य पिता माता च इत्युच्यते। तथाहि स वर्षाद्वारा पृथिव्यां जलरूपिवीर्यस्य धारणं कुर्वन् प्राणिनां कृते अन्नादीनां खाद्यपदार्थानाम् उत्पत्तिं करोति। अतः अयं भवति विश्वस्य पिता।



अस्य प्रधानं कार्यं तु जलवर्षणम् एव। तथापि अन्यानि अपि कानिचन कार्याणि तस्य सन्ति। यथा स दुष्कालं नाशयति, वज्रपातैः वृक्षान् नाशयति किञ्च भयङ्करान् असुरान् अपि स्वस्य भयङ्करैः अस्त्रैः हन्ति। तस्य महत्याः शक्त्याः पुरतः सम्पूर्णं जगत् एव नतमस्तकं भवति। पर्जन्यो हि पृथिवीं सत्त्वयुक्तां करोति, ओषधयश्च अनेन पल्लवैः पुष्पैः च शोभन्ते।

अस्य विविधैः देवैः सह सम्पर्कः वर्तते। तथाहि मरुद्भिः वायुदेवेन च अस्य घनिष्ठः सम्बन्धः। ऋग्वदेषु अग्निदेवेन सह अस्य स्तुतिः कृता वर्तते। वर्षाणां देवतारूपेण अस्य देवेन्द्रेण इन्द्रेण सह तुलना कृता। पृथिवी अस्य पत्नी इति कथ्यते परन्तु अन्यत्र वशा अस्य पत्नी इत्यपि उल्लेखः। सोमः पर्जन्यदेवस्य पुत्रः इति प्रसिद्धम्।

अयं पर्जन्यदेवः भौतिकस्य पर्जन्यस्य अर्थात् मेघस्य मूर्तरूपः। प्राचीनाः ऋषयः वर्षाणां तथा गर्जनशक्त्याः मूर्तिरूपेण पर्जन्यदेवस्य दर्शनं लब्धवन्तः।

एवञ्च पर्जन्यसूक्ते पर्जन्यदेवस्य बहूनि माहात्म्यानि ज्ञायन्ते। यथा- स जलवर्षकः ओषधीषु गर्भरूपेण बीजानि धारयति। स हि वृक्षान् खण्डशः विभक्तान् करोति, किञ्च भयङ्करैः अस्त्रैः गर्जन् अस्मिन् संसारे पापिजनानां नाशं करोति। अत एव आम्नातं-

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्।

उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः।। इति।

रथारूढ स्वामी इव गच्छन् स्वस्य दूतान् मेघान् प्रकटीकरोति। सिंहवत् गर्जन् सम्पूर्णम् आकाशं मेघाच्छन्नं करोति। स वायुं प्रवाहयति, विद्युतं प्रकटयति, ओषधीश्च उत्पादयति जलेन पृथिव्यां प्राणिनः रक्षति च। पर्जन्यदेवः एव अन्नस्य उत्पादने मूलं कारणं भवति। अत एव उक्तं गीतायाम्-

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।

यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।। इति।

##  पाठसारः (पर्जन्यसूक्तम्)

सूक्तेस्मिन् ऋषिः अत्रिः आह, हे स्तोतः बलवन्तं पर्जन्यं गीर्भिः स्तुहि। यः पर्जन्यः अपां वर्षता क्षिप्रदानः गर्जनशब्दं कुर्वन्, ओषधीषु गर्भस्थानीयं रेतः उदकं दधासि स्थापयति वा तं स्तुहि। पर्जन्यो वृक्षान् विहन्ति, रक्षांसि विहन्ति च। यदा पर्जन्यः स्तनयन् दृष्कृतः पापकृतः हन्ति, तदा अनपराधोपि भीतः पलायते। अन्यच्च यदा पर्जन्यः अन्तरिक्षं वर्षोपेतं करोमि, तदा स कशया अश्वान् अभिक्षिपन् प्रभिप्रेरयन् वर्षकान् दूतान् मेघान् वा प्रकटयति। वृष्ट्यर्थं वाताः प्रवान्ति, विद्युतः समन्तात् संचरन्ति, ओषधयः प्रवर्धन्ते, स्वः अन्तरिक्षं पिन्वते, सर्वस्मै भुवनाय भूमिः अन्नम् उत्पादयति, यदा पर्जन्यः पृथिवीम् उदकेन अवति। यस्य पर्जन्यस्य कर्मणि पृथिवी नन्नमीति, यस्य व्रते पादोपेतं गवादिकं भ्रियते पूर्यते गच्छति वा, यस्य कर्मणि ओषधयः नानारूपा भवन्ति, हे पर्जन्य स महांस्त्वम् अस्मभ्यं महत् सुखं



प्रयच्छ। इत्थं हे मरुतः यूयम् अन्तरिक्षसकाशात् अस्मदभिमुखम् आगच्छ। हे पर्जन्य त्वं महान्तं प्रवृद्धं कोशस्थानीयं मेघम् उद्गमय, तथा कृत्वा नःषिञ्च च, येन नद्यः विष्यूताः सत्यः प्रवहन्तु। हे पर्जन्य यदा त्वं स्तनयन् दुष्कृतः मेघान् विदारयसि, तदा विश्वमिदं मोदते, यतो हि वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम्।

## ॥मनुमत्स्यकथा॥

### प्रस्तावना

शुक्लयजुर्वेदे एकमेव ब्राह्मणं विद्यते। तस्य नाम शतपथब्राह्मणम् इति। एतत् ब्राह्मणसाहित्ये बृहत्तममस्ति। शुक्लयजुर्वेदस्य शाखाद्वयं - काण्वशाखा माध्यन्दिनशाखा च। उभयशाखायामेव ब्राह्मणम् उपलभ्यते। माध्यन्दिनशाखायां ब्राह्मणस्य चतुर्दश काण्डानि शतम् अध्यायाः च सन्ति। शाखयोः माध्यन्दिनशाखा सुप्रसिद्धा। अस्यामेव शाखायां प्रथमकाण्डस्य अष्टमाध्याये मनुमत्स्यकथा इति आख्यायिका पदं करोति। अस्याम् आख्यायिकायां मनुमत्स्ययोः रमणीया कथा विद्यते। सैव अस्मिन् पाठे प्रस्तूयते।

### २२.४) इदानीं मूलपाठं पठाम (मनुमत्स्यकथा)

**मनवे ह वै प्रातः।**
**अवनेग्यमुदकमाजह्रुर्यथेदम्पाणिभ्यामवनेजनायाहरन्त्येवं**
**तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे॥ १॥**

**स हास्मै वाचमुवाद। बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा**
**पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति कथं**
**ते भृतिरिति॥ २॥**

**स होवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य**
**एव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि स यदा तामतिवर्धा अथ कर्षूं**
**खात्वा तस्यां मा बिभरासि स यदा तामतिवर्धा अथ मा**
**समुद्रमभ्यवहरासि तर्हि वा अतिनाष्ट्रो भवितास्मीति॥ ३॥**



**शश्वद्ध झष आस। स हि ज्येष्ठं वर्धतेऽथेतिथीं समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति।। ४।।**

**तमेवं भृत्वा समुद्रमभ्यवजहार। स यतिथीं तत्समां परिदिदेष ततिथीं समां नावमुपकल्प्योपासांचक्रे स औघ उत्थिते नावमापेदे तं स मत्स्य उपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव।। ५।।**

**स होवाच। अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावदुदकं समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमित्यौघो हताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे।। ६।।**

---

## २२.४.१) इदानीं मूलपाठम् अवगच्छाम (मनुमत्स्यकथा)

**मनवे ह वै प्रातः।**
**अवनेग्यमुदकमाजहुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे।। १।।**

**व्याख्या** - मनवे ह वै। इडाब्राह्मणमेतत्। तत्र ईडायां मानवीम् ईडां देवतां वक्तुं मानवी घृतपदी मैत्रावरुणी (तै०सं०२.६.७.६, तै०ब्रा० ३.४.८.१, २३.२, आ०श्रौ० १.७.७) इत्येतानि च निगदपदानि व्याख्यातुमितिहासः प्रवृत्तः। स चेतिहासः प्रसन्न एव, किञ्चित्तु दर्श्यते। मनवे वैवस्वताय। तादर्थ्ये चतुर्थी। अवनेज्यते हस्ताद्यनेनेत्यवनेग्यम्। करणे कृत्यः। आजहुः आनीतवन्तः परिचारकाः। यथा इदम् अधुना पाणिभ्यां हस्तार्थं यदवनेजनं तस्मै आहरन्ति तथा आजहुः। तस्य मनोः अवनेनिजानस्य प्रक्षालयतः मत्स्यः पाणी आपेदे प्राप्तः। भानिनोर्थस्य सिद्ध्यर्थं देवतैव मत्स्यरूपेण आजगाम।। १।।

**सरलार्थः-** प्रातः मनोः समीपे हस्तप्रक्षालनाय जलम् आनीतम्। यदा मनुः हस्तादिकं प्रक्षालयति स्म तदा एकः मत्स्यः तस्य हस्ते अपतत्।

**व्याकरणम्-**

- अवनेग्यम्- अवपूर्वकात् निज्-धातोः ण्यत्प्रत्यये।



- अवनेनिजानस्य- अवपूर्वकात् निज्-धातोः शानचि।
- आजह्रुः- आङ्पूर्वकात् हृ-धातोः लिटि प्रथमपुरुषबहुवचने।
- आपेदे- आङ्पूर्वकपद्-धातोः लिटि प्रथमपुरुषैकवचने।

**स हास्मै व्वाचमुवाद। बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्व्वोढा ततस्त्वा पारयितास्मीति कथं ते भृतिरिति।। २।।**

**व्याख्या** - स मत्स्यः अस्मै मनवे वाचम् उवाद उदितवान्। कीदृशीम् बिभृहि पुषाण मा माम्। किमर्थम् पारयिष्यामि पाल रक्षणे(धा १०.७५) रक्षिष्यामि त्वा इति। कस्मात् इति भयहेतुप्रश्नः। वहतीति औघः उदकसङ्घातः। स इमाः भारतवर्षनिवासिनीः सर्वाः प्रजाः निर्वोढा निःशेषं वोढा देशान्तरं प्रापयिता। ततः तस्मात् भयहेतोः त्वा पारयितास्मि पालयितास्मि इति मत्स्यवचः। कथम् इति मनोः प्रश्नः। कथं ते तव भृतिः भरणं पुष्टिः इति।। २।।

**सरलार्थः-** स मत्स्यः तम् उवाच- त्वं मां पालय। अहं तव रक्षणं करिष्यामि इति। तदा मनुः अवोचत् त्वं कस्मात् मम रक्षणं करिष्यसीति। तदा मत्स्यः अब्रवीत् विशालजलप्रवाहे समस्तं प्राणिमण्डलम् अन्ते वक्ष्यामि। तस्मात् त्वाम् अहं रक्षिष्यामि।

**व्याकरणम्-**

- उवाद- वद्-धातोः लिटि प्रथमपुरुषैकवचने।
- निर्वोढा- निर्पूर्वकात् वह्-धातोः लुटि एकवचने वैदिकप्रयोगः।

**स होवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुम्भ्यां माऽग्रे बिभरासि स यदा तामतिव्वर्धा अथ कर्षूं खात्वा तस्यां मा बिभरासि। स यदा तामतिव्वर्धाऽअथ मा समुद्रमभ्यवहरासि तर्हि वा अतिनाष्ट्रो भवितास्मीति।। ३।।**

**व्याख्या** - क्षुल्लकाः क्षुद्रकाः अल्पकाः। नाष्ट्रा इति। गॄ निगरणे(धा० ६.१२९)। निगिरति। बिभरासि। अध्येषणायां लिङर्थे लेट् (३.४.७)। बिभृयाः पुष्णियाः। एवमेव अभ्यवहरासि उपासासै आपद्यासै इति व्याख्येयानि। अतिवर्द्धै अतिरिच्य वर्धितास्मीति प्राप्ते लिङर्थे लेट्(३.४.७) इति यदा योगे लेट्। कर्षूः खातिकाः। अतीतो नाष्ट्रान् नाशयितॄन् इति अतिनाष्ट्रः।। ३।।

**सरलार्थः-** सः (मत्स्यः) उक्तवान् - यावत् वयं क्षुद्राः स्थाष्यामः तावत् अस्माकं महाभयम्। (महान्तः) मत्स्याः अस्मान् खादिष्यन्ति। तस्मात् पूर्वमेव मां कुम्भमध्ये स्थापय। यदा तस्य अतिक्रमणं

करिष्यमि तदा गर्तमध्ये मां रक्षय। यदा तस्यापि अतिक्रमणं करिष्यमि तदा मां समुद्रं प्रति गमय। तेदैव अहं विनाशस्य अतिक्रमणं करिष्यामि।

**व्याकरणम्-**

- उवाच- वच्-धातोः लिटि प्रथमपुरुषैकवचने।
- नाष्ट्राः- नश्-धातोः ष्ट्रन्प्रत्यये बहुवचने।
- अतिवर्द्धै- अतिपूर्वकात् वृध्-धातोः लेटि उत्तमपुरुषैकवचने।
- अभ्यवहरासि- अभिपूर्वकात् अवपूर्वकात् हृधातोः लेटि मध्यमपुरुषैकवचने।

**शश्वद्ध झषऽआस। स हि ज्येष्ठं व्वर्धतेऽथेतिथीं समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति॥ ४॥**

**व्याख्या-** शश्वच्छब्दोत्र सामर्थ्यात् क्षिप्रवचनः। झषः महामत्स्यः क्षिप्रमेव महामत्स्योत्रावर्ततेत्यर्थः। अथ कस्मात् सः शीघ्रमेव महामत्स्यः संवृत्तः। हि यस्मात् स ज्येष्ठं बृहत्तमं वर्धते। सर्वे एव हि जलचरा अतिशयेन वर्धन्ते, स तु मत्स्यत्वादनाष्ट्रत्वाच्च बृहत्तमं वर्धत इति श्रुतिवचनम्। अथेतिथीम् इति मत्स्यवचनम्। अयमपि समुद्रम् अभ्यवहृते। इतिथीम् इत्यभिनयः, तेन संख्येयां समां दर्शितवान्। इयतीनां दशानां द्वादशानां वा पूरणी इतिथी। इदम इशादेशश्छान्दसः, टित्त्वात् ङीप्। इयत्यस्तिथयो यस्यां सा इतिथीति केषुचित् कोषेषु। तेष्वपि इयतिथीं यावतिथीं तावतिथीम् इति प्राप्ते छान्दसो यशब्दवशब्दलोपः। समा संवत्सरः तां समां समायामित्यर्थः। तत् स इति लिङ्गव्यत्ययः। स पूर्वोक्त औघः आगन्ता तत् तदा नावम् उपकल्प्य(मा) माम् उपासासै उपासीथाः। औघे च उत्थिते तां नावम् त्वम् आपद्यासै आरोहेरित्यर्थः॥ ४॥

**सरलार्थः-** स मत्स्यः शीघ्रमेव महान् मत्स्यः सञ्जातः। स मत्स्येषु बृहत्तमः अभवत्। ततः स उक्तवान्- यस्मिन् वत्सरे प्लावनम् आगमिष्यति तदा नौकां निर्मीय प्रतीक्षां करिष्यसि। प्लावने सति नौकायां संवक्षसि। तदा अहं त्वां रक्षिष्यामि।

**व्याकरणम्-**

- उपासासै- उपपूर्वकात् अस्-धातोः लेटि मध्यमपुरुषैकवचने।
- आपद्यासै- आङ्पूर्वकात् पद्-धातोः लेटि मध्यमपुरुषैकवचने।
- भृतिः- भृधातोः क्तिन्प्रत्यये प्रथमैवचने।

**तमेवं भृत्वा समुद्रमभ्यवजहार। स यतिथीं तत्समां परिदिदेश ततिथीं समां नावमुपकल्प्योपासाञ्चक्रे स ऽऔघऽ उत्थिते नावमापेदे तं स मत्स्य**



**उपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव।। ५।।**

**व्याख्या-** यावतीनां पूरणीं यतिथीं परिदिदेश परिदिष्टवान् आख्यातवान् ततिथीं तावतीनां पूरणीं समां नावम् उपकल्प्य मत्स्यम् उपासितवान्। औघे च उत्थिते नावम् अधिरूढः तं च मनुं स मत्स्यः उप समीपे (नि) नीचैः एनमुपकर्ष्यम् इति सम्बन्धः। आपुप्ल वे आगतः। तस्य मत्स्यस्य शृङ्गे भवितव्यतयैव निष्पादिते नावः पाशं (प्रतिमुमोच) प्रतिबद्धवान्। तेन पाशेन सह मत्स्यः एतम् गिरि हमवन्तम्(अतिदुद्राव) अतिजगाम।। ५।।

**सरलार्थः-** तं मत्स्यं तथैव पालयित्वा मनुः तम् आदाय समुद्रं जगाम। स मत्स्यः यस्मिन् वत्सरे नौकानिर्माणाय उक्तवान् तस्मिन् वत्सरे एव मनुः नौकां निर्मितवान्। तस्मिन् प्लावने सति नौकाम् आरूढवान्। स मत्स्यः तस्य समीपे तरन् आगतवान्। किञ्च तस्य शृङ्गेन सह नौकायाः रज्जुबन्धनं चकार। ततः तमादाय उत्तरगिरिं (भाष्यमते हिमालयं) गतः।

**व्याकरणम्-**

- अभ्यवजहार- अभिपूर्वकात् अवपूर्वकात् हृधातोः लिटि प्रथमपुरुषैकवचने।
- परिदिदेश- परिपूर्वकात् दिश्-धातोः लिटि प्रथमपुरुषैकवचने।
- उपकल्प्य- उपपूर्वकात् क्लृप्-धातोः ल्यपि।
- प्रतिमुमोच- प्रतिपूर्वकात् मुच्-धातोः लिटि प्रथमपुरुषैकवचने।

**स होवाचापीपरं वै त्वा व्वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावद्यावदुदकं समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससप्र तदप्येतदुत्तरस्य गिरेर्म्मनोरवसर्पणमित्यौघो हताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे।। ६।।**

**व्याख्या-** स होवाच। मत्स्यवचनम्- अपीपरं वै त्वा पालतवानस्मि त्वाम्। अधुनात्र वृक्षे नावं प्रतिबध्नीष्व। किञ्चापरम्- गिरौ सन्तं त्वा त्वाम् उदकं मा अन्तश्छैत्सीत् तद्देशमध्यं भित्त्वा पृथगकार्षीत्, इदम् अस्माद्देशादित्यर्थः। कथं पुनः तां नावं छनत्ति यावद् अध्वनः उदकं समवायात्(सम्) एकीभावाय अव अधः अयात् गच्छेत् अवतरेदित्यर्थः। तावत्तावत् त्वमपि तदेवोदकम् अनु अवसर्पासि अवतरेः। स मनुः प्राप्ते काले तावत् तावत् एव (अन्तवससर्प) अन्ववसृप्तः। येन च वर्त्मना मनुरवसृप्तः तद् अद्यत्वे अपि एतद् उत्तरस्य गिरेः मनोरवसर्पणम् इति आहुरिति शेषः। अवसृप्तोनेनेत्यवसर्पणम्।। ६।।

**सरलार्थः-** स (मत्स्यः) उक्तवान्- अहं त्वाम् अपारयाम्। (अधुना) नौकायाः वृक्षेण बन्धनं कुरु। पर्वते विद्यमाना (तव) नौका समुद्रजलेन छिन्ना न स्यात्। यदैव नौका जलं प्रति गच्छेत् तदैव त्वं नौकायाः अवतर इति। तदा (मनुः) अवततार। ततः उत्तरपर्वतस्य तत् स्थानम् अवतरणमार्गः

(अवसर्पणम्) इत्यनेन आख्यातम्। तेन प्लावनेन समस्ताः प्राणिनः परिप्लुताः, केवलं मनुः एव तत्र अवशिष्टः आसीत्।

**व्याकरणम्-**

- अपीपरम्- पृ-धातोः लुङि उत्तमपुरुषैकवचने।
- निरुवाह- निर्पूर्वकात् वह्-धातोः लिटि प्रथमपुरुषैकवचने।
- परिशिशिषे- परिपूर्वकात् शिष्-धातोः लिटि प्रथमपुरुषैवचने।
- समवायात्- सम्पूर्वकात् अवपूर्वकात् इधातोः विधिलिङि प्रथमपुरुषैकवचने।



## पाठगतप्रश्नाः

१५. कदा मनोः कृते हस्तादिप्रक्षालनाय जलम् आनीतम्।

१६. मत्स्यः मनोः क्व अपतत्।

१७. आजह्रुः इति रूपं कथं सिद्ध्येत्।

१८. अवनेग्यम् इति रूपं कथं सिद्ध्येत्।

१९. निर्वोढा इति रूपं कथं सिद्ध्येत्।

२०. गृधातुः कस्मिन्नर्थे भवति।

२१. भृतिः इत्यस्य कः अर्थः।

२२. नाष्ट्राः इति रूपं कथं सिद्ध्येत्।

२३. अभ्यवहरासि इति रूपं कथं सिद्ध्येत्।

२४. शश्वद्ध झष... इति मन्त्रांशे शश्वच्छब्दः अत्र कीदृशः।

२५. परिदिदेश इति कस्मिन् लकारे रूपम्।

२६. परिमुमोच इति कस्मिन् लकारे रूपम्।

२७. अपीपरम् इत्यत्र कः धातुः।

२८. केन सह नौकायाः रज्जुबन्धनं चकार।

२९. उपासासै इति रूपं कथं स्यात्।

## २२.५) मनुमत्स्यकथा

मन्त्रब्राह्मणयोर्वेदनामधेयम्। एवं वेदस्य प्रथमभागः देवस्तुतिमूलको मन्त्रभागः। द्वितीयभागो ब्राह्मणम्। प्रत्येकं वेदनां पृथक् पृथक् ब्राह्मणानि प्राप्यन्ते। कृष्णयजुर्वेदस्य ब्राह्मणस्य नाम तैत्तिरीयब्राह्मणम्। शुक्लयजुर्वेदस्य ब्राह्मणस्य नाम शतपथब्राह्मणम् इति। अस्मिन् शतपथब्राह्मणे मनुमत्स्यकथा प्राप्यते।





**कथासारः-** अथ कदाचित् प्रातः हस्तप्रक्षालनाय महर्षेः मनोः कृते तस्य भृत्याः जलम् आनीतवन्तः। तदा हस्तप्रक्षालनसमये कश्चित् क्षुद्रः मत्स्यः मनोः हस्ते पतितः। सः मत्स्यः मनुम् उक्तवान् यत् "इदानीं भवान् मां पालयतु, परम् अहं त्वां पारयिष्यामि" इति। "कस्मात् मां पारयिष्यति" इति मनुना पृष्टे सति सः मत्स्यः अवोचत् यत् "भाविनि काले कश्चन महान् औघः पृथिव्याः सर्वाः इमे प्रजाः देशान्तरं प्रापयिता। ततः औघात् अहं भवन्तं पारयिष्यामि" इति। तदा कथं मत्स्यः भरणीयः इति मनुः पृष्टवान्। उत्तररूपेण मत्स्य उक्तवान् यत् "यावद् वयं मत्स्याः क्षुद्राः तिष्ठामः तावत् प्रतिपदं विपत् भवति। ज्येष्ठा मत्स्या एव प्रायशः कनिष्ठान् मत्स्यान् गिलन्ति। अत आदौ मां एकस्मिन् कुम्भ्यां पोषयतु, परं यदा ततः बृहत्कायः भविष्यामि तदा पुष्करिणीं खनित्वा तत्र मां पालयतु। ततोऽपि यदा बृहत्कायः भविष्यामि तदा समुद्रम् मां नयतु" इति। ततः यथोक्तं कार्यं सम्पादितं मनुना। शीघ्रं सः मत्स्यः एकः महामत्स्यः सञ्जातः। मत्स्यः मनुम् अवोचत् यत् "यथाकालं तदौघः आगन्ता। तस्मात् एकां नावं निर्माय मम प्रतीक्षां करिष्यति। औघे उत्थिते सति भवान् नावम् आरोक्ष्यति, अहं भवन्तं पारयिष्यामि" इति। सर्वं श्रुत्वा मनुः तं मत्स्यं समुद्रम् अनयत्। यथाकालं मनुः नावमेकां निर्माय समुद्रतटे मत्स्यस्य प्रतीक्षां कुर्वन् तस्थौ। औघे उत्थिते मनुः नावम् आरूढवान्। सः मत्स्यः नौकायाः रज्जुं स्वशृङ्गे बध्वा उत्तरदिशि पर्वतम् अतिक्रम्य अगच्छत्। ततः मत्स्यः मनुम् अब्रवीत् यत् "साम्प्रतं भवान् विपदुत्तीर्णः। अत्र उदकसीमाम् अतिक्रम्य कस्मिंश्चित् वृक्षे नावं बध्नातु। यावद् जलम् अपसरति तावद् भवानपि तदनु अस्मात् स्थानात् नीचैः अवतरेत्।" इति। मनुः अपि तद्वत् नीचैः अवततार। तेन औघेन सर्वाः प्रजाः निःशेषेण जलनिमग्नाः गतप्राणाः सञ्जाताः, मनुः तु एकः एव जीवितः अवर्तत। किञ्च तस्मादेव मनोः मनुष्याणाम् उत्पत्तिर्जाता इति मनुष्या मानवा इति कथ्यन्ते इति शम्।

**तात्पर्यम्-** आख्यानसमृद्धं खलु ब्राह्मणसाहित्यम्। तेषु शतपथब्राह्मणान्तर्गतं मनुमत्स्यकथा नाम आख्यानम् अन्यतमम्। अत्र युगान्तरे सृष्टेः ध्वंसः, पुनः प्राणिनां सृष्टेः विवरणं प्राप्यते। यद्यपि बहुत्र पुराणादिषु अस्य औघस्य कथा प्राप्यते, तथापि केनचिदितरप्राणिना औघस्य पूर्वाभासप्रदानं, नावः निर्माणं, पाशेन नावः बन्धनं, प्लावनोत्तरं सृष्टिः इत्यादिविषयाणाम् एकस्मिन्नेव आख्याने समावेशः इति मनुमत्स्यकथामन्तरेण अन्यत्र न दृश्यते। किञ्च अयं मत्स्यः भगवतः विष्णोः मत्स्यावतारः इत्यपि पुराणादिषु प्रसिद्धिः। प्लावनोत्तरं मनुः येन वर्त्मना अवततार तत् वर्त्म अद्यापि मनोरवसर्पणम् इति आख्यायते।

टिप्पणी





## पाठसारः (मनुमत्स्यकथा)

मनुमत्स्यकथायां मनुमत्स्ययोः कथा प्रतिपादिता। तत्र हस्तादिप्रक्षालनसमये एकः मत्स्यः तस्य हस्ते अपतत्। स मत्स्यः महद्भ्यः मत्स्येभ्यः स्वस्य रक्षणाय मनुं प्रार्थितवान्। स मत्स्यः प्रतिदिनं वर्धमानः आसीत्। मनुः तं रक्षितवान्। मत्स्यः अपि महति प्लावने सति मनोः कदाचित् रक्षणाय उक्तवान्। एवं महति प्लावने सति स मत्स्यः आगतः। मनुः अपि नौकामेकां निर्माय पशून् तत्र आदाय मत्स्यशृङ्गे बद्ध्वा उत्तरगिरिं प्रति गतवान् इति संक्षेपः।



## पाठान्तप्रश्नाः

**(पर्जन्यसूक्ते)**

१. पर्जन्यसूक्तस्य सारं संक्षेपेण लिखत।
२. अच्छा वद तवसं.....इत्यादिमन्त्रं व्याख्यात।
३. वि वृक्षान् हन्त्युत.... इत्यादिमन्त्रं व्याख्यात।
४. रथीव कशयाश्वाँ......इत्यादिमन्त्रं व्याख्यात।
५. प्र वाता वान्ति......इत्यादिमन्त्रं व्याख्यात।
६. यस्य व्रते पृथिवी.....इत्यादिमन्त्रं व्याख्यात।
७. अभि क्रन्द स्तनय.....इत्यादिमन्त्रं व्याख्यात।
८. महान्तं कोशमुदचा.......इत्यादिमन्त्रं व्याख्यात।
९. यत्पर्जन्य कनिक्रदत्.......इत्यादिमन्त्रं व्याख्यात।
१०. अवर्षीर्वर्षमुदु..........इत्यादिमन्त्रं व्याख्यात।

**(मनुमत्स्यकथायाम्)**

११. मनुमत्स्यकथायां सारं लिखत।
१२. स होवाच... इति कथांशं व्याख्यात।
१३. शश्वद्ध झषआस... इति कथांशं व्याख्यात।
१४. तमेव भृत्वा... इति कथांशं व्याख्यात।
१५. स होवाचापीपरम्... इति व्याख्यात।





## पाठगतप्रश्नानाम् उत्तराणि

**(पर्जन्यसूक्ते)**

१. ऋग्वेदे।

२. अत्रिः।

३. पर्जन्यः।

४. विपूर्वकात् वस्-धातोः मध्यमपुरुषैकवचने रूपमिदम्।

५. क्रन्द्-धातोः यङ् तुङन्ते प्रथमापुरुषैकवचने रूपमिदम्।

६. वृक्षान् विहन्ति।

७. ईष्धातोः लटि प्रथमपुरुषैकवचने रूपमिदम्।

८. विभाय-भीधातोः लिटि प्रथमपुरुषैकवचने रूपमिदम्।

९. आत्मनेपदिनः रा-धातोः लटि मध्यमपुरुषबहुवचने।

१०. असून् प्राणान् राति ददाति इति असुरः।

११. दीया- दी-धातोः लोटि मध्यमपुरुषैकवचने वैदिकं रूपम्।

१२. महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।
घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः॥८॥

१३. गृहाण।

१४. हंसि- हन्-धातोः लटि मध्यमपुरुषैकवचने।

**(मनुमत्स्यकथायाम्)**

१५. प्रातः।

१६. हस्ते।

१७. आङ्पूर्वकात् हृ-धातोः लिटि प्रथमपुरुषबहुवचने।

१८. अवपूर्वकात् निज्-धातोः ण्यत्प्रत्यये।

१९. निर्पूर्वकात् वह्-धातोः लुटि एकवचने वैदिकप्रयोगः।

२०. निगरणम्।

२१. भरणं पुष्टिः वा।

२२. नश्-धातोः ष्ट्रन्प्रत्यये बहुवचने।

२३. अभिपूर्वकात् अवपूर्वकात् हृ-धातोः लेटि मध्यमपुरुषैकवचने।

२४. सामर्थ्यात् क्षिप्रवचनः।



२५. लिटि।

२६. लिटि।

२७. पृधातुः।

२८. वृक्षेण।

२९. उपपूर्वकात् अस्-धातोः लेटि मध्यमपुरुषैकवचने।

## ॥ इति द्वाविंशः पाठः ॥



# २३

# ॥शिवसङ्कल्पसूक्तं प्रजापतिसूक्तं च॥

## प्रस्तावना

वेदो ज्ञानस्य महापर्वतः। वेदो ज्ञानसागरोऽपि। यथा महतः पर्वतात् नैकाः नद्यः प्रभवन्ति। सरलैः वक्रैश्च अध्वभिः जनकल्याणाय प्रवहन्ति। अन्ते च समुद्रेण मिलन्ति। तथा वेदरूपात् ज्ञानस्य महापर्वतात् नैकानि स्रोतांसि प्रवहन्ति जनकल्याणाय। भारतस्य सर्वाणि ज्ञानस्य स्रोतांसि वेदादेव प्रभवन्ति इति को न खलु जानाति। यथा पर्वताद् आगतं जलं वर्तते, अन्यत्र भूमौ वृष्ट्या पतितं जलमपि मिलितं भवति, स्रोतश्च महद् भवति। तद्वत् वेदात् आगतेषु ज्ञानस्रोतस्सु नैके प्रवाहाः मिलिताः सन्ति। अत एव वेदाद् अपि महान् विस्तरः परिलक्ष्यते वाङ्मयस्य। यदि क्वापि शाखासु परस्परविरोधो भवति तर्हि वेदेन समर्थितं मतमेव प्रामाणिकम् गण्यते। अतः वेदज्ञानं नितराम् आवश्यकम्। अत एव अयं सूक्ताध्ययनं प्रपञ्चः।

**अस्मिन् पाठे शिवसंकल्पसूक्तं प्रजापतिसूक्तं च पाठ्यत्वेन विद्यते।** पूर्वार्धे **शिवसंकल्पसूक्तं** विद्यते, उत्तरार्धे च **प्रजापतिसूकम्** उपन्यस्तमस्ति।

'मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्'। मनसा एव अप्रमेयस्य किञ्च ध्रुवस्य च वस्तुनः दर्शनं कर्तुं शक्यते। मनसि शुद्धे सति सर्वं प्रकाशितं भवति। तस्मात् मनसः शुद्धीकरणाय अस्मिन् सूक्ते बहुवारम् उच्यते- 'तन्मे मनः शिवसङ्कल्पमस्तु' इति। शुक्लयजुर्वेदे चतुर्त्रिंशत्तमे अध्याये इदं शिवसङ्कल्पसूक्तं प्राप्यते। अत्र ऋषिः आदित्ययाज्ञवल्क्यः, त्रिष्टुप् छन्दः, मनश्च देवता। अत्र ऋषिः स्वमनः कल्याणकारिणा सङ्कल्पेन सह संयोगाय कथयति। मनोविज्ञाने मनः एकम् आवश्यकतत्त्वरूपाय कल्प्यते। मनसा एव सर्वाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि स्वविषयस्य ग्रहणे समर्थानि भवन्ति। तस्मात् भारतीयदर्शनेषु मनः उभयेन्द्रियमिति कथ्यते। एवम् अस्मिन् पाठे वयं षट् मन्त्रान् पठिष्यामः। एतान् मन्त्रान् आधारीकृत्य महीधरनामकः भाष्यकारः भाष्यं रचितवान्। तत् महीधरभाष्यमित्युच्यते। तदपि सरलीकृत्य दीयते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- सूक्तस्थानां मन्त्राणां संहितापाठं ज्ञास्यति।



- सूक्ते विद्यमानानां मन्त्राणां पदपाठं ज्ञास्यति।
- सूक्तस्थानां मन्त्राणाम् अन्वयं कर्तुं समर्थो भवेत्।
- सूक्तस्थानां मन्त्राणां व्याख्यानं कर्तुं समर्थो भवेत्।
- सूक्ते विद्यमानानां मन्त्राणां सरलार्थं ज्ञास्यति।
- मन्त्रे स्थितं व्याकरणं ज्ञातुं समर्थो भवेत्।
- सूक्ततात्पर्यं सूक्ततत्त्वं च अवगच्छेत्।
- सूक्तार्थं ज्ञात्वा सूक्तमहिमानम् ज्ञास्यति।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- वैदिकलौककयोः भेदं ज्ञातुं शक्नुयात्।
- केषाञ्चित् वैदिकरूपाणि ज्ञास्यति।

## ॥शिवसङ्कल्पसूक्तम्॥

### २३.१) अधुना मूलपाठं पठाम (शिवसङ्कल्पसूक्तम्)

यज्जाग्रतो दूरमुदैति दैवं

तदु सुप्तस्य तथैवैति॥

दूरङ्गमं ज्योतिषां ज्योतिरेकं

तन्मे मनः शिवसंङ्कल्पमस्तु॥१॥

येन कर्माण्यपसो मनीषिणो

यज्ञे कृण्वन्ति विदथेषु धीराः।

यदपूर्वं यक्षमन्तः प्रजानां

तन्मे मनः शिवसंङ्कल्पमस्तु॥२॥



यत्प्र॒ज्ञान॑मु॒त चेतो॒ धृति॑श्च॒

यज्ज्योति॑र॒न्त॒रमृतं॑ प्र॒जासु॒।

यस्मा॒न्नऽऋ॒ते किञ्च॒न कर्म॑ क्रि॒यते॒

तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु॒॥३॥

येने॒दं भू॒तं भुव॑नं भवि॒ष्य-

त्परि॑गृहीतम॒मृते॑न॒ सर्व॑म्।

येन॑ य॒ज्ञस्ता॒यते॑ स॒प्तहो॑ता॒

तन्मे॒ मनः॑ शि॒वसं॑ङ्कल्पमस्तु॒॥४॥

यस्मि॒न्नृचः॒ साम॒ यजू॑ꣳषि॒ यस्मि॒न्

प्रति॑ष्ठिता रथना॒भावि॑वा॒राः।

यस्मिँ॑श्चि॒त्तꣳ सर्व॒मोतं॑ प्र॒जानां॒

तन्मे॒ मनः॑ शि॒वसं॑ङ्कल्पमस्तु॒॥५॥

सु॒षा॒र॒थिरश्वा॑निव॒ यन्म॑नु॒ष्या॒-

न्नेनी॒यते॒ऽभीशु॑भिर्वा॒जिन॑ऽइव।

हृत्प्रति॑ष्ठं॒ यद॑जि॒रं जवि॑ष्ठं॒

तन्मे॒ मनः॑ शि॒वसं॑ङ्कल्पमस्तु॒॥६॥



## २३.१.१) इदानीं मूलपाठम् अवगच्छाम।

यज्जाग्रतो दूरमुदैति दैवं

तदु सुप्तस्य तथैवैति।।

दूरङ्गमं ज्योतिषां ज्योतिरेकं

तन्मे मनः शिवसंङ्कल्पमस्तु॥१॥

**पदपाठः- यत्। जाग्रतः। दूरम्। उदैतीत्युत्-ऐति। दैवम्। तत्। उँ इत्युँ। सुप्तस्य। तथा। एव। एति॥ दूरङ्गममिति दूरम्-गमम्। ज्योतिषाम्। ज्योतिः। एकम्। तत्। मे। मनः। शिवसङ्कल्पमिति शिव-सङ्कल्पम्। अस्तु॥१॥**

**अन्वयः-** जाग्रतः यत् दैवं (मनः) दूरम् उत् एति, सुप्तस्य तत् उ तथा एव एति। दूरङ्गमं ज्योतिषाम् एकःज्योतिः मे तत् मनः शिवसङ्कल्पमस्तु।

**व्याख्या-** ऋषिर्वदति। तन्मे मनः शिवसङ्कल्पमस्तु शिवः कल्याणकारी धर्मविषयः सङ्कल्पो यस्य तत् तादृशं भवति। मन्मनसि सदा धर्म एव भवतु न कदाचित् पापमित्यर्थः। तत्किम्। यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यदैवमात्मग्राहकमित्यर्थः। मनसैव द्रष्टव्यमेतदप्रमेयं ध्रुवम् इति श्रुतेः। तत् उ। यदः स्थाने तच्छब्दः उकारश्चार्थः। यच्च मनः सुप्तस्य पुंसः तथैव इति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्त्यवस्थायां पुनरागच्छति। यच्च दूरङ्गमं दूरात् गच्छतीति दूरङ्गमं खश्प्रत्ययः। अतीतानागत-वर्तमान-विप्रकृष्ट-व्यवहित-पदार्थानां ग्राहकमित्यर्थः। यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणाम् एकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः। प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते। आत्मा मनसा संयुज्यते मनः इन्द्रियेण इन्द्रियम् अर्थेनेति न्यायोक्तेर्मनः सम्बन्धम् अन्तरा तेषाम् अप्रवृत्तेः। तादृशं मे मनः शान्तसङ्कल्पमस्तु।

**सरलार्थः-** यदा कश्चित् पुरुषः जागर्ति तदा तस्य दिव्यं मनः येन प्रकारेण दूरं गच्छति यदा स शेते तदा तदेव मनः तेनैव प्रकारेण आगच्छति। एवं यत् दूरगामि किञ्च ज्योतिषाम् अद्वितीयं मम मनः तत् शुभसङ्कल्पं भवतु।

**व्याकरणम् -**

- उदैति- उत्पूर्वकेण्-धातोः लटि प्रथमपुरुषैकवचने उदैति इति रूपम्।
- दैवम्- देवशब्दात् अण्प्रत्यये प्रथमैकवचने दैवम् इति रूपम्।
- दूरङ्गमम्- दूरं गच्छतीति विग्रहे दूरपूर्वकगम्-धातोः खश्प्रत्यये दूरङ्गमम् इति रूपम्।



येन कर्माण्यपसो मनीषिणो

यज्ञे कृण्वन्ति विदथेषु धीराः।

यदपूर्वं यक्षमन्तः प्रजानां

तन्मे मनः शिवसङ्कल्पमस्तु॥२॥

**पदपाठः- येन। कर्माणि। अपसः। मनीषिणः। यज्ञे। कृण्वन्ति। विदथेषु। धीराः॥**

**यत्। अपूर्वम्। यक्षम्। अन्तरित्यन्तः। प्रजानामिति प्र-जानाम्। तत्। मे। मनः।**

**शिवसङ्कल्पमिति शिव-सङ्कल्पम्। अस्तु॥२॥**

**अन्वयः-** येन अपसः मनीषिणः धीराः यज्ञे विदथेषु कर्माणि कृण्वन्ति यत् प्रजानाम् अन्तः अपूर्वं यक्षं, तत् मे मनः शिवसङ्कल्पम् अस्तु।

**व्याख्या -** मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति 'कृ करणे' स्वादिः। मनः स्वास्थ्यं विना कर्माप्रवृत्तेः। तेषु सत्सु। विदथेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु। विदधातोः औणादिकः थप्रत्ययः। यज्ञसम्बन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः। कीदृशाः मनीषिणः। अपसः अप इति कर्मनाम (निघ० २.१.१)। अपो विद्यते येषां ते अपस्वनः कर्मवन्तः 'अस्मायामेधास्रजो विनिः'(पा०सू० ५.२.१२१) इति विन्प्रत्ययः 'विन्मतोर्लुक्' (पा०सू० ५.३.६५)इतीष्ठाभावेपि छान्दसो विनो लुक्। सदा कर्मनिष्ठा इत्यर्थः। तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मण्यण्(पा०सू० ३.२.१)। यच्च मनः अपूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः। यद्वा अपूर्वम् अनपरम् अबाह्यम् इत्युक्तेः अपूर्वम् आत्मरूपमित्यर्थः। यच्च यक्षं यष्टुं शक्तं यज्ञम्। यजतेः औणादिकः सन्प्रत्ययः। यच्च प्रजायन्ते इति प्रजाः तासां प्राणिमात्राम् अन्तः शरीरमध्ये आस्ते इतरेन्द्रियाणि बहिःष्ठानि मनः तु अन्तरिन्द्रियमित्यर्थः। तत् तादृशं मे मनः शिवसङ्कल्पम् अस्त्विति।

**सरलार्थः-** कर्मनिष्ठाः मेधाविनः पुरुषाः येन मनसा यज्ञे तथा यज्ञस्य विधिविधानादिषु कार्यं कुर्वन्ति। यच्च प्राणिनाम् अन्तर्भागे स्थित्वा पूज्यं भवति। तदेव मम मनः शुभसङ्कल्पं भवतु।

**व्याकरणम् -**

- कर्माणि- कर्मशब्दस्य द्वितीयाबहुवचनम्।
- कृण्वन्ति- कृ-धातोः लटि प्रथमपुरुषैकवचने रूपं, कुर्वन्ति इत्यस्य वैदिकप्रयोगः।
- अपसः- अपस्+विन्।
- यज्ञम्- यज्-धातोःघञ्प्रत्यये यज्ञम् इति रूपम्।



यत्प्रज्ञानमुत चेतो धृतिश्च

यज्ज्योतिरन्तरमृतं प्रजासु।

यस्मान्नऽऋते किञ्चन कर्म क्रियते

तन्मे मनः शिवसंकल्पमस्तु॥ ३॥

**पदपाठः- यत्। प्रज्ञानमिति प्र- ज्ञानम्। उत। चेतः। धृतिः। च। यत्। ज्योतिः। अन्तः। अमृतम्। प्रजास्विति प्र-जासु॥ यस्मात्। न। ऋते। किम्। चन। कर्म। क्रियते। तत्। मे। मनः। शिवसङ्कल्पमिति शिव- सङ्कल्पम्। अस्तु॥३॥**

**अन्वयः-** यत् प्रज्ञानम् उत चेतः धृतिः च यत् प्रजासु अन्तः अमृतं ज्योतिः। यस्मात् ऋते किञ्चन कर्म न क्रियते, तत् मे मनः शिवसङ्कल्पम् अस्तु।

**व्याख्या -** यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकं प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम्। 'करणाधिकरणयोश्च' (पा०सू० ३.३.११७) इति करणे ल्युट्प्रत्ययः। उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः। 'चिती संज्ञाने' अस्मात् ण्यन्ताद् असुन्प्रत्ययः। सामान्यविशेषज्ञानजनकमित्यर्थः। यच्च मनो धृतिः धैर्यरूपम्। मनसि एव धैर्योत्पत्तेः मनसि धैर्यम् उपचर्यते कार्यकारणयोः अभेदात्। यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम्। उक्तमपि पुनरुच्यते आदरार्थम्। 'अभ्यासे भूयांसमर्थं मन्यन्ते'(निरु० १.४२) इति यास्कोक्तेः। यच्चामृतम् अमरणधर्मि आत्मरूपत्वात्। यस्मात् मनसः ऋते यन्मनो विना किञ्चन किमपि कर्म न क्रियते जनैः। सर्वकर्मसु प्राणिनां मनः पूर्वप्रवृत्तेः मनःस्वास्थ्यं विना कर्माभावादित्यर्थः। अन्यारादितरर्ते (पा०सू० २.३.२९) इत्यादिना यस्मादिति ऋतेयोगे पञ्चमी। तन्मे मन इति व्याख्यातम्।

**सरलार्थः-** यत् सामान्यविशेषयोः ज्ञानयोः जनकम् अस्ति। यत् धैर्यस्वरूपं विद्यते। प्राणिनाम् अन्तर्भागे विद्यमानं सर्वेन्द्रियाणां प्रकाशकम् अस्ति। यच्च अमरणधर्मि। येन विना किमपि कार्यं कर्तुं न शक्यते। एवं यत् मम मनः तत् शुभसङ्कल्पं भवतु।

**व्याकरणम्-**

- प्रज्ञानम्-प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम्। प्रपूर्वकात् ज्ञाधातोः ल्युट्प्रत्यये(अन्) प्रज्ञानम् इति रूपम्।
- चेतः-चिद्-धातोः णिचि असुन्प्रत्यये चेतः इति रूपम्।
- धृतिः-धृ-धातोःक्तिन्प्रत्यये धृतिः इति रूपम्।



- क्रियते-कृ-धातोः कर्मणि लटि प्रथमपुरुषैकवचने क्रियते इति रूपम्।



## पाठगतप्रश्नाः

१. शिवसङ्कल्पसूक्तस्य कः ऋषिः, किं छन्दः, का च देवता।

२. शिवसङ्कल्पम् इत्यत्र शिवशब्दस्य कः अर्थः।

३. दूरङ्गमम् इत्यत्र कः प्रत्ययः।

४. आत्मा केन संयुज्यते।

५. कृण्वन्ति इत्यस्य लौकिकं रूपं किम्।

६. अपसः इत्यत्र इष्टाभावेपि कथं विनः लुक्।

७. प्रज्ञानम् इत्यस्य कः अर्थः।

८. धुतिः इत्यस्य कः अर्थः।

९. यस्मान्न ऋते इति मन्त्रांशे केन सूत्रेण पञ्चमी।

१०. प्रज्ञानम् इत्यत्र ल्युट् कस्मिन् अर्थे।

### २३.१.२) इदानीं मूलपाठम् अवगच्छाम

येनेदं भूतं भुवनं भविष्य-

त्परिगृहीतममृतेन सर्वम्।

येन यज्ञस्तायते सप्तहोता

तन्मे मनः शिवसंङ्कल्पमस्तु॥४॥

**पदपाठः- येन। इदम्। भूतम्। भुवनम्। भविष्यत्। परिगृहीतमिति परिगृहीतम्। अमृतेन। सर्वम्॥ येन। यज्ञः। तायते। सप्तहोतेति सप्त-होता। तत्। मे। मनः। शिवसङ्कल्पमिति शिव- सङ्कल्पम्। अस्तु॥४॥**

**अन्वयः** - येन अमृतेन(मनसा) इदं भूतं भूवनं भविष्यत् सर्वं परिगृहीतम्। येन सप्तहोता यज्ञः तायते तत् मे मनः शिवसङ्कल्पम् अस्तु।



**व्याख्या -** येन मनसा इदं सर्वं परिगृहीतं परितः सर्वतो ज्ञातम्। इदं किंभूतम्। भूतकालसम्बन्धि वस्तु। भुवनं भवतीति भुवनम्। भवतेः क्युप्रत्ययः वर्तमानकालसंबन्धि। भविष्यत् 'लृटः सद्वा' (पा०सू० ३.३.१४) इति शतृप्रत्ययः 'तौ सत्' (पा०सू० ३.२.१२७) इत्युक्तेः त्रिकालसंबद्धवस्तुषु मनः प्रवर्तत इत्यर्थः। श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति। कीदृशेन येन। अमृतेन शाश्वतेन। मुक्तिपर्यन्तं श्रोत्रादीनि नश्यन्ति मनः तु अनश्वरम् इत्यर्थः। येन च मनसा यज्ञो अग्निष्टोमादिः तायते विस्तार्यते। 'तनोतेर्यकि'(पा०सू० ६.४.४४) इत्याकारः। कीदृशो यज्ञः। सप्तहोता सप्तहोतारो देवानाम् आह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता। अग्निष्टोमे सप्तहोतारो भवन्ति। तन्मे मन इति व्याख्यातम्।

**सरलार्थः-** येन अमृतधर्मिणा संसारस्य भूतकालीनाः वर्तमानकालीनाः भविष्यत्कालीनाः सर्वेपि पदार्थाः ज्ञायन्ते। येन सप्तहोतृविशिष्टः अग्निष्टोमादियज्ञः सम्पाद्यते। तत् मम मनः शुभसङ्कल्पं भवतु।

**व्याकरणम्-**

- भुवनम्-भूधातोः क्युप्रत्यये भुवनम् इति रूपम्।
- तायते-तन्-धातोः कर्मणि लटि प्रथमपुरुषैकवचने।
- भविष्यत्-भूधातुः लृटि शतृप्रत्यये भविष्यत् इति रूपम्।
- सप्तहोता-सप्त होतारः यस्मिन् स सप्तहोता। ते च होता, पोता, मैत्रावरुणः, ग्राववरुणः, ब्राह्मणाच्छंदसी, आच्छावाक् एवम् अग्नीदः।

यस्मि॒न्नृच॒ꣳ साम॒यजू॑ꣳषि॒ यस्मि॒न्

प्रति॑ष्ठिता रथना॒भावि॑वा॒राꣳ।

यस्मिँ॑श्चि॒त्तꣳ सर्व॒मोत॑ं प्र॒जाना॒ं

तन्मे॒ मन॑ः शि॒वसं॑ङ्कल्पमस्तु॒॥५॥

**पदपाठः- यस्मि॑न्। ऋच॑ः। साम॑। यजू॑ंषि। यस्मि॑न्। प्रति॑ष्ठिता। प्रति॑स्थि॒तेति॒ प्रति॑-स्थिता। र॒थ॒ना॒भावि॒वेति-रथना॒भौ। इ॒व। अ॒राः॥ यस्मि॑न्। चि॒त्तम्। सर्व॑म्। ओ॒तमित्या-उ॑तम्। प्र॒जाना॒मिति॑ प्र॒-जाना॑म्। तत्। मे॒। मन॑ः। शि॒वसं॑ङ्कल्प॒मिति॑ शि॒व-सं॑ङ्कल्पम्। अ॒स्तु॥५॥**

**अन्वयः-** यस्मिन् ऋचः यस्मिन् साम यजूंषि रथनाभौ अराः इव प्रतिष्ठिताः यस्मिन् प्रजानां सर्वं चित्तम् ओतं तत् मे मनः शिवसङ्कल्पम् अस्तु।



**व्याख्या-** यस्मिन् मनसि ऋचः प्रतिष्ठिताः। यस्मिन् साम सामानि प्रतिष्ठितानि। यस्मिन् यजूंषि प्रतिष्ठितानि। मनसः स्वास्थ्ये एव वेदत्रयीस्फूर्तेः मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् 'अन्नमयं हि सोम्य मनः' इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता। तत्र दृष्टान्तः। रथनाभौ अराः इव। यथा अराः रथचक्रनाभौ मध्ये प्रतिष्ठताः तद्वत् शब्दजालं मनसि। किञ्च प्रजानां सर्वं चित्तं ज्ञानं सर्वपदार्थविषयिज्ञानं यस्मिन् मनसि ओतं निक्षिप्तं तन्तुसन्ततिः पटे इव सर्वं ज्ञानं मनसि निहितम्। मनः स्वास्थ्य एव ज्ञानोत्पत्तिः मनोवैयग्र्ये च ज्ञानाभावः। तन्मे मम मनः शिवसङ्कल्पं शान्तव्यापारमस्तु।

**सरलार्थः-** यस्मिन् ऋचः, सामानि, यजूंषि च चक्रनाभौ अराः इव विद्यन्ते। अपि च यस्मिन् प्राणिनां सर्वपदार्थविषयकज्ञानं वर्तते। तत् मम मनः शुभसङ्कल्पं भवतु।

**व्याकरणम् -**

- प्रतिष्ठिताः-प्रतिपूर्वकात् स्थाधातोः क्तप्रत्यये प्रथमाबहुवचने प्रतिष्ठिताः इति रूपम्।
- ओतम्- आपूर्वकात् तन्तुसन्तानात् वेञ्-धातोः क्तप्रत्यये ओतम् इति रूपम्।

सुषारथिरश्वानिव यन्मनुष्या-

न्नेनीयतेऽभीशुभिर्वाजिनऽइव।

हृत्प्रतिष्ठं यदजिरं जविष्ठं

तन्मे मनः शिवसङ्कल्पमस्तु॥६॥

**पदपाठः- सुषारथिः। सुसारथिरिति सु-सारथिः। अश्वानिवेत्यश्वान्- इव। यत्।**

**मनुष्यान्। नेनीयते। अभीशुभिरित्यभीशु-भिः। वाजिनऽ इवेति-वाजिनः-इव।**

**हृत्प्रतिस्थमिति हृत्-प्रतिस्थम्। यत्। अजिरम्। जविष्ठम्। तत्। मे। मनः।**

**शिवसङ्कल्पमिति शिव-सङ्कल्पम्। अस्तु॥६॥**

**अन्वयः-** यत्(मनः) मनुष्यान् सुषारथिः अश्वन् इव नेनीयते अभीषुभिः वाजिन इव(मनुष्यान् कर्मषु प्रेरयति) यत् हृत्प्रतिष्ठम् अजिरं जविष्ठं तत् मे मनः शिवसङ्कल्पम् अस्तु।

**व्याख्या-** यत् मनो मनुष्यान् नरान् नेनीयते अत्यर्थम् इतस्ततो नयति। नयतेः क्रियासमभिहारे यङ्। मनः प्रेरिता एव प्राणिनः प्रवर्तन्ते। मनुष्यग्रहणं प्राणिमात्रोपलक्षकम्। तत्र दृष्टान्तः। अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनः अश्वान् नेनीयत इत्यनुषङ्गः। रश्मिभिः नियच्छति इत्यर्थः। उपमाद्वयम्। प्रथमायां नयनं द्वितीयायां नियमनम्। तथा मनः प्रवर्तयति नियच्छति च नरान् इत्यर्थः।

यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिः यस्य तत् हृदि एव मन उपलभ्यते। यच्च मनः अजिरं जरारहितं बाल्ययौवनस्थविरेषु मनसः तदवस्थत्वात्। यच्च जविष्ठम् अतिजववद् वेगवत् जविष्ठं 'न वै वातात् किञ्चनाशीयोस्ति न मनसः किञ्चनाशीयोस्ति' इति श्रुतेः। तत् मे मनः शिवसङ्कल्पम् अस्तु।

**सरलार्थः-** यथा कश्चत् सुसारथिः घोटकं सम्यक् परिचालयति। स यथा इच्छति तथैव नेतुं शक्नोति। एवमेव मनः अपि प्राणिनां शरीरं परिचालयति। यच्च हृदयस्थं जरारहितम् अतिशयेन वेगवत् तत् मम मनः शुभसङ्कल्पं भवतु।

**व्याकरणम्-**

- नेनीयते- नी-धातोः यङि लटि प्रथमपुरुषैकवचने नेनीयते इति रूपम्।
- अभीषुभिः- अभिपूर्वकेष्-धातोः उप्रत्यये तृतीयाबहुवचने अभीषुभिः इति रूपम्।
- वाजिनः- वज्-धातोः णिनिप्रत्यये द्वितीयाबहुवचने वाजिनः इति रूपम्।
- जविष्ठम्- जुधातोः इष्ठन्प्रत्यये जविष्ठम् इति रूपम्।
- प्रतिष्ठम्- प्रपूर्वकस्थाधातोः कप्रत्यये प्रतिष्ठम् इति रूपम्।



## पाठगतप्रश्नाः

११. येनेदं भूतं भूवनम् इति मन्त्रांशे येन इत्यस्य किं तात्पर्यम्।
१२. के सप्तहोतारः।
१३. तायते इत्यस्य कः अर्थः।
१४. कथं मनसि वेदाः प्रतिष्ठताः।
१५. ओतम् इति रूपं कथं सिद्ध्येत्।
१६. भुवनम् इत्यत्र कः प्रत्ययः।
१७. अजिरम् इत्यस्य कः अर्थः।
१८. जविष्ठम् इत्यस्य कः अर्थः।
१९. अभीशुभिः इत्यस्य कः अर्थः।
२०. नेनीयते इति रूपं कथं सिद्ध्येत्।

## २३.२) शिवसङ्कल्पसूक्तस्य सारः

षड्-ऋचात्मकस्य सूक्तस्यास्य ऋषिः याज्ञवल्क्यः, मनो देवता, त्रिष्टुप् छन्दः। सूक्तेऽस्मिन् ऋषिः वदति यत् यन्मनो जाग्रतः पुरुषस्य दूरं गच्छति, यच्च मनः सुप्तस्य पुंसः तथैव समीपम् एति अर्थात् यथा गतं तथैव पुनरागच्छति, यच्च मनः दूराद् गच्छति, यन्मनः आत्मसाक्षात्कारे साधनं, यच्च मनः प्रकाशकानां श्रोत्रादीन्द्रियाणाम् एकम् एव ज्योतिः प्रवर्तकं, सर्वशरीरस्य चालकं तत् मम मनः



शुभसङ्कल्पयुक्तं भवतु। अर्थात् मम मनसि सदा धर्मः एव भवतु न कदापि पापम्। कर्मवन्तः धीमन्तः मेधाविनः येन मनसा कर्माणि कुर्वन्ति, येन धीमन्तः यथाविधि यज्ञसम्पादनं कुर्वन्ति, यच्च अपूर्वं, सर्वेभ्यः अपि इन्द्रियेभ्यः पूर्वं सृष्टं, सर्वेषु प्राणिषु विद्यमानं पूज्यं च तत् मम मनः शुभसङ्कल्पयुक्तं भवतु। यन्मनः प्रज्ञानं विशेषेण ज्ञानजनकम्, अपि च यन्मनः चेतः ज्ञापकः सामान्यज्ञानजनकम् इत्यर्थः, यन्मनः धृतिः धैर्यस्वरूपं, यन्मनः अमरणधर्मि, यन्मनः प्रजासु अन्तर्वर्तमानं सत् सर्वेन्द्रियाणां प्रकाशकम्, येन विना न किञ्चन कर्म सम्पादयितुं शक्यते तत् मम मनः शुभसङ्कल्पयुक्तं भवतु। येन मनसा इदं सर्वं सर्वतः ज्ञातं, येन च मनसा भूतकालसम्बन्धि वस्तु, वर्तमानकालसम्बन्धि वस्तु, भविष्यत्कालसम्बन्धि वस्तु च परिगृह्यन्ते, येन मनसा होतृमैत्रावरुणादिसप्तहोतृयुक्तः अग्निष्टोमयज्ञः विस्तार्यते तत् मम मनः शुभसङ्कल्पयुक्तं भवतु। यथा रथनाभौ अराः प्रतिष्ठिताः भवन्ति तथा मनसि एव सर्वाः ऋचः प्रतिष्ठिताः। सामानि प्रतिष्ठितानि। यजूंसि च प्रतिष्ठितानि। पटे यथा ओतप्रोतरूपेण तन्तवः विद्यन्ते तथा यस्मिन् मनसि सर्वपदार्थविषयकं ज्ञानं निहितमस्ति तादृशं मम मनः शुभसङ्कल्पयुक्तं भवतु। यथा सुसारथिः स्वरथस्य वेगयुक्तान् अश्वान् यतस्ततः नेनीयते किञ्च यथा सुसारथिः अभीषुभिः अश्वान् नियन्त्रयति च तथैव यन्मनः मनुष्यान् सर्वकर्मणि प्रवर्तयति नियच्छति च, यच्च मनः हृत्प्रतिष्ठं हृद्देशवासि इत्यर्थः, यच्च अजिरं जरारहितं, यच्च जविष्ठं बालकेषु युवकेषु वृद्धेषु च अतिवागवत् तत् मम मनः शुभसङ्कल्पयुक्तं भवतु इति शम्।

## २३.३) मनसः स्वरूपम्

शुक्लयजुर्वेदीय-शिवसङ्कल्पसूक्ते मनसः स्वरूपविषये प्राप्यते। मनः जाग्रतः पुरुषात् दूरं गच्छति। चक्षुराद्यपेक्षया दूरगामि इति तात्पर्यम्। तथैव सुषुप्त्यवस्थायां सुप्तस्य निकटम् आगच्छति। परमात्मनः ज्ञानं मनसा एव सम्भवति। "मनसैवेदमाप्तव्यम्" इति श्रुतिरत्र प्रमाणम्। यद् अप्रमेयं, निश्चलम्, आत्मतत्त्वं तद् मनसा एव द्रष्टव्यम्। "मनसैवानुद्रष्टव्यम्" इति श्रुतिः। मनो हि दूरङ्गमम्। अतिदूरं गच्छति इत्यर्थः। यद्वा अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकम् इत्यर्थः। मनो हि ज्योतिषां विषयप्रकाशकानां श्रोत्रादीन्द्रियाणां, ज्योतिः प्रकाशकं प्रवर्तकम् इत्यर्थः। श्रोत्रादीन्द्रियाः स्वस्वविषयान् शब्दादीन् गृह्णन्ति। तत्र विषयज्ञाने मनः कारणम्। आत्ममनःसंयोगं विना किमपि ज्ञानं श्रोत्रादीन्द्रियैः न सम्भवति। अतः मनः विना श्रोत्रादीन्द्रियैः सत्त्वेऽपि शब्दादिज्ञानं न सम्भवति। मनसः स्वास्थ्यं विना कर्माप्रवृत्तेः यज्ञे हविःप्रदानादि कर्म कर्तुं न शक्यते। अतः कर्मवन्तः धीमन्तः मेधाविनः मनसा यज्ञादि कर्म कुर्वन्ति। किञ्च इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः मनः अपूर्वम्। मनः प्रज्ञानं, विशेषेण ज्ञानजनकम् इत्यर्थः। किञ्च चेतः। चेतयति सम्यग् ज्ञापयति इति चेतः। तेन मनः सामान्यविशेषज्ञानजनकम् इति सिद्ध्यति। किञ्च मनः धैर्यस्वरूपं, मरणरहितं, सर्वेषां प्राणिनाम् अन्तर्विद्यमानं, सर्वेन्द्रियाणां प्रकाशकम्। मनसः ऋते किमपि कर्म न क्रियते। त्रिकालसम्बन्धिवस्तुषु मनः प्रवर्तते। मनसा भूतं वर्तमानं भविष्यत् च परिगृह्यन्ते। मनसा होतृमैत्रावरुणादिसप्तहोतृयुक्तः अग्निष्टोमयज्ञः विस्तार्यते। रथनाभौ यथा अराः प्रतिष्ठिताः भवन्ति तथा मनसि एव निखिलवेदराशिः प्रतिष्ठितः। ऋग्वेदः, सामवेदः, यजुर्वेदः इति त्रयी एव मनसि प्रतिष्ठिता। किञ्च ज्ञानस्य आधारोऽपि मनः। तथाहि पटे यथा



तन्तवः ओतप्रोतरूपेण वर्तन्ते तथैव प्रजानां सर्वं ज्ञानं मनसि तिष्ठति। सुसारथिः यथा अश्वान् प्रग्रहैः इतस्ततः नेनीयते नियन्त्रयति च तथैव मनः अपि मनुष्यान् इतस्ततः नेनीयते नियन्त्रयति च। जगत्यस्मिन् विद्यमानेषु वेगवत्सु सर्वेषु वस्तुषु अधिकवेगवत् भवति मनः। बाल्ययौवनस्थविरेषु अपि मनः अतिजववत्। तदन्यत्रापि आम्नातं- "न वै वातात्किञ्चिनाशीयोस्ति न मनसः किञ्चनाशीयोस्ति" इति। एवम्भूतस्य मनसः निवासस्थानं भवति प्राणिनां हृत्प्रदेशः इति शम्।

##  शिवसङ्कल्पसूक्तांशस्य पाठसारः

अस्मिन् शिवसङ्कल्पसूक्ते मनः विविधप्रकारेण व्याख्यातम्। तत् च शिवसङ्कल्पं भवतु इति प्रार्थनमपि कृतम्। तत्र आदिमे मन्त्रे उक्तं यत् यत् दूरगामि किञ्च ज्योतिषाम् अद्वितीयं मनः तत् शुभसङ्कल्पं भवतु। ततः द्वितीये मन्त्रे उक्तं यत् कर्मनिष्ठाः मेधाविनः येन यज्ञे यज्ञस्य विधिविधानेषु च कार्यं कुर्वन्ति तत् शुभसङ्कल्पं भवतु। एवं तृतीये मन्त्रे यत् सर्वेन्द्रियाणां प्रकाशकम् अमरणधर्मि धैर्यस्वरूपं तत् शुभसङ्कल्पं भवतु इति उक्तम्। ततः चतुर्थे मन्त्रे उक्तं यत् येन भूतभविष्यदतीतानां पदार्थानां ज्ञानं भवति किञ्च सप्तहोतृविशिष्टः यज्ञः सम्पाद्यते। तत् शुभसङ्कल्पं भवतु। एवं पञ्चमे मन्त्रे उक्तं यत् यस्मिन् ऋग्वेदाः सामवेदाः यजुर्वेदाः अर्थववेदाः सन्ति। एवं यत् मनः तत् शुभसङ्कल्पं भवतु। षष्ठे मन्त्रे मनः शरीराणां परिचालकत्वेन प्रतिपादितम्। एवं मनः विविधप्रकारेण प्रदर्शितम्। किञ्च तत् शुभसङ्कल्पमपि भवतु इति प्रार्थनमपि।



## प्रजापतिसूक्तम्

### प्रस्तावना

वेदाः चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति। यजुर्वेदश्च शुक्लकृष्णभेदेन द्विविधः। तयोः शुक्लयजुर्वेदस्य माध्यन्दिनसंहितायां द्वात्रिंशे अध्याये सर्वमेधस्य मन्त्राः लिखिताः। द्वात्रिंशस्य अध्यायस्य प्रारम्भे एव हिरण्यगर्भस्य विचारः वर्तते। तेन सहैव प्रजापतेः विवेचनमपि अस्ति। स एव अग्निः, स एव आदित्यः, स एव वायुः, स एव चन्द्रमाः, स एव तेजः, स एव प्रार्थना, स एव जलम्। इत्येवं प्रकारेण स प्रजापतिः वर्णितः। शुक्लयजुर्वेदीयं सूक्तमिदम् द्वात्रिंशे अध्याये पठितम्।

### २३.४) अधुना मूलपाठं पठाम (प्रजापतिसूक्तम्)

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।**
**तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥ १॥**

**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।**
**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परि जग्रभत्॥२॥**

**न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।**
**हिरण्यगर्भ इत्येष मा मा हिंसीदित्येषा यस्मान्न जात इत्येषः॥३॥**

**एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः।**
**स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः॥४॥**

**यस्माज्जातं न पुरा किं च नैव य आबभूव भुवनानि विश्वा।**
**प्रजापतिः प्रजया संरराण स्त्रीणिज्योतींषि सचते स षोडशी॥५॥**

## २३.४.१) इदानीं मूलपाठम् अवगच्छाम (प्रजापतिसूक्तम्)

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।**
**तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥ १॥**

**पदपाठः -तत्। एव। अग्निः। तत्। आदित्यः॥ तत्। वायुः। तत्। ओंऽइत्यूँ। चन्द्रमाः।**
**तत्। एव। शुक्रम्। तत्। ब्रह्म। ताः। आपः। सः। प्रजापतिरिति प्रजा। पतिः॥१॥**

**अन्वयः** - तत् एव अग्निः, तत् आदित्यः, तत् वायुः, तत् उ चन्द्रमाः, तत् एव शुक्रम्, तत् ब्रह्म, ताः आपः, सः प्रजापतिः (वर्तते)॥१॥

**व्याख्या-** पुरुषमन्त्रा उक्ताः। अथ सर्वमेधमन्त्रा उच्यन्ते प्रवायुमच्छेत्यस्मात्प्राक् (३३/५५)। स्वयंभुब्रह्मद्रष्टा आत्मदेवत्याः सप्तमेहनि आप्तोर्यामसंज्ञिके सर्वहोमे विनियुक्ताः 'आप्तोर्यामः सप्तममहर्भवति' इत्युपक्रम्य 'सर्वं जुहोति सर्वस्यास्यै सर्वस्यावरुध्द्यै'(१३/७/१/९) इति श्रुतेः। द्वे अनुष्टुभौ। विज्ञानात्मा परेणात्मना विशिष्टोग्न्यादिष्वोतप्रोतत्वेनोपास्योभिधीयते। अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तदेव वायुस्तदेव चन्द्रमास्तत् तदेव। उ एवार्थे। शुक्रं शुक्लं तत् प्रसिद्धम्। ब्रह्म त्रयीलक्षणं तत् ब्रह्मैव। ताः प्रसिद्धाः आपः जलानि स प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म।

**सरलार्थः-** स प्रजापतिः एव अग्निः, स एव आदित्यः, स एव वायुः, स एव निश्चतेन चन्द्रमाः अस्ति, स एव तेजः अस्ति, स एव ब्रह्म, किञ्च यत् जलं तदपि प्रजापतिः।

**व्याकरणम्-**

- आपः- अप् इति प्रातिपदिकस्य प्रथमान्तस्य बहुवचनान्तं रूपम्।

**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।**
**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परि जग्रभत्॥२॥**

**पदपाठः - सर्वे। निमेषाऽइति नि। मेषाः। जज्ञिरे। विद्युतऽइति वि। द्युतः। पुरुषात्।**
**अधि॥ न एनम्। ऊर्ध्वम्। न तिर्यञ्चम्। न। मध्ये। परि। जग्रभत्॥२॥**

**अन्वयः** - सर्वे निमेषाः विद्युतः पुरुषात् अधि जज्ञिरे। एनम् न ऊर्ध्वं न तिर्यञ्चं न मध्ये परि अजग्रत्॥२॥

**व्याख्या-** सर्वे निमेषाः त्रुटिकाष्ठाघट्यादयः कालविशेषाः पुरुषात् अपि पुरुषसकाशाज्जज्ञिरे। कीदृशात्पुरुषात्। विद्युतः विशेषेण द्योतते विद्युत् तस्मात्। किंच कश्चिदपि एनं पुरुषमूर्ध्वमुपरिभागे न



परिजग्रभत्परिगृह्णाति। एनं तिर्यञ्च चतुर्दिक्षु न परि० मध्ये मध्यदेशेपि न गृह्णाति। न ह्यसौ प्रत्यक्षादीनां विषय इत्यर्थः। स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते इति श्रुतेः। जग्रभत्। ग्रहेः शतरि जुहोत्यादित्वेन रूपम्।

**सरलार्थः-**_सम्पूर्णः कालपरिणामः प्रकाशमानपुरुषात् उत्पन्नः। एनं परमात्मानम् ऊर्ध्वभागात्, तिर्यग्भागात्, मध्यभागात् बोद्धं न शक्यते।

**व्याकरणम्-**

- जज्ञिरे- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः लिट्-लकारस्य प्रथमपुरुषस्य बहुवचने रूपम्।

**न तस्य॑ प्रति॒मा अ॑स्ति॒ यस्य॒ नाम॑ म॒हद्यश॑ः।**

**हि॒र॒ण्य॒ग॒र्भ इत्ये॒ष मा मा॑ हिंसी॒दित्ये॒षा यस्मा॒न्न जा॒त इत्ये॒षः॥३॥**

**पदपाठः - न। तस्य॑। प्र॒ति॒मेति॑ प्रति॑। मा। अ॒स्ति॒। यस्य॑। नाम॑। म॒हत्। यश॑ः।**

**हि॒र॒ण्य॒ग॒र्भऽइति॑ हिरण्य। ग॒र्भः। ए॒षः। मामेति॒ मा। मा॑। हि॒ंसी॒त्। इति॑। ए॒षा। यस्मा॑त्।**

**न। जा॒तः। इति॑। ए॒षः॥३॥**

**अन्वयः -** तस्य प्रतिमा न अस्ति यस्य महत् यशः हिरण्यगर्भः इति एषः, मा मा हिंसीत् इति, एषा यस्मान्न जातः इति एषः नाम॥३॥

**व्याख्या-** द्विपदा गायत्री। तस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किंचिद्वस्तु नास्ति। अत एव नाम प्रसिद्धं महत् यशः यस्यास्ति। सर्वातिरिक्तयशा इत्यर्थः। हिरण्यगर्भ इत्येषोऽनुवाकश्चतुर्ऋचः हिरण्यगर्भः यः प्राणतःयस्येमे य आत्मदा इति(२५/१०-१३)। मा मा हिंसीज्जनितेत्येका एषा (१२/१०२)। यस्मान्न जातः इन्द्रश्च सम्राडिति(८/३६-३७) द्व्यृचोऽनुवाकः। एता प्रतीकचोदिताः पूर्वं पठितत्वादादिमात्रेणोक्ताः ब्रह्मयज्ञे जपे च सर्वा अध्येयाः। एवं सर्वत्र।

**सरलार्थः-** तस्य परमात्मनः उपमां कर्तुं कोपि नास्ति यस्य यशः आदौ उत्पन्नम्। यजुर्वेदस्य मा मा हिंसीत् इत्यादिमन्त्रैः व्याख्यातम्।

**व्याकरणम्-**

- अस्ति- अस्-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- हिंसीत्- हिसि (हिंसायाम्) लुङ्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।

**ए॒षो ह॑ दे॒वः प्र॒दिशोऽनु॒ सर्वा॒ः पूर्वो॑ ह जा॒तः स उ॒ गर्भे॑ अ॒न्तः।**

**स ए॒व जा॒तः स ज॑नि॒ष्यमा॑णः प्र॒त्यङ्जना॑स्तिष्ठति स॒र्वतो॑मुखः॥४॥**



**पदपाठः - एषः। ह। देवः। प्रदिशऽइति प्र। दिशः। अनु। सर्वाः। पूर्वः। ह। जातः। सः ओंऽइत्यूँ। गर्भे। अन्तरित्यन्तः॥ सः। एव। जातः। सः। जनिष्यमाणः। प्रत्यङ्। जनाः। तिष्ठति। सर्वतोमुखऽइति सर्वतः। मुखः॥४॥**

**अन्वयः -** एषः देवः सर्वा प्रदिशः, सः पूर्वः ह गर्भः अन्तः जातः, सः एव जातः, स जनिष्यमाणः। जनाः, सर्वतोमुखः प्रत्यङ् तिष्ठति॥४॥

**व्याख्या-** चतस्रस्त्रिष्टुभः। ह प्रसिद्धम्। एषो ह देवः सर्वाः प्रदिशः अनुतिष्ठति व्याप्य स्थितः। हे जनाः, ह प्रसिद्धमेष पूर्वः प्रथमो जात उत्पन्नः। गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति। जातोऽपि स एव जनिष्यमाणः उतपत्स्यमानोऽपि स एव। प्रत्यङ् प्रतिपदार्थमञ्चति प्रत्यङ्। सर्वतोमुखः सर्वतो मुखाद्यवयवा यस्य। अचिन्त्यशक्तिरित्यर्थः।

**सरलार्थः-** एषः देवः सर्वाभिः दिग्भिः निश्चतरूपेण व्याप्नोति। स एव निश्चतरूपेण गर्भमध्ये उत्पन्नः अभवत्। सः एव उत्पन्नः भवति किञ्च स एव उत्पन्नः भविष्यति। हे मनुष्य, सर्वत्र मुखविशिष्टः अर्थात् अचिन्त्यशक्तिसम्पन्नः परमात्मा प्रतिपदार्थं तिष्ठन् अस्ति।

**व्याकरणम्-**

- जातः- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः तप्रत्ययान्तं रूपम्।
- जनिष्यमाणः - जनी(प्रादुर्भावे) इत्यर्थकात् धातोः शानच्-प्रत्यययान्तस्य रूपम्।

**यस्माज्जातं न पुरा किं च नैव य आबभूव भुवनानि विश्वा।**
**प्रजापतिः प्रजया संरराण स्त्रीणिज्योतींषि सचते स षोडशी॥५॥**

**पदपाठः - यस्मात्। जातम्। न। पुरा। किम्। चन। एव। यः। आऽबभूवेत्या। बभूव। भुवनानि। विश्वा॥ प्रजापतिरिति प्रजा। पतिः। प्रजयेति प्र। जया। संरराणऽइति सम्। रराणः। त्रीणि। ज्योतींषि। सचते। सः। षोडशी॥५॥**

**अन्वयः -** यस्मात् पुरा किञ्चन न जातम्, यः एव विश्वा भुवनानि आबभूव, षोडशी प्रजापतिः प्रजया संरराण – त्रीणि ज्योतींषि सचते॥५॥

**व्याख्या-** यस्मात् पुरा किंचन किमपि न जातमेव। यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आबभूव समन्ताद्भावयामास। अन्तर्भूतो ण्यर्थः। स षोडशी षोडशावयवलिङ्गशरीरी प्रजापतिः प्रजया संरराणः रममाणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते।

**सरलार्थः-** यस्मात् प्रजापतेः प्राक् किमपि नोत्पन्नं, यः प्रजापतिः सम्पूर्णलोकं परितः कल्पितवान्, षोडशावयवविशिष्टः प्रजापतिः प्रजाभिः सह रमति, प्रकाशत्रयं धारयति।



**व्याकरणम्-**

- जातः- जनी(प्रादुर्भावे) इत्यर्थकात् धातोः तप्रत्ययान्तं रूपम्।
- आबभूव- आङ् इत्युपसर्गपूर्वकात् भू(सत्तायाम्) इत्यर्थकात् धातोः लिट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।



## पाठगतप्रश्नाः

२१. त्रयीलक्षणं किम्।

२२. प्रजापतिः कः।

२३. सम्पूर्णः कालपरिणामः कुतः उत्पन्नः।

२४. एनं परमात्मानम् ऊर्ध्वभागात्, तिर्यग्भागात्, मध्यभागात् बोद्धं शक्यते वा।

२५. प्रजापतिसूक्तं कस्मिन् वेदे अन्तर्गतः भवति।

२६. प्रजापतिसूक्ते कति मन्त्राः सन्ति।

२७. प्रजापतिसूक्तस्य देवता का।

## २३.५) प्रजापतिसूक्तसारः

शुक्लयजुर्वेदीयसूक्तसंग्रहेषु अन्यतममिदं प्रजापतिसूक्तम्। सूक्तमिदं शुक्लयजुर्वेदस्य द्वात्रिंशदध्याये वर्तते। अस्मिन् सूक्ते पञ्च मन्त्राः विद्यन्ते। सूक्तस्यास्य हिरण्यगर्भः ऋषिः, प्रजापतिः देवता, त्रिष्टुप् छन्दश्च। अस्य ब्रह्मयज्ञजपे विनियोगः। तैत्तिरीयसंहितायामाम्नातम् -

प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय।। (५.५.१.२)

इति श्रुतेः हिरण्मयस्य अण्डस्य गर्भभूतः प्रजापतिः एव हिरण्यगर्भः इति स्तूयते। मायाध्यक्षात् परमात्मनः सम्भूतोऽयं प्रपञ्चोत्पत्तिं कुरुते इति प्रसिद्धिः। बहुधा वेदेषु विविधाः प्राकृतिकशक्तयः देवतारूपेण परिकल्प्य अस्माभिः स्तूयन्ते। परन्तु अस्मिन् सूक्ते तथाविधं किमपि कल्पनादिकं न विद्यते। अत्र प्राज्ञानाम् ऋषीणां सृष्टितत्त्वविषये प्रवर्तमानायाः जिज्ञासायाः अयं देवः आविर्भूतः इति कीर्त्यते।

वेदादिषु बहुदेवतावादस्य वर्तमानादपि ते मन्त्राः एकमेवाद्वितीयं देवं स्तुवन्ति। तत्र प्रमाणं तावद् इन्द्रसूक्ते -

यं स्मा पृच्छन्ति कुह सेति घोरमृतेमाहुर्नैषो अस्तीत्येनम्।। इति।

उपनिषदि यथा एकं सद्विप्रा बहुधा वदन्ति इति श्रुतेः आत्मनः एकत्वं प्रतिपाद्यते एवमेव प्रजापतिसूक्तेऽपि इदमेव तत्त्वं प्रकाशितम्। तत्र बहुदेवतावादस्य उपयोगितायां सन्दिहानाः ऋषयः प्रजापतिमेव विश्वस्य सृष्टिकर्तारं मन्वते। तस्माद् उक्तम् -



हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।

स दाधार पृथिवी द्यामुतेमां कस्मै देवाय हविषा विधेम।। इति।

सः प्राणदाता बलदाता च। तस्यादेशं देवाः पालयन्ति। तस्मादुक्तम् -

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। इति।

सः सर्वस्य प्रपञ्चस्य स्रष्टा। तेन यथा द्युलोकस्तथा पृथिवीलोकोऽपि निर्मितः। तेन स्वर्गलोकः आदित्यलोकश्च निर्मितः। तस्मादुक्तं -

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः।

यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम।। इति।

सः दक्षं धृतवान्। किञ्च सृष्टेः उत्पत्तौ जीवनस्वरूपं जलं सर्वत्र प्रसारितवान्। देवेषु सः एक एव स्वामी। तथाहि आम्नातं हिरण्यगर्भसूक्ते -

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।

यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम।। इति।

प्रजापतिः एव चर्कर्ति बर्भर्ति संजर्हर्ति च जगत्। अयं यथा जलान्नप्रकृत्यादिप्रदानेन जीवनं प्रददाति, सृष्टिञ्च करोति। तथैव जगदिदं रक्षति यथासमयं नाशयति च। तस्मादयं जगतः स्रष्टा रक्षकः संहारकश्च। स हिरण्यगर्भः धनेश्वरः। तस्मादुक्तं हिरण्यगर्भसूक्ते -

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।

यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्।। इति शिवम्।।

## २३.६) प्रजापतिस्वरूपम्

विविधदेवतानामस्मरणं हि एकस्यैव परमस्वरूपस्य स्तुत्यै क्रियमाणं भवति। तस्यैव परमपुरुषस्यैको रूपः प्रजापतिः इति। युगान्ते सम्पूर्णा सृष्टिः पयसा समावृता भवति। तदा सर्वं बीजरूपेण तिष्ठति, ततः बीजात् यः पुनः देवतामनुष्यादि सृजति स एव हिरण्यगर्भः प्रजापतिर्वा। सृष्ट्यारम्भे सः अग्निं सृजति किञ्च प्रलयकाले समावृतं पयः स्वोदरि संस्थापयति येन सृष्टिः पुनर्जायेत। नूनं देवतामनुष्यादिचेतनजीवानां जडवस्तूनामपि स एव स्रष्टा। तेषां स्वाधारभूतं योग्यभूमिभागमपि सः निर्माति। प्रजापतिः एव पृथिवीलोकं द्युलोकञ्च सृजति।

प्रजापतिः न केवलं जगतः स्रष्टा विश्वस्यास्य धारकोऽपि सः। वर्तमानं भूतं भव्यञ्च सर्वं तमेव व्याप्य प्रवर्तते। सः सूर्यस्यापि धारकः। भास्करः अमूमेव आधारीकृत्य उदेति भासयति च। मनुष्याणां जननमरणस्य सः एव नियन्ता। दिग्देवतानामपि सः अधिपतिः।

ऐतरेयब्राह्मणानुसारेण एकवारम् इन्द्रः प्रजापतेः समीपमेत्य तस्य माहात्म्यं प्रार्थयामास। तदा प्रजापतिः अपृच्छत् - तुभ्यं स्वमाहात्म्यप्रदानेन अहं कः स्याम् इति। तदा इन्द्रः तमुक्तवान् - त्वं यथावभाससे तथा भूयाः इति। ततः प्रजापतिः कः इति नाम्नापि प्रसिद्धिम् अगमत्।







## पाठसारः (प्रजापतिसूक्तम्)

पञ्चमन्त्रात्मके सूक्तेऽस्मिन् वर्णितमस्ति यत् ब्रह्माण्डेऽस्मिन् यत्किञ्चिदपि दृश्यते, तत्सर्वं प्रजापतिरेवास्ति। यस्मात् पुरा किमपि न जातमेव। यश्च सर्वाणि भूतजातानि आविर्बभूव, स षोडशावलिङ्गशरीरी प्रजापतिः एव अस्ति। अग्नि-आदित्य-वायु-शुक्र-ब्रह्म-ओंकारादिरूपैः सः प्रजापतिरेव व्याख्यातः प्रसिद्धश्च। किंचिदपि एनं पुरुषम् ऊर्ध्वं न परिगृह्णाति। सर्वे निमेषाः काल-विशेषाः प्रजापतिपुरुषात् अधिपुरुष-सकाशात् जज्ञिरे। तस्य पुरुषस्य प्रतिमानं किंचिद्वस्तु नास्त्येव। एष हि वेदः सर्वाः प्रदिशि व्याप्य स्थितः। एतस्य प्रथमोत्पत्तिः सुप्रसिद्धा एव। गर्भमध्ये स एव तिष्ठति। जातोऽपि स एव जनिष्यमाणः। इत्थं स प्रजापतिः प्रजया संरराणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सेवते।



## पाठान्तप्रश्नाः

**(शिवसंकल्पसूक्ते)**

१. शिवसङ्कल्पसूक्तस्य सारं लिखत।

२. तन्मे मनः शिवसङ्कल्पमस्तु इति मन्त्रांशे कीदृशं मनः शिवसङ्कल्पं भवतु।

३. यज्जाग्रतो दूरमुदैति... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।

४. यस्मानृचः... इत्यादिमन्त्रं पूरयित्वा महीधरभाष्यानुसारि व्याख्यानं कुरुत।

५. सुषारथिरश्वा... इत्यादिमन्त्रं पूरयित्वा व्याख्यात।

**(प्रजापतिसूक्ते)**

६. प्रजापतिसूक्तस्य सारं लिखत।

७. प्रजापतिस्वरूपं वर्णयत।

८. तदेवाग्निस्तदादित्य... इति मन्त्रं व्याख्यात।

९. सर्वे निमेषा... इति मन्त्रं व्याख्यात।

१०. न तस्य... इति मन्त्रं व्याख्यात।

११. एषो ह देवः... इति मन्त्रं व्याख्यात।

१२. यस्माज्जातम्... इति मन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**(शिवसंकल्पसूक्ते)**

१. आदित्य याज्ञवल्क्यः ऋषिः, त्रिष्टुप् छन्दः, मनः देवता।



२. कल्याणकारी।

३. खश्प्रत्ययः।

४. मनसा।

५. कुर्वन्ति।

६. छान्दसः।

७. विशेषेण ज्ञानजनकम्।

८. धैर्यरूपम्।

९. अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।

१०. करणे।

**(शिवसंकल्पसूक्ते)**

११. मनसा।

१२. होता, पोता, मैत्रावरुणः, ग्राववरुणः, ब्राह्मणाच्छंदसी, आच्छावाक् एवम् अग्नीदः।

१३. विस्तार्यते।

१४. रथनाभौ अराः इव।

१५. आपूर्वकात् तन्तुसन्तानात् वेञ्-धातोः क्तप्रत्यये।

१६. क्यसुप्रत्ययः।

१७. जरारहितम्।

१८. अतिजववद्वेगवत्।

१९. प्रग्रहैः।

२०. नी-धातोः यङि लटि प्रथमपुरुषैकवचने।

**(प्रजापतिसूक्ते)**

२१. त्रयीलक्षणं तत् ब्रह्मैव।

२२. स प्रजापतिः एव अग्निः।

२३. सम्पूर्णः कालपरिणामः प्रकाशमानपुरुषात् उत्पन्नः।

२४. एनं परमात्मानम् ऊर्ध्वभागात्, तिर्यग्भागात्, मध्यभागात् बोद्धुं न शक्यते।

२५. शुक्लयजुर्वेदे।

२६. पञ्च मन्त्राः

२७. प्रजापतिः।

## ॥ इति त्रयोविंशः पाठः ॥

# २४

# ॥रुद्राध्यायः॥

## प्रस्तावना

शुक्लयजुर्वेदसंहितायाः षोडशाध्यायो रुद्राध्यायीनाम्ना प्रसिद्धः। पञ्चदशे अध्याये अग्निचयनप्रकारं वर्णयित्वा षोडशे शतरुद्रियहोममन्त्राः उक्ताः। एषु मन्त्रेषु रुद्राध्याये रुद्रदेवतायाः स्वरूपं, वैशिष्ट्यं च प्रस्तूयते। यद्यपि रुद्रः काचन देवता परन्तु स भगवत्स्वरुपः।श्रीभगवान् सर्वव्यापी। रुद्रस्यापि वर्णनायां तस्य सर्वस्वरूपता प्रकटिता। देवमनुष्यदिरूपेण यथा तस्य स्थितिः तथा पर्णनीहारादिरूपेणापि स एव प्रकाशते। अस्मिन् अध्याये मुख्यतः रुद्रं प्रति नमस्कारः प्रार्थना च विहिता। शिवस्य शिवधर्मस्य शैवधर्मस्य वा प्रसारः शुक्लयजुर्वेदसाहित्येतिहासे गुरुत्वपूर्णस्थानम् अलंकरोति॥ रुद्रशब्दास्यार्थः भीषणः भयङ्करो वेति। अन्तिमक्षणे यः सर्वान् रोदयति सः रुद्ररूपेण ख्यातो भवति। जन्मसमये स्वयमेव भीषणं क्रन्दति अपि च तत्-शब्देन अखिलभुवनं यः कम्पयति सः रुद्रः। अत्र द्वौ भागौ क्रियेते। तत्र प्रथमभागे सप्त मन्त्राः, तथा द्वितीये भागे सप्त मन्त्राः व्याख्यास्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- रुद्रदेवस्य तथा शिवस्य रूपं ज्ञातुं शक्ष्यति।
- शुक्लयजुर्वेदस्य रुद्राध्यायं सस्वरं पठितुं शक्ष्यति।
- रुद्राध्याये स्थितानां मन्त्राणाम् अर्थं ज्ञातुं शक्ष्यति।
- वैदिकमन्त्रव्याख्यानस्य पद्धतिं ज्ञातुं शक्ष्यति।
- रुद्रस्य माहात्म्यं ज्ञातुं शक्ष्यति।
- स्वयमेव मन्त्रस्य व्याख्यानं कर्तुं समर्थो भवेत्।
- स्वयमेव मन्त्रस्य अन्वयं कर्तुं समर्थो भवेत्।
- स्वयमेव मन्त्रे स्थितव्याकरणानि ज्ञातुं समर्थो भवेत्।



## २४.१) मूलपाठः

नमस्ते रुद्र मन्यव उतो तऽइषवे नमः। बाहुभ्यामुत ते नमः॥१॥

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि॥२॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्॥३॥

शिवेन वचसा त्वा गिरिशाऽच्छावदामसि। यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत्॥४॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहींश्च सर्वान् जम्भयन् सर्वांश्च यातुधान्योऽधराचीः परासुव॥५॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे॥६॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः॥७॥

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः॥८॥

प्रमुञ्च धन्वनस्त्वमुभयोरात्र्न्योर्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप॥९॥

विज्यं धनुः कपर्द्दिनो विशल्यो बाणवाँ२॥ उत अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः॥१०॥



**या ते हेतिमीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परि भुज॥११॥**

**परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधेहि तम्॥१२॥**

**अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे। निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव॥१३॥**

**नमस्त आयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने॥१४॥**

## २४.१.१) इदानीं मूलपाठम् अवगच्छाम (प्रथमो भागः)

**नमस्ते रुद्र मन्यव उतो तऽइषवे नमः। बाहुभ्यामुत ते नमः॥१॥**

**पदपाठः- नमः ते रुद्र मन्यवे उतोऽइत्युतो ते इषवे नमः। बाहुभ्यामिति बाहुऽभ्याम् उत ते नमः।**

**अन्वयार्थः**- हे रुद्रदेव, ते तव., मन्यवे क्रोधस्य उद्देश्ये, नमः नौमि अर्थात् स्तुतिं करोमि, उतः अथवा, ते तव, इषवे बाणस्य उद्देश्ये, नमः नौमि। उत अपि च, ते तव, बाहुभ्याम् हस्ताभ्यं, नमः स्तुतिं करोमि।

**व्याख्या** - पञ्चदशे अध्याये चयनमन्त्रान् समाप्य षोडशे शतरुद्रियाख्यहोममन्त्रा उच्यन्ते। 'शतरुद्रियहोम उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्संततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ्नमस्त इत्यधायेन, त्र्यनुवाकान्ते स्वाहाकारो जानुमात्रे, पञ्चान्ते च नाभिमात्रे, प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे, प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम्' (का. श्रौ. १८/१/१/५)। अस्यार्थः। हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः तस्याहवनीये प्राप्तावपवादमाह। उत्तरपक्षपश्चिमकोणे याः परिश्रितो जङ्घामात्र्यादयः पूर्वं निखातास्तासु होमः। तत्र विधिः। जर्तिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तूनर्कपत्रेण जुहोति। किं कुर्वन्। अर्ककाष्ठेन संततं क्षारयन् परिश्रित्सु पातयन् अर्कपत्रं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पातनीयम्। सक्तुस्थाने अजादुग्धमिति केचित्। उदङ्मुखो नमस्त इत्याध्यायेन। तत्रानुवाकत्रयान्ते 'अर्भकेभ्यश्च वो नमः' (क.



२६) इत्यत्र जानुमात्रे परिश्रिति स्वाहाकारो विधेयः। पञ्चानुवाकान्ते 'सुधन्वने च' (क. ३६) इत्यत्र नाभिमात्रे परिश्रिति स्वाहाकारः। 'नमोऽस्तु रुद्रेभ्यः' (क. ६३) इति प्रत्यवरोहमन्त्राः तेभ्यः प्राक् मुखमात्रपरिश्रिति स्वाहाकारः। नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोमं होमः। 'ये दिवि' (क.६४) इति मुखमात्रे। 'येऽन्तरिक्षे' (क. ६५) इति नाभिमात्रे। 'ये पृथिव्याम्' (क.६६) इति जानुमात्रे। इति सुत्रार्थः। नमस्ते। षोडशर्चोऽनुवाकः एकरुद्रदैवत्यः आद्या गायत्री तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभः द्वे जगत्यौ। अध्यायस्य परमेष्ठिदेवप्रजापतय ऋषयः। मा नः (क. १५-१६) इति द्वयोः कुत्सोऽपि ऋषिः। हे रुद्र, रुत् दुःखं द्रावयति रुद्रः। यद्वा 'रु गतौ' ये गत्यर्थास्ते ज्ञानार्थाः। रवणं रुत् ज्ञानं राति ददाति रुद्रः ज्ञानम् भावे क्विप् तुगागमः। रुत् ज्ञानप्रदः। यद्वा पापिनो नरान् दुःखभोगेन रोदयति रुद्रः। हे रुद्र, ते तव मन्यवे क्रोधाय नमः नमस्कारोऽस्तु। उतो अपि च ते तवेषवे बाणाय नमः। उतापि च ते तव बाहुभ्यां नमः। तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः॥१॥

**सरलार्थः**- अयं रुद्राध्यायस्य प्रथमो मन्त्रः। अत्र रुद्रोपासकाः रुद्रं प्रति उपासते, हे रुद्र, तव क्रोधाय नमः, तव बाणाय च नमः, पुनः ते हस्ताभ्यां नो नमः

**व्याकरणम्-**

- रुद्रः- रुद् दुःखं द्रावयति इति रुद्रः।
- पुनः रु गतौ इतिधातोः गत्यर्थकाद् ज्ञानार्थकाद्वाधातोः रुद्रशब्दो निष्पद्यते। तत्र रवणं रुत् ज्ञानं राति ददाति इति रुद्रः इत्यर्थो भवति। अत्र भावे क्विप् प्रत्ययः।रुत् ज्ञानप्रदः।
- यद्वा पापिनो नरान् दुःखभोगेन रोदयतीति रुद्रः।

**या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि॥२॥**

**पदपाठः- या ते रुद्र शिवा तनूः अघोरा अपापकाशिनीत्यपापकाशिनी॥ तया नः तन्वा शन्तमयेति शऽन्तमया गिरिशन्तेति गिरिंऽशान्त अभी चाकशीहि॥**

**अन्वयार्थः**- रुद्र हे रुद्रदेव, ते तव, या शिवा यत्मङ्गलमयी, अघोरा अभयप्रदायिनी, अपापकाशिनी पूण्यप्रकाशिनी, तनूः शरीरं, तया भवता, शन्तमया अतिशयसूखजनकेन, तन्वा शरीरेण, नः अस्मान्, गिरिशन्त हे गिरिश, अभिचाकशीहि अवलम्बनं कुरु।

**व्याख्या** - हे रुद्र, या ते तवेदृशी तनूः शरीरं हे गिरिशन्त, तया तन्वा नोऽस्मानभिचाकशीहि अभिपश्य। चाकशीतिः पश्यतिकर्मा (नि. ३/११/८)। कीदृशी तनूः। शिवा शान्ता मङ्गलरूपा। यतोऽघोरा अविषमा सौम्या अत एवाऽपापकाशीनि पापमसुखं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी। या पुण्यफलमेव ददाति न पापफलमित्यर्थः। गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयतीति गिरिशन्तः, गिरि वाचि स्थितः शं तनोतीति वा, गिरौ मेघे स्थितो वृष्टिद्वारेण शं



तनोतीति वा, गिरौ शेते गिरिशः। अमनि गच्छति जानातीत्यन्तः सर्वज्ञः। 'अम गतौ भजने शब्दे' कर्तरि क्तः। गिरिशश्चासावन्तश्च गिरिशन्तस्तत्संबुद्धिः। शकन्ध्वादित्वात्पररूपम् (पा. ६/१/९४) कीदृशी तन्वा। शन्तमया सुखतमया॥२॥

**सरलार्थः** - अयं रुद्राध्यायस्य द्वितीयो मन्त्रः। हे रुद्र, तव यत् मङ्गलमयं, भीतिशून्यं, पुण्यस्वरूपस्य प्रकाशकं यत् रुद्रस्य शरीरमस्ति, तेन निखिलसुखभरितेन शरीरेण हे गिरिश, त्वम् अस्मान् अवलोकयतु, सुखयितुमिति शेषः।

**व्याकरणम्** -

- गिरिशन्त- गिरौ पर्वते शेते तिष्ठति वा, अर्थात् कैलासाख्ये पर्वते स्थित्वा, शं सुखं तनोतीति गिरिशन्तः। अथवा गिरि वाचि शं सुखं तनोति विस्तारयतीत्यर्थः।

**यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्॥३॥**

**पदपाठः- याम् इषुम् गिरिशन्तेतिगिरिऽशन्त हस्ते बिभर्षि अस्तवे शिवाम् गिरित्रेति गिरिऽत्र ताम् कुरु मा हिंसीः पुरुषम् जगत्।**

**अन्वयार्थः** - गिरिशन्त हे गिरिश, याम् इषुम् यं बाणं, अस्तवे निक्षेपणाय, हस्ते करे, बिभर्षि धारयन् अस्ति, गिरित्र हे पर्वतरक्षक, ताम् पूर्वोक्तां, शिवां कल्याणकारिणिं कुरु। पुरुषं पुरुषं, जगत् पृथिवीं, मा न, हिंसीः हिसां कार्षीः।

**व्याख्या** - हे गिरिशन्त, त्वं यामिषुं बाणं हस्ते बिभर्षि धारयसि। किं कर्तुम्। अस्तवे 'असु क्षेपणे' तुमर्थे तवेप्रत्ययः। असितुं शत्रून् क्षेप्तुमित्यर्थः। गिरित्र, गिरौ कैलासे स्थितो भूतानि त्रायत इति गिरित्रः तामिषुं शिवां कल्याणकारिणीं कुरु। किंच पुरुषं पुत्रपौत्रादिकं जगत् जङ्गममन्यदपि गवाश्वादिकं मा हिंसीः म वधीः॥३॥

**सरलार्थः**- अयं रुद्राध्यायस्य तृतीयो मन्त्रः। हे रुद्र, त्वं शत्रून् प्रति निक्षेपणाय हस्ताभ्यां यं बाणं धारयति, हे पर्वतरक्षक तं बाणं कल्याणरूपं विधेहि। पुरुषाणां तथा जगतः हिंसां मा कुरु।

**व्याकरणम्** -

- अस्तवे- अत्र असु क्षेपणे इतिधातोः तुमर्थे तवेप्रत्ययः। असितुं शत्रून् क्षेप्तुमित्यर्थः।

**शिवेन वचसा त्वा गिरिशाऽच्छावदामसि। यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत्॥४॥**



**पदपाठः- शिवेन वचसा त्वा गिरिश अच्छ वदामसि यथा नः सर्वम् इत् जगत् अयक्ष्मम् सुमनाइति सुऽमनाः असत्।**

**अन्वयार्थः-** गिरिश हे रुद्रदेव, शिवेन मङ्गलजनकेन, वचसा वाचा, त्वा त्वाम्, अच्छ लाभाय, वदामसि प्रर्थानां रोमि, यथा येन, नः अस्माकं, सर्वं सम्पूर्णम् इत् जगत् भूवनम्, अयक्ष्मम् व्यधिरहितं, सुमनाः शोभनमनस्काः, असत्।

**व्याख्या** - गिरौ कैलासे शेते गिरिशः हे गिरिश, शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे। किं वदाम इत्यत आह। नोस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं नराः पश्वादि यथा येन प्रकारेण अयक्ष्मं नीरोगं सुमनाः शोभनामनस्कं च असत् भवति यथा कुर्विति शेषः। सुमनःशब्दे पुंस्त्वमार्षं जगद्विशेषणत्वात्।४॥

**सरलार्थः** - अयं रुद्राध्यायस्य चतुर्थो मन्त्रः। अस्यार्थो हि, हे गिरिश, तव शरणं प्राप्तुं मङ्गलसूचकैः वाक्यैः प्रार्थयामः (येन) अस्माकं जगतः सर्वे (मानवाः) स्वास्थ्यवन्तः शोभनमनस्काश्च भवेयुः।

**व्याकरणम् -**

- असत्- अत्र लेट्लकारः, अतः लेटोडाटौ इत्यनेन अडागमः, इलोपः।

**अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहींश्च सर्वान् जम्भयन् सर्वाश्च यातुधान्योऽधराचीः परासुव॥५॥**

**पदपाठः- अधी अवोचत् अधिवक्तेत्यधिऽवक्ता प्रथमः दैव्यः भिषक् अहीन् च सर्वान् जम्भयन् सर्वाः च यातुधान्यइतियातुऽधान्यः अधराचीः परा सुव॥**

**अन्वयार्थः-** अधिवक्ता वाचालः, प्रथमः मुख्यः, दैव्यः स्वर्गीयः, भिषक् चिकित्सकः, अधि अवोचत् अध्युक्तवान। सर्वान् सकलान्, अहीन् सर्पान्, च किञ्च, जम्भयन् विनाशयन्, सर्वाः सकलाः, च अपि च अधराचीः अधोगामी, यातुधान्यः परासुव राक्षससमूहान् दूरं निक्षिप।

**व्याख्या** - रुद्रो मामध्योवचत् अधिवक्तु मां सर्वाधिकं वदतु, तेनोक्ते मम सर्वाधिक्यं भवत्येवेत्यर्थः। कीदृशः। अभिवक्ता अधिकवदनशीलः। प्रथमः सर्वेषां मुख्यः पूज्यत्वात्। दैव्यः देवेभ्यो हितः। भिषक् रोगनाशकः स्मरणेनैव रोगनाशाद्भिषकत्वम्। एवं परोक्षमुक्त्वा प्रत्यक्षमाह। हे रुद्र, सर्वाः यातुधान्यः यातुधानीः राक्षसीः त्वं परासुव पराक्षिप अस्मभ्यो दूरीकुरु। किं कुर्वन्। सर्वानहीन् सर्पव्याघ्रादीन् जम्भयन् विनाशायन्। कीदृशीर्यातुधान्यः। अधराचीः अधरेऽधोदेशेऽञ्चन्ति ता अधराच्यः ताः अधोऽधोगमनशीलाः। चौ समुच्चये। सर्पनाशराक्षसीक्षेपौ सदैव कुर्वित्यर्थः॥५॥



**सरलार्थः** - अयं रुद्राध्यायस्य पञ्चमो मन्त्रः॥ अस्यार्थो हि, अधिकवक्ता, प्रथमः (मुख्यः पुज्यातिशयात्), स्वर्गस्थः वैद्यः (रुद्रः) अस्मभ्यम् अधिकम् वद, (उपदिशतु), (हे रुद्र) त्वं सर्वान् सर्पान् विनाश्य अधोगामिनीः राक्षसीः दूरं निक्षेपय।

**व्याकरणम्** -

- अध्यवोचद्- अधिपूर्वकाद् वच्-धातोः लङि प्रथमपुरुषैकवचनम्।
- भिषक्-रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके



## पाठगतप्रश्नाः

२८. गिरिशस्य हस्ते बाणः कथमस्ति।

२९. रुद्रस्य शरीरं कीदृशम्।

३०. स्वर्गस्य मुख्यः वैद्यो कः।

३१. यातुधान्यशब्दस्य कः अर्थः।

---

**असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे॥६॥**

**पदपाठः- असौ यः ताम्रः अरुणः उत बभ्रुः सुमङ्गलइतिसुऽमङ्गलः ये च एनम् रुद्राः अभितः दिक्षु श्रिताः सहस्रशः इति सहस्रऽशः अवेति एषाम्। हेडः ईमहे।**

**अन्वयार्थः**- असौ अयं, यः ताम्रः यत्ताम्रवर्णीयः, अरुणः रक्तवर्णीयः, उत अथवा, बभ्रुः पिङ्गलवर्णीयः, सुमङ्गलः मङ्गलमयः, ये च पुनः, सहस्रशः सहस्रसंख्यकः, रुद्राः रश्मयः, एनम् एतम्, अभितः पुरस्तात्, दिक्षु काष्ठासु, श्रिताः आश्रिताः, एषाम् एतेषां, हेडः क्रोधः, अव ईमहे भक्त्या दूरं करोमि।

**व्याख्या** - आदित्यरूपेणात्र रुद्रः स्तूयते। योऽसौ प्रत्यक्षो रुद्रो रविरूपः। च पुनरर्थे। रुद्रा एनमभितोदिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसंख्याः एषां हेडः क्रोधमस्मदपराधजं वयमेव ईमहे निवारयामः भक्त्या निराकुर्मः। हेड इति क्रोधनाम। 'अभिसर्वतसो' (पा. २/३/२) द्वितीया। कीदृशोऽसौ। ताम्रः उदयेऽत्यन्तं रक्तः। अरुणः रक्तोऽस्तकाले। उतापि च बभ्रुः पिङ्गलवर्णोऽन्यदा। सुमङ्गलः शोभनानि मङ्गलानि यस्य मङ्गलरूपः रव्युदये सर्वमङ्गलप्रवर्तनात्॥६॥

**सरलार्थः** - अयं रुद्राध्यायस्य षष्ठः मन्त्रः। अस्यार्थो हि, असौ यः ताम्रवर्णः, रक्तवर्णः तथा पिङ्गलवर्णः रुद्रः(सूर्यरूपः) सर्वमङ्गलप्रवर्तकः, पुनः ये सहस्रं किरणाः दिक्षु विस्तृताः, तेषां क्रोधं (वयं) भक्त्या दूरीकुर्मः।

**व्याकरणम् -**

- हेड – क्रोधः इत्यस्य काचित् संज्ञा।
- ईमहे- ई-धातोः आत्मनेपदिनः लट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।
- श्रिताः - शृङ्-धातोः तप्रत्ययान्तं रूपम्।

**असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः॥७॥**

**पदपाठः- असौ यः अवसर्प्पतीत्यवऽसर्पति नीलग्रीवइतिनीलऽग्रीवः विलोहितइतिविऽलोहितः उत एनम् गोपाइतिगोऽपाः अदृश्रन् अदृशन् उदाहार्यइत्युदऽहार्यः सः दृष्टः मृडयाति नः।**

**अन्वयार्थः**- असौ अयं, यः नीलग्रीवः यत् नीलकण्ठः विलोहितः विशेषरूपेण अरुणः, अवसर्पति धैर्यसहकारेण गच्छति, उत अथवा, एनम् एतम्, गोपाः गोपालकाः, अदृशन् दृष्टावा, उदाहार्यः जलाहारिण्यः, अदृश्रन् दृष्टावा, दृष्टः अवलोकितः, सः सूर्यदेवः, नः अस्माकं, मृडयाति आनन्दीकुर्वन्तु।

**व्याख्या** - योऽसावादित्यरुपोऽवसर्पति उदयास्तामयौ कुर्वन्निरन्तरं गच्छति। एनं गोपा उत गोपाला अपि वेदोक्तसंस्काराणहीनाः अदृशन् पश्यन्ति। उदाहार्यः उदकं हरन्ति ता उदहार्यः 'मन्थौदन-' (पा. ६/३/६०) इत्यादिना उदकस्योदादेशः। जलहारिण्यो योषितोऽप्येनमदृशन् पश्यन्ति। आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः। दृशेर्लुङि 'इरितो वा' (पा. ३/१/५७) इति च्लेरङ् रुगागमश्छान्दसः। कीदृशः। नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य अस्तमये नीलकण्ठ इव लक्ष्यः। विलोहितः विशेषण रक्तः। स रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति सुखयतु। असौ मण्डलवर्ती रुद्र एव तपतीति ज्ञातः सुखं करोत्वित्यर्थः॥७॥

**सरलार्थः** - अयं रुद्राध्यायस्य सप्तमो मन्त्रः। अस्यार्थो हि, असौ यो नीलकण्ठः, विशिष्य रक्तिमवर्णः, मन्दं मन्दं (अस्तं) गच्छति, किञ्च गोपालाः यं पश्यन्ति, जलम् आहरन्त्यो बालाः यं पश्यन्ति, सः (अस्ताचलस्थितः सूर्यरूपी) रुद्रः अस्मभ्यं सुखं वितरतु।

**व्याकरणम् -**

- उदहार्यः- उदकं हरन्ति ता उदहार्यः, मन्थोदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च इति (पा. ६.३.६०) इत्यनेन उदकस्योदादेशः।



● अदृश्रन्-दृशेर्लुङि इरितो वा (पा.३.१.५७) इति सूत्रेण च्लेरङ्, रुगागमश्छान्दसः।



## पाठगतप्रश्नाः

३२. रुद्रस्य कति वर्णाः।

३३. सहस्ररश्मिरूपो रुद्रः कः।

३४. रुद्रस्य कण्ठः किंवर्णीयः।

३५. गोपालाः अङ्गनाश्च किं पश्यन्ति।

## २४.२) द्वितीयो भागः

**नमो॑ऽस्तु नील॑ग्रीवाय सहस्रा॒क्षाय॑ मी॒ढुषे॑। अथो॒ ये अ॑स्य॒ सत्वा॑नो॒ऽहं तेभ्यो॑ऽक॒रं नम॑ः॥८॥**

**पदपाठः- नम॑ः अ॒स्तु॒ नील॑ग्रीवा॒येति॒नील॑ऽग्रीवाय स॒ह॒स्रा॒क्षायेति॑ सहस्रऽअ॒क्षाय॑ मी॒ढुषे॑ अथो॒त्त्यथो॑ ये अ॒स्य॒ सत्वा॑नः अ॒हम् तेभ्य॑ः अ॒क॒रम् नम॑ः।**

**अन्वयार्थः-** नीलग्रीवाय नीलकण्ठाय, सहस्राक्षाय सहस्राक्षिणे, मीढुषे वर्षनकारिणे, नमः स्तौमि अस्तु भवतु तावत्। अथो अनन्तरम्, अस्य रुद्रदेवस्य, ये सत्वानः यद्भृत्याः, अहम् तेभ्यः नमः अकरम् अहं तानुद्दिश्य नमस्कारं करोमि।

**व्याख्या** - नीलग्रीवाय नीलकण्ठाय रुद्राय नमोऽस्तु नमस्कारो भवतु। कीदृशाय। सहस्राक्षाय सहस्रमक्षीणि यस्य इन्द्रस्वरूपिणे। सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः। तारुणाय वा। अथो अपिच अस्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो नमस्कारमकरं करोमि। 'कृञ् कृतौ' शप् लङि उत्तमैकवचनम्॥८॥

**सरलार्थः** - अयं रुद्राध्यायस्य अष्टमो मन्त्रः। अस्यार्थो हि नीलकण्ठाय, सहस्रलोचनाय, वर्षणकर्त्रे तरुणाय रुद्राय मे नमः। तदनन्तरम् अस्य ये सेवकाः तेभ्यः अपि मे नमांसि।

**व्याकरणम्** -

● मीढुषे -मिमेहेति मीढ्वन्, तस्मै 'मिह सेचने' दाश्वान्साह्वान्मीढ्वांश्च (पा ६.१.१२) इत्यनेन क्वस्वन्तो निपातः।



**प्रमुञ्च धन्वनस्त्वमुभयोरात्न्योर्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप॥९॥**

**पदपाठः- प्रेति मुञ्च धन्वनः त्वम् उभयोः आत्न्योः ज्याम् याः च ते हस्ते इषवः परेति ताः भगवइतिभगऽवः वप॥**

**अन्वयार्थः** - भगवः हे भगवन्, त्वम् स्वयं रुद्रदेवः, धन्वनः धनुषः, उभयोः दिशयोः, अत्न्योः ज्याम् प्रमुञ्च मुक्तं कृत्वा, च एवम्, ते तव, हस्ते करे, याः इषवः यत्बाणाः सन्ति, ताः परावप दूरं निक्षिप।

**व्याख्या** - हे भगवः भगं षड्विधमैश्वर्यमस्यास्तीति भगवान्। 'मतुवसो रुः संबुद्धौ छन्दसि' (पा. ८/३/१) इति रुत्वम्। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तः। हे भगवन् धन्वनः धनुष उभयोरात्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु। याश्च ते तव हस्ते इषवः बाणाः ता इषूः परावप पराक्षिप॥९॥

**सरलार्थः** - अयं रुद्राध्यायस्य नवमो मन्त्रः। अस्यार्थो हि, हे भगवन्, त्वं धनुषः द्वयोः प्रान्तयोः ज्यां प्रकृष्टेन प्रमोचय। किञ्च ते पाणयोः ये बाणाः (वर्तन्ते), तान् अपि दूरं निक्षेपय।

**व्याकरणम्** -

- प्रमुञ्च- प्र-उपसर्गपूर्वकात् मुञ्चतेः लोटि मध्यमपुरुषैकवचनम्। मोचय इत्यर्थः।

**विज्यं धनुः कपर्द्दिनो विशल्यो बाणवाँ२॥ उत अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः॥१०॥**

**पदपाठः- विज्यमिति विऽज्यम् धनुः कपर्दिनः विशल्यऽइतिवि शल्यः**

**बाणवानिति बाणऽवान् उत अनेशन् अस्य याः इषवः आभुः अस्य निषङ्गधिः।**

**अन्वयार्थः**- कपर्दिनः जटाधारिनः, धनुः धनुष्, विज्यं ज्यारहितं, बाणवान् बाणेन युक्तो भवतु, विशल्यः बाणरहितः, उत अथवा, अस्य याः इषवः एतस्य याः बाणाः सन्ति ताः, अनेशन् नष्टीभवन्तु, अस्य निषङ्गधिः आभुः एतस्य तुणीरहितः भवतु।

**व्याख्या** - कपर्दो जटाजूटोऽस्यास्तीति कपर्दो रुद्रस्तस्य धनुः विज्यं मौर्वीरहितमस्तु। विगता ज्या यस्य तत्। उतापि बाणवान् बाणा अस्मिन् सन्तीति बाणवान् इषुधिः विशल्यो विफलोऽस्तु। बाणाग्रगतो लोहभागः शल्यम् इषुधिर्निरग्रबाणोऽस्तु। अस्य रुद्रस्य या इषवः ता अनेशन् नश्यन्तु 'णश



अदर्शने' नशेरत एत्वम् अङि वेत्येत्वम् पुषादित्वात् च्लेरङ्। अस्य रुद्रस्य निषङ्गधिः निषज्यत इति निषङ्गः खङ्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोशः स आभुः रिक्तः खङ्गरहितोऽस्तु। रुद्र अस्मान् प्रति न्यस्तसर्वशस्त्रोऽस्त्वित्यर्थः॥१०॥

**सरलार्थः** - अयं रुद्राध्यायस्य दशमो मन्त्रः। अस्यार्थो हि, जटाधारिणः (रुद्रस्य) धनुः ज्यारहितं भवतु। बाणवान् (त्वं) बाणरहितो भव। किञ्च अस्य (रुद्रस्य) ये बाणाः वर्तन्ते, ते अपि नष्टा भवन्तु। पुनः अयं खड्गरहितो भवतु। सर्वशस्त्ररहितो भव इति भावः।

**व्याकरणम् -**

- कपर्दिनः- कपर्दः अस्यास्तीति विग्रहे अत इनिठनौ इत्यनेन इनिप्रत्यये निष्पन्नस्य कपर्दिन्-शब्दस्य षष्ठ्येकवचने रूपम्।
- अनेशन्-नश्यन्तु इति 'णश अदर्शने' इतिधातोः नशेः अत अङि वेत्येत्वम् पुषादित्वात् च्लेरङ्।
- कपर्दिनः- उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् इत्यमरः।

**या ते॑ हेतिमी॑ढुष्टम हस्ते॑ बभूव॑ ते धनुः॑। तयाऽस्मान्विश्वतस्त्वम॑यक्ष्मया परि॑ भुज॥११॥**

**पदपाठः- या ते॑ हेतिः मीढुष्टम। मीढुस्तमेति॑मीढुःऽतम हस्ते॑ बभूव॑ ते धनुः॑ तया॑ अस्मान् विश्वतः॑ त्वम् अयक्ष्मया॑ परीति॑ भुज।**

**अन्वयार्थः**- मीढुष्टम हे कामवर्षिन्, ते तव, हस्ते करे, या धनुः यत्धनुष् हेतिः धनु-सम्बन्धी-आयुधः अस्ति, ते निरर्थकाः, तया अयक्ष्मया व्यधिरहितेन आयुधेन, त्वम् स्वयम् अस्मान् नः, विश्वतः परितः परिभुज पालयतु।

**व्याख्या** - अतिशयेन मीढ्वान्मीढुष्टमः 'तसौ मत्वर्थे' (पा. १/४/१९) इति भसंज्ञायां 'वसोः संप्रसारणम्' (पा. ६/४/३१) इति संप्रसारणम्। षत्वष्टुत्वे। हे मीढुष्टम सेकृतम वर्षुक, ते तव हस्ते या धनुः हेतिः धनूरूपमायुधं बभूव अस्ति। एकं तेपदं पादपूरणाय। तया धनूरूपया हेत्या विश्वतः सर्वतोऽस्मान् परिभुज परिपालय। भुजेर्विकरणव्यत्यये शप्रत्ययः। कीदृश्या तया। अयक्ष्मया नास्ति यक्ष्मा रोगो यस्यास्तया निरुपद्रवया दृढया अनुपद्रवकारिण्या वा॥११।

**सरलार्थः** - अयं रुद्राध्यायस्य एकादशः मन्त्रः। अस्यार्थो हि, हे प्रभूत-कामवर्षणकारिन्, ते हस्ते यत् धनुःसम्बन्धि आयुधं (वर्तते), तेन व्याधिरहितेन (आयुधेन) त्वं अस्मान् सर्वविधविघ्नेभ्यः रक्ष परिपालय वा।

**व्याकरणम् -**

- बभूव- भू-धातोः लिट्लकारे प्रथमपुरुषैकवचने रूपम्।



- मीढुष्टम-अतिशयेन मीढ्वान्मीढुष्टमः 'तसौ मत्वर्थे' (पा. १/४/१९) इति भसंज्ञायां 'वसोः संप्रसारणम्' (पा. ६/४/३१) इति संप्रसारणम्। षत्वष्टुत्वे।
- धनुः- षकारान्तः नपुंसकः धनुष-शब्दस्य रूपम्।



## पाठगतप्रश्नाः

३६. सहस्रं लोचनानि कस्य।

३७. उपासकैः दूरे किंनिक्षेपणाय प्रार्थ्यते रुद्रः।

३८. मीढस्तुमित्यस्य कः अर्थः।

३९. रुद्रस्य धनुःसम्बन्धि आयुधं कीदृशम्।

४०. कपर्दिनः इत्यस्य निर्वचनं कुरुत।

४१. अयक्ष्मा इत्यस्य अर्थं लिखत।

---

**परिं ते धन्वंनो हेतिरस्मान्वृंणक्तु विश्वतः। अथो य इंषुधिस्तवारे अस्मन्निधेंहि तम्॥१२॥**

**पदपाठः- परीतिं ते धन्वंनः हेतिः अस्मान् वृणक्तु विश्वतः अथो इत्यथों यः इषुधिरितींषुऽधिः तवं आरे अस्मत् नीतिं धेहि तम्।**

**अन्वयार्थः**- ते तव, धन्वनो हेतिः धनु-सम्बन्धि -आयुधः, विश्वतः परितः, नः अस्माकं, परिवृणक्तु त्यजन्तु। अथो अनन्तरं, तव यः इषुधिः अस्ति, तम् अस्मत् आरे निधेहि तमिषुदधीम् अस्माकं हस्ते स्थापनं कुरु।

**व्याख्या** - हे रुद्र, ते तव धन्वनो हेतिः। धनुःसंबन्धि आयुधं विश्वतः सर्वतोऽस्मान् परिवृणक्तु त्यजतु। मा हन्त्वित्यर्थः। 'वृजी वर्जने' रुधादित्वात् श्नम्। अथो अपिच यस्तव इषुधिस्तमस्मत्सकाशात् आरे दूरे निधेहि अस्मत्तो दूरे स्थापय॥१२॥

**सरलार्थः** - अयं रुद्राध्यायस्य द्वादशो मन्त्रः। अस्यार्थो हि, (हे रुद्र) तव धनुःसम्बन्धि आयुधं कस्याः अपि दिशः अस्मान् न स्पर्शं कुर्यात्। पुनः तव यो बाणः (अस्ति) तम् अस्माकं सकाशाद् दूरे नयतु।

**व्याकरणम्** -



- परि....वृणक्तु-, अत्र परिरिति उपसर्गः, मध्ये पदानां व्यवच्छेदः तु वैदिकप्रयोगत्वात् साधुः। वृणक्तु इति वृजी वर्जने इतिधातोः रुधादित्वात् श्नम्।
- इषुधिः- तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः इत्यमरः।

**अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे। निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव॥१३॥**

**पदपाठः- अवतत्येत्यवऽतत्य धनुः त्वम् सहस्राक्षेतिसहस्र अक्ष शतेषुध इति शत इषुधे निशीर्य्येति निऽशीर्य शल्यानाम् मुखा शिवः नः सुमनाइतिसुऽमनाः भव।**

**अन्वयार्थः**- सहस्राक्ष हे सहस्रलोचन, शतेषुधे शतेषुधियुक्ते त्वम् धनुः धनुष् अवतत्य आरोपितं न कृत्वा, शनल्यानां बाणसमूहानां, मुखा मुखान् निशीर्य शीर्णं कृत्वा, नः अस्मान् प्रति, शिवः शान्तः, सुमनाः शोभनमनस्कः भव।

**व्याख्या** - सहस्रमक्षीणि यस्य शतमिषुधयो यस्य हे सहस्राक्ष, हे शतेषुधे, त्वं नोऽस्मान् प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव। अनुगृहाणेत्यर्थः। किं कृत्वा। धनुरवतत्य अपज्याकं कृत्वा शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा इत्यर्थः॥१३॥

**सरलार्थः** - अयं रुद्राध्यायस्य त्रयोदशो मन्त्रः। अस्यार्थो हि, हे सहस्रलोचन, हे बहुबाणहस्तः (रुद्र), त्वं धनुषं न आरोप्य किञ्च बाणानां सर्वेषां तीक्ष्णाग्रभागं शीर्णं कृत्वा अस्माकं प्रति शान्तः तथा शोभनमनस्को भव।

**व्याकरणम्** -

- निशीर्य- 'शॄ हिंसायाम्' 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' 'ऋत इद्-धातोः' (पा. ७/१/१००) इति।
- शतेषुधे- शतम् इषुधयो यस्य स शतेषुधिः। हे शतबाणयुत इत्यर्थः।

**नमस्त आयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने॥१४॥**

**पदपाठः- नमः ते आयुधाय अनाततय धृष्णवे उभाभ्याम् उत ते नमः बाहुभ्यामितिबाहुऽभ्याम् तव धन्वने॥**

**अन्वयार्थः**- ते तव, अनातताय अनारोपिताय, धृष्णवे विष्णवे, आयुधाय नमः आयुधस्य उद्देश्ये नौमि, उत अथवा, ते तव, उभाभ्याम् बाहुभ्यां हस्ताभ्यां नमः स्तौमि, तव धन्वने धनुषे च।

**व्याख्या** - हे रुद्र, ते तवायुधाय नमोऽस्तु बाणाय नतिरस्तु। कीदृशाय। अनातताय धनुष्यनारोपिताय। धृष्णवे धर्षणशीलाय। धृषेः क्नुप्रत्ययः। रिपून् हन्तुं प्रगल्भाय। उतापि च ते तवोभाभ्यां बाहुभ्यां नमः तव धन्वने धनुषेऽपि नमोस्तु। तस्यापि विशेषणम् अनातताय अवतारितमौर्वीकाय॥१४॥

**सरलार्थः** - अयं रुद्राध्यायस्य चतुर्दशो मन्त्रः। अस्यार्थो हि, (हे रुद्र) तव अनारोपितेभ्यः पराक्रमशालिभ्यः आयुधेभ्यः मे नमः। पुनः तव बाहुभ्यां धनुषे च मे नमः।

**व्याकरणम्** -

- उभाभ्याम्-उभशब्दः नित्यद्विवचनान्तः।
- उत- अव्ययं पदमिदम्। अर्थाः-अत्यर्थम्। विकल्पः। समुच्चयः। वितर्कः। प्रश्नः। पादपूरणम्।



## पाठगतप्रश्नाः

४२. निधेहि इत्यस्य अर्थं लिखत।

४३. धन्वनो हेतिः इत्यस्य अर्थः कः।

४४. धनुष्ट्वमित्यस्य सन्धिं विच्छेदयतु।

४५. निशीर्य इत्यत्र कः प्रत्ययः।

४६. उपासकाः रुद्रस्य किमुद्दिश्य प्रणमति।

## २४.३) रुद्रदेवतायाः स्वरुपं वैशिष्ट्यञ्च

शुक्लयजुर्वेदे रुद्राध्याये रुद्रदेवतायाः स्वरूपं तथा वैशिष्ट्यं विस्तारेण समालोचितम्। शैवधर्मस्य उत्पत्तेः तथा प्रसारस्य इतिहासे शुक्लयजुर्वेदस्य अतीव महत्त्वं वर्तते इत्यत्र नास्ति सन्देहलेशावसरः। शुक्लयजुर्वेदसंहितायाः षोडशः अध्यायः रुद्राध्यायनाम्ना प्रसिद्धः। रुद्रशब्दस्य अर्थः भीषणं भयङ्करं वा। पापिनो नरान् दुःखभोगेन रोदयति इति रुद्रः। किञ्च रुत् दुःखं द्रावयति रुद्रः। यद्वा 'रु गतौ' ये गत्यर्थस्ते ज्ञानार्थाः। रवणं रुत् ज्ञानं राति ददाति रुद्रः ज्ञानम् भावे क्विप् तुगागमः। रुत् ज्ञानप्रदः इति वा।

ऋग्वेदे रुद्रः अन्तरीक्षस्थानस्य देवः, मरुतां पितेति प्रसिद्धः। शुक्लयजुर्वेदस्य चतुर्षु सूक्तेषु तथा एकस्य सूक्तस्य भागमात्रे च सोमदेवेन सह तस्य स्तुतिः दृश्यते। ऋग्वेदे अपि रुद्रस्य भयङ्करं रूपं बहुषु स्थलेषु वर्ण्यते। वैदिकदेवतायाः बाह्यप्रतीकं प्रत्येकम् एकम् एकं प्राकृतिकघटनरूपम्। तस्मात् रुद्रदेवस्य प्रतीकं वज्रः इति। अतः वज्रस्य अधिष्ठात्री-देवता रुद्रः जगत्प्रपञ्चस्य स्वामिरूपेण प्रकीर्तितः अभूत्। वज्रस्य उत्पन्नकाले अर्थात् वज्रपतनकाले तस्य भीषणशब्देन त्रिभूवनं भयभीतं भवति। इयमेव घटना रूपकावरणेन उच्यते यत् रुद्रः जन्म-क्षणे भीषणचित्कारं करोति। वज्रेण सह भीषण-विनाशशब्दौ



नित्यं संम्बद्धौ। तस्मात् तस्य अधिष्ठाता देवः रुद्रः भीषणः गर्जनशीलश्च। ऋग्वेदे रुद्रदेवताम् उद्दिश्य स्तुतिनिवेदकसूक्ते सर्वदा भयानकरूपेण संहारकरूपेण वा अयम् आविर्भवति। तस्य रुद्रस्य रुद्ररूपदर्शनेन साकं तस्य कल्याणमयरूपस्य अपि वर्णना वेदे बहुत्र प्राप्यते। यथा सः वैद्यश्रेष्ठः इत्यपि श्रूयते। तथा हि आम्नातं -**भिषक्तं त्वां भिषजां शृणोमि**(ऋ २।३३।४)। ऋग्वेदस्य कस्यपि एकस्य मन्त्रे (२।३३।२) रुद्रम् उद्दिश्य प्रार्थना अपि विहिता, तथा ह्याम्नातं -**शतं हिमा अशीय भेषजेभिः** इति अर्थात् हे रुद्रदेव येन अहं तव प्रदत्तेन भिषजा शतं वर्षाणि जीवामि इति। भीषणस्य रुद्रस्य वेदे चिकित्सकत्वेन वर्णनायां तस्य कल्याणरूपस्यापि परिचयः प्राप्यते। तस्मादेव वेदे भेषज इति जलाष इति च शब्दद्वयं रुद्रसम्पर्के प्रयुक्तो भवति।

रुद्रदेवस्य चारित्रिकवर्णना अपि ऋग्यजुर्वेदभेदेन भिन्ना भवति। यथा ऋग्वेदे रुद्रस्य संहारत्वेन अधिकवर्णना अस्ति। अपि च यजुर्वेदे **घोरः घोरतरः** तथा **शिवः शिवतरः** इति। किञ्च सः यजुर्वेदे शिव-शङ्कर-मयस्कर-शम्भव-मयोभवप्रभृतिभिः कल्याणवाचकसंज्ञाभिः स्तूयते। प्रत्येकं विशेषणवाचकशब्दस्यार्थः कल्याणजनितसुखम् इति। यः रुद्रः स एव शिवः। किन्तु शुक्लयजुर्वेदे शिवरुद्रयोः मध्ये वैपरीत्यम् सदपि तस्य समन्वयः च दृश्यते। न केवलम् अर्याणाम् अपि च अनार्याणाम् अन्त्यजानां च देवतारूपेन सः रुद्रः वर्णितः। न केवलम् उच्चवर्णानाम्, अपि तु कुलालानां लौहकाराणां व्याधादीनामपि सः देवः पालकश्च। न केवलं मनुष्याणाम् अपि तु समस्तप्राणीनां यथा गवाम् अशवानां शुनां च सः एव पालकः। न केवलं सज्जनानाम् अपि तु असच्चौर-लुण्ठकानामपि देवता पालकश्च। तस्मात् तस्मिन् रुद्रे बहुविपरीतधर्माणाम् एकत्र समावेशः दृश्यते। किञ्च सः आर्य-अनार्याणां सतामसतां सर्वेषाम् उपास्यः। एकत्र सः शिवः शान्तः पालकः उपास्यश्च, अपरत्र सः रुद्रः भीषणः संहारकश्च इति। शुक्लयजुर्वेदे रुद्रः सगुणदेवान् अतिक्रम्य निर्गुणपरमेश्वरेण परिणतः अभवत्।

रुद्राध्याये अनार्यलुण्ठकान्त्यजादीनाम् उपासकत्वेन पालकत्वेन रुद्रः वर्णितः अस्ति। अतः आदौ सः रुद्रः अनार्याणामुपास्यः आसीत् अनन्तरञ्च आर्यगणैः सः पूजितः, अतः सः आर्यानामनार्याणाम् उपास्यः इति केचन पण्डिताः। परन्तु ऋग्वेदे रुद्रः सम्पूर्णः आर्यदेवः। केभ्यश्चन ब्राह्मणग्रन्थेभ्यः ज्ञायते आर्यानार्योभयधर्मे रुद्रदेवस्य पूजा प्रचलिता आसीत्।

शुक्लयजुर्वेदे रुद्राध्यायः काव्यसौन्दर्येण मण्डितः। अध्यायेऽस्मिन् रुद्रः पशुपति-शम्भु-शिव-शङ्कर-गिरिश- गिरिशन्त- शितिकण्ठ-नीलग्रीव-कपर्दि-प्रभृतिभि बहुभिः नामभिः अलंकारितः। ऋग्वेदे रुद्रः वज्रस्य वातस्य वा देवता। शुक्लयजुर्वेदे न केवलं वज्रस्य वातस्य, अपि तु सूर्येण साकं रुद्रस्य अभिन्नत्वं नैकन मन्त्रेण प्रतिपादितम्। तत्र रुद्रः सूर्यस्य एकांशः इति। तस्मात् सूर्योदयास्तचलानुसारेण प्रत्येकम् अपि मुहूर्तं पृथक् पृथङ्नामभिः तस्य स्तुतिः। सूर्योदयकाले अस्ताचलसमये सूर्यस्य सहस्रश्मयः स्पष्टीभवन्ति। ऋषिरूपस्य कवेः कल्पनया सूर्यविम्बः मस्तक इव किञ्च चतुर्धाप्रसारितरश्मयः दीर्घजटा इव इति। कपर्दी जटाशब्दवाची। यस्य जटा अस्ति सः कपर्दी इत्युच्यते। तस्मात् सूर्येण साकम् एकात्मभूतस्य रुद्रस्य अन्यं नाम कपर्दी इति (१६।१०)। (रुद्राध्यायस्य सप्तममन्त्रे काव्यसौन्दर्ये)। अस्तगामिनः सूर्यरूपात् रुद्रस्य नीलग्रीव इति नाम्नः उत्पत्तिः। अस्ताचलसमये आकाशं वर्णक्रीडायां



निमज्जितं भवति। तदा सूवर्णमण्डितः सूर्यः पश्चिमायां दिशि शोभितो भवति। सूर्यविम्बस्य मध्ये नीलवर्णरेखा एका लक्ष्यते। मध्यभागः शरीरस्य कण्ठसदृशः। ग्रीवः कण्ठपर्यायवाची। ग्रीवस्य नीलवर्णत्वात् सूर्यः नीलग्रीवो नीलकण्ठ इति नाम्ना प्रसिद्धः इति। अतः सूर्येण साकम् अभिन्नात्मनः रुद्रस्यापि नाम नीलग्रीवो नीलकण्ठ इति वा। तथा हि सप्तममन्त्रे

असौ योऽवसर्पति नीलग्रीवो विलोहितः।

उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मडयति नः॥

एवं सूर्यरूपरुद्रदेवतायाः अस्ताचलसमये उद्बुद्धः रम्यः मुहूर्तः आकृष्यमाणो भवति। तदा गावः गोष्ठं प्रति प्रत्यागच्छन्ति। गवां प्रत्यागमनेन साकम् आगतः गवां पालकः गोपालः अपि सूर्यरूपेण रुद्रेण सृष्टस्य परिवेशेन आकृष्टं भूत्वा तं रुद्रदेवं पश्यति। समयोऽयं ग्राम्यरमणीनाम् अपि जलानयनसमयः। ताः रमण्यः जलानयनसमये आकृष्टं भूत्वा रुद्रदेवस्य अपूर्वलीलां पश्यन्ति। रुद्राध्याये काव्यरूपेण एतानि मन्त्राणि काव्यकल्पनया अलंकारेण च अलंकृतानि सन्ति इति।



## पाठसारः

विशेषतः शैवधर्मस्य प्रचारः अस्मिन् अध्याये विद्यते। तस्य वैशिष्ट्यं स्वरूपश्चापि प्रायशः विस्तरेण अत्र वर्णितः। सः रुद्रः भयङ्करः आसीत्। जन्मसमये स्वयमेव भीषणं क्रन्दति अपि च तत् शब्देन अखिलभूनं यः कम्पयति सः रुद्रः। ऋग्यजुर्वेदभदात् तस्य रुद्रस्य वर्णना अपि पृथक् भवति। वैदिकदेवतायाः बाह्यप्रतीकं प्रत्येकम् एकम् एकं प्रकृतिकघटना। तस्मात् रुद्रदेवस्य प्रतीकं वज्र इति। रुद्रदेवः सर्वदा न भयङ्करः। तस्य रुद्ररेण सहितं तस्य कल्याणमयरूपमपि अस्ति। यथा सः वैद्यराजा। सः वैद्यरूपेण सर्वान् अरोग्यं ददाति। शिवः, शङ्करः, मयस्करः, शम्भुः, मयोभवः चेति तस्य कल्याणवाचकशब्दाः इति। सः न केवलम् आर्यानार्याणां मनुष्याणामपि तु समस्तप्राणीनाम् उपास्यः पालकश्चेति। सूर्यास्तचलसमये आकाशं रक्तरञ्जितं भवति। तदा सूर्यविम्बस्य मध्यभागे एका विशिष्टा नीलवर्णरेखा प्रतीयते। साधारणतः शरीरस्य मध्यमभागसदृशः कण्ठः। सूर्यस्यापि मध्यभागस्य कण्ठस्य नीलवर्णत्वेन प्रतीयमानत्वात् सूर्यस्य नाम नीलकण्ठः। सूर्येण साकं रुद्रस्य अभेदप्रतिपादनत्वात् रुद्रस्यापि नाम नीलकण्ठः। अधुना आदित्यरूपेण रुद्रः स्तूयते। योऽसौ रुद्रः ताम्रवर्णः अरुणवर्णः पिङ्गलवर्णः सुमङ्गलश्च तथा येऽस्य असंख्या अंशवः तेषां क्रोधं वयं भक्त्या निवारयामः। आदित्यरुपो रुद्रः सर्वदैव दर्शनीयः। सूर्यास्तचलसमये सूर्यदेवस्य रुद्रदेवस्य वा लीललायां महितं भूत्वा गोपालकाः ग्राम्यरमण्यः च रुद्रदेवस्य लीलां पश्यन्ति इति। नीलग्रीवाय सहस्राक्षाय वर्षकाय रुद्राय तथा तस्य गणेभ्यश्च वयं पणताः। हे भगवन् रुद्रदेव स्वकीयं धनुः ज्यामुक्तं कुरु, स्वहस्तधृतान् वाणान् च पराक्षिय। रुद्रस्य धनुः बाणाः खड्गश्च विफलीभवतु। सः अस्मान् प्रति न्यस्तसर्वशस्त्रः अस्तु। आयुधधारणनिमित्तं रुद्रस्य रौद्रं रूपम् अतिभयानम्। अत एव अस्मान् प्रति यथा सः शान्तः शोभनमनस्कश्च भवेत् तदर्थं प्रार्थना विधीयते। हे रुद्रदेव बालं तरुणं गर्भस्थं शिशुम्, अस्माकं गुरुपितृव्यादिकं, पितरं मातरं स्वजनान् च न विनश्येः। सर्वान् प्रति त्वं सदैव अनुग्रहशीलो भव इति पुनः पुनः प्रार्थ्यते इति शम्।





## पाठान्तप्रश्नाः

१. रुद्रस्वरुपं लिखत।
२. रुद्रस्य वैशिष्ट्यं लिखत।
३. सूर्यस्य नीलकण्ठ इति नाम्नः सार्थकं प्रतिपादयत।
४. रुद्रसूक्तस्य सारं लिखत।
५. नमस्ते रुद्र ....इति मन्त्रं व्याख्यात।
६. यामिषु गिरिशन्त....इति मन्त्रं व्याख्यात।
७. शिवेन वचसा त्वा....इति मन्त्रं व्याख्यात।
८. नमोऽस्तु नीलग्रीवाय....इति मन्त्रं व्याख्यात।
९. विज्यं धनुः....इति मन्त्रं व्याख्यात।
१०. नमस्त आयुधायानातताय....इति मन्त्रं व्याख्यात।
११. परि ते धन्वनो....इति मन्त्रं व्याख्यात।
१२. या ते हेतिर्मीढुष्टम....इति मन्त्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

१. मङ्गलमयं भीतिशून्यं पुण्यस्वरूपस्य प्रकाशकं च।
२. शत्रुणां नाशाय।
३. जगत् अयक्ष्मं तथा शोभनमनस्कं करणाय।
४. रुद्रः।
५. राक्षसीसमूहः इति।
६. अरुणः ताम्रः बभ्रुश्च।
७. सूर्यः।
८. नीलवर्णः।
९. अस्ताचलगमनशीलं सूर्यम्।
१०. रुद्रस्य।
११. बाणान्।
१२. प्रभूतकामवर्षणशीलः इत्यर्थः।
१३. व्याधिरहितम्।



१४. कपर्दः अस्यास्तीति विग्रहे अत इनिठनौ इत्यनेन इनिप्रत्यये निष्पन्नस्य कपर्दिन्-शब्दस्य षष्ठ्येकवचने रूपम्।

१५. रोगहीनः इत्यर्थः।

१६. स्थापयतु इति।

१७. धनुःसम्बन्धि आयुधमिति।

१८. धनुः+त्वम्।

१९. ल्यप्-प्रत्ययः।

२०. अनारोपिताय प्रगल्भायुधाय तथा बाहुभ्यां धन्वने च।

## ॥ इति चतुर्विंशः पाठः ॥



२५

# ॥पृथिवीसूक्तम्॥

## प्रस्तावना

ऋषिभिः दृष्टानां शब्दानाम् आख्या वेद इति। ते च शब्दाः यथायथम् मौखिकपरम्परया सहस्रशः वर्षाणि आस्तिकैः सुरक्षिताः। यतो हि संस्कृतसाहित्ये वेदा तुङ्गस्थानम् अधिकुर्वन्ति। भारते धर्मव्यवस्था वेदायत्ता एव। वेदान् अवलम्ब्य एव स्मृत्यादयः प्रणीताः सन्ति। वेदाः स्वतः प्रमाणम्। स्मृत्यादयः तु वेदमूलकतया प्रमाणत्वेन अङ्गीकृताः। अत एव श्रुतिस्मृत्योः विरोधे श्रुतिरेव गरीयसी। न केवलं धर्ममूलकतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतया अपि। प्राचीनानि धर्मसमाज-व्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते। विद्यन्ते धर्मादयः पुरुषार्थाः यैः ते वेदाः इति। सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह। इष्टप्राप्त्यनिष्टपरिहारयोः अलौकिकम् उपायं यो वेदयति स वेद इति। तथाहि उक्तम् -

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥" इति।

वेदाः चत्वारः भवन्ति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति। प्रकृतपाठे अस्मिन् अर्थववेदे अन्तर्गतस्य पृथिवीसूक्तं वर्ण्यते। यथा इन्द्रादिसूक्तेषु इन्द्रादिदेवाः विविधरूपेण वर्णिताः तथैव पृथिवीसूक्ते अपि पृथिवी विविधरूपेण वर्णिता। वस्तुतः अथर्ववेदीयपृथिवीसूक्ते (१२.१) ६३ मन्त्राः सन्ति। तेषु मन्त्रेषु विंशतिः मन्त्राः अस्मिन् पाठे प्रदत्ताः सन्ति। अस्य सूक्तस्य अथर्वा ऋषिः, भूमिः पृथ्वी च देवते। अथर्वा ऋषिः पृथिवीं विविधरूपेण वर्णितवान्।



## उद्देश्यानि

एतं पाठं पठित्वा भवान्-

- पृथिवीसूक्तस्य संहितापाठं संस्वरम् ज्ञातुं शक्नुयात्।
- पृथिवीसूक्तस्य पदपाठं ज्ञातुं शक्नुयात्।
- पृथिवीसूक्तस्य मन्त्राणाम् अन्वयं कर्तुम् समर्थो भविष्यति।
- ऋजुतया पृथिवीसूक्तस्य अर्थम् अध्येष्यते।
- पृथिवीसूक्तस्य केषाञ्चित् शब्दानाम् व्याकरणं ज्ञास्यति।



- पृथिव्याः विविधरूपेण वर्णनं कर्तुं शक्नुयात्।
- वैदिकशब्दान् ज्ञातुं शक्नुयात्।
- वैदिकलौकिकशब्दयोः भेदं कर्तुं शक्नुयात्।

## २५.१) मूलपाठः

**सत्यं बृहदृतमुग्रं दीक्षा तपो**
**ब्रह्म यज्ञः पृथिवीं धारयन्ति।**
**सा नो भूतस्य भव्यस्य पत्न्यु-**
**रुं लोकं पृथिवी नः कृणोतु॥१॥**

**असंबाधं बध्यतो मानवानां**
**यस्या उद्वतः प्रवतः समं बहु।**
**नानावीर्या ओषधीर्या बिभर्ति**
**पृथिवी नः प्रथतां राध्यतां नः॥२**

**यस्यां समुद्र उत सिन्धुरापो**
**यस्यामन्नं कृष्टयः संबभूवुः।**
**यस्यामिदं जिन्वति प्राणदेजत्**
**सा नो भूमिः पूर्वपेये दधातु॥३**

**यस्याश्चतस्रः प्रदिशः पृथिव्या**
**यस्यामन्नं कृष्टयः संबभूवुः।**
**या बिभर्ति बहुधा प्राणदेजत्**
**सा नो भूमिर्गोष्वप्यन्ने दधातु॥४**

**यस्यां पूर्वे पूर्वजना विचक्रिरे**
**यस्यां देवा असुरानभ्यवर्तयन्।**
**गवामश्वानां वयसश्च विष्ठा**
**भगं वर्चः पृथिवी नो दधातु॥५**



विश्वंभरा वसुधानी प्रतिष्ठा
हिरण्यवक्षा जगतो निवेशनी।
वैश्वानरं बिभ्रती भूमिरग्नि-
मिन्द्रऋषभा द्रविणे नो दधातु॥६

यां रक्षन्त्यस्वप्ना विश्वदानीं
देवा भूमिं पृथिवीमप्रमादम्।
सा नो मधु प्रियं दुहा-
मथो उक्षतु वर्चसा॥७

यार्णवेधि सलिलमग्र आसीद्

यां मायाभिरन्वचरन् मनीषिणः।
यस्या हृदयं परमे व्योऽमन्त्
सत्येनावृतममृतं पृथिव्याः।
सा नो भूमिस्त्विषिं बलं
राष्ट्रे दधातूत्तमे॥८

यस्यामापः परिचराः समानी-
रहोरात्रे अप्रमादं क्षरन्ति।
सा नो भूमिर्भूरिधारा पयो-
दुहामथो उक्षतु वर्चसा॥९

यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे।
इन्द्रो यां चक्र आत्मनेनमित्रां शचीपतिः।
सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः॥१०



गिरयस्ते पर्वता हिमवन्तोरण्यं ते पृथिवि स्योनमस्तु।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम्।
अजीतोहतो अक्षतोध्यष्ठां पृथिवीमहम्॥११

यत् ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वऽ: संबभूवुः।तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रो अहं पृथिव्याः। पर्जन्यः पिता स उ नः पिपर्तु॥१२॥

यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात्। सा नो भूमिर्वर्धयद् वर्धमाना॥१३॥

यो नो द्वेषत्पृथिवि यः पृतन्याद्योऽभिदासान् मनसा यो वधेन।
तं नो भूमे रन्धय पूर्वकृत्वरि॥१४

त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य उद्यन्त्सूर्यो रश्मिभिरातनोति॥१५॥

ता नः प्रजाः सं दुह्रतां समग्रा वाचो मधु पृथिवि धेहि मह्यम्॥१६॥

विश्वस्वंऽ मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम्।शिवां स्योनामनु चरेम विश्वहा॥१७॥

महत्सधस्थं महती बभूविथ महान् वेग एजथुर्वेपथुष्टे।
महांस्त्वेन्द्रो रक्षत्यप्रमादम्।
सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो द्विक्षत कश्चन॥१८॥

अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु।अग्निरन्तः पुरुषेषु गोष्वश्वेष्वग्नयः॥१९॥



अग्निर्दिव आ तपत्यग्नेर्देवस्योर्वन्तरिक्षम्।अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम्॥२०॥

## २५.२) इदानीं मूलपाठम् अवगच्छाम

**सत्यं बृहदृतमुग्रं दीक्षा तपो**
**ब्रह्म यज्ञः पृथिवीं धारयन्ति।**
**सा नो भूतस्य भव्यस्य पत्न्यु-**
**रुं लोकं पृथिवी नः कृणोतु॥१॥**

**पदपाठः- सत्यम्। बृहद्। ऋतम्। उग्रम्। दीक्षा। तपः। ब्रह्म। यज्ञः। पृथिवीम्। धारयन्ति॥ सा। न। भूतस्य। भव्यस्य। पत्नी। उरुम्। लोकम्। पृथिवी। नः। कृणोतु॥ १॥**

**अन्वयः-** सत्यं बृहत् ऋतम् उग्रं दीक्षा तपः यज्ञः पृथिवीं धारयन्ति। भूतस्य भव्यस्य पत्नी सा नः पृथिवी नः लोकम् उग्रं करोतु।

**सरलार्थः-** महत्सत्यादयः पृथिवीं धारयन्तः सन्ति। अतीतानागतानां पत्नी पृथिवी अस्माकं कृते महल्लोकं प्रयच्छेत्।

**व्याकरणम्-**

- ऋतम्- ऋ-धातोः क्तप्रत्यये।
- धारयन्ति- धृ-धातोः णिचि लटि प्रथमपुरुषबहुवचने।
- कृणोतु- कृ-धातोः लोटि प्रथमपुरुषैकवचने वैदिकं रूपम्।

**असंबाधं मध्यतो मानवानां**
**यस्या उद्वत प्रवतः समं बहु।**
**नानावीर्या ओषधीर्या बिभर्ति**
**पृथिवी नः प्रथतां राध्यतां नः॥२॥**



**पदपाठः- असम्ऽबाधम्। मध्यतः। मानवानाम्। यस्याः। उत्ऽवतः। प्रऽवतः। समम्। बहु॥ नानाऽवीर्याः। ओषधीः। या। बिभर्ति। पृथिवी। नः। प्रथताम्। राध्यताम्। नः॥ २॥**

**अन्वयः-** यस्याः बहु उद्वतः प्रवतः समं मानवानां मध्यतः असम्बाधं याः नानावीर्याः ओषधीः बिभर्ति, पृथिवी नः प्रथताम्, नः राध्यताम्।

**सरलार्थः-** या अबद्धापि मानवान् बध्नाति, यस्याः भूमिः वैचित्रपूर्णा, या बहुशक्तिसम्पन्नौषधिवृक्षान् धारयति, सा पृथिवी अस्माकं समीपे विस्तीर्णा भवतु, अस्माकं कृते पुष्पैः शोभिता भवतु।

**व्याकरणम्-**

- प्रथताम्- प्रथ्-धातोः लोटि प्रथमपुरुषैकवचने।
- राध्यताम्- राध्-धातोः लोटि प्रथमपुरुषैकवचने।
- नानावीर्याः- नाना वीर्याणि यासां ताः इति बहुव्रीहिसमासः।
- बिभर्ति- भृ-धातोः लटि प्रथमपुरुषैकवचने।

**यस्यां समुद्र उत सिन्धुरापो**
**यस्यामन्नं कृष्टयः संबभूवुः।**
**यस्यामिदं जिन्वति प्राणदेजत्**
**सा नो भूमिः पूर्वपेये दधातु॥३॥**

**पदपाठः- यस्याम्। समुद्रः। उत। सिन्धुः। आपः। यस्याम्। अन्नम्। कृष्टयः। सम्ऽबभूवुः॥ यस्याम्। इदम्। जिन्वति। प्राणत्। एजत्। सा। नः। भूमिः। पूर्वऽपेये। दधातु॥३॥**

**अन्वयः-** यस्यां समुद्रः सिन्धुः उत आपः, यस्याम् अन्नं कृष्टयः सम्बभूवुः, यस्याम् इदं प्राणत् एजत् जिन्वति, सा भूमिः नः पूर्वपेये दधातु।

**सरलार्थः-** यत्र समुद्राः नद्यः जलानि सन्ति, यत्र शस्यादयः कर्षणकारिणः मानवाः सम्भूताः भवन्ति, यत्र प्राणशीलाः गतिशीलाः(कम्पनशीलाः) जीवन्ति, सा भूमिः अस्मान् प्रथमपानसदृशे आनन्दे प्रस्थापयतु।

**व्याकरणम्-**



- सम्बभूवुः- सम्पूर्वकात् भू-धातोः लिटि प्रथमपुरुषबहुवचने।
- प्राणत्- प्रपूर्वकात् अन्-धातोः शतृप्रत्यये।
- एजत्- एज्-धातोः शतृप्रत्यये।
- जिन्वति- जिन्द्-धातोः लटि प्रथमपुरुषैकवचने।
- दधातु- धा-धातोः लोटि प्रथमपुरुषैकवचने।

**यस्याश्चतस्रः प्रदिशः पृथिव्याः**
**यस्यामन्नं कृष्टयः संबभूवुः।**
**या बिभर्ति बहुधा प्राणदेजत्**
**सा नो भूमिर्गोष्वप्यन्ने दधातु॥४॥**

**पदपाठः- यस्याः। चतस्रः। प्रऽदिशः। पृथिव्याः। यस्याम्। अन्नम्। कृष्टयः। सम्ऽबभूवुः॥ या। बिभर्ति। बहुऽधा। प्राणत्। एजत्। सा। नः। भूमिः। गोषु। अपि। अन्ने। दधातु॥४॥**

**अन्वयः-** यस्याः पृथिव्याः चतस्रः प्रदिशः, यस्याम् अन्नं कृष्टयः सम्बभूवुः, या प्राणत् एजत् बहुधा बिभर्ति, मा भूमिः नः गोषु अपि अन्नेषु दधातु।

**सरलार्थः-** यस्याः पृथिव्याः चतस्रः दिशः सन्ति, यस्यां पृथिव्याम् शस्यानि उत्पन्नानि मनुष्याश्च उत्पन्नाः, या पृथिवी प्राणशीलान् गतिशीलान्(कम्पशीलान्) च विविधप्रकारेण धारयति, सा पृथिवी अस्मान् गवादिपशुषु शस्ये च प्रस्थापयतु।

**व्याकरणम्-**

- कृष्टयः- कृष्-धातोः भावे क्तिन्प्रत्यये प्रथमाबहुवचने रूपम्।
- संबभूवुः- सम्पूर्वकभू-धातोः लिटि प्रथमपुरुषबहुवचने।

**यस्यां पूर्वे पूर्वजना विचक्रिरे**
**यस्यां देवा असुरानभ्यवर्तयन्।**
**गवामश्वानां वयसश्च विष्ठा**
**भगं वर्चः पृथिवी नो दधातु॥५॥**



**पदपाठः- यस्याम्। पूर्वे। पूर्वऽजनाः। विचक्रिरे। यस्याम्। देवाः। असुरान्। अभिऽअवर्तयन्। गवाम्। अश्वानाम्। वयसः। च। विऽस्था। भगम्। वर्चः। पृथिवी। नः। दधातु॥५॥**

**अन्वयः-** यस्यां पूर्वे पूर्वजनाः विचक्रिरे यस्यां देवाः असुरान् अभ्यवर्तयन्। पृथिवी गवाम् अश्वानां वयसः च विष्ठा, न भगं वर्चः दधातु।

**सरलार्थः-** यस्यां पृथिव्यां पूर्वजाः विविधकर्माणि अकुर्वन्, यस्यां पृथिव्यां देवाः असुरान् पराजीतवन्तः, या पृथिवी गवादीनां विचित्रम् आश्रयस्थानम्, सा पृथिवी अस्मभ्यम् ऐश्वर्यं तेजश्च प्रयच्छतु।

**व्याकरणम्-**

- विचक्रिरे- विपूर्वकात् कृ-धातोः लिटि प्रथमपुरुषबहुवचने।
- अभ्यवर्तयन्- अभिपूर्वकात् वृ-धातोः णिचि लङि प्रथमपुरुणबहुवचने।
- विष्ठा- विपूर्वकात् स्था-धातोः कप्रत्यये।

**विश्वंभरा वसुधानी प्रतिष्ठा**
**हिरण्यवक्षा जगतो निवेशनी।**
**वैश्वानरं बिभ्रती भूमिरग्नि-**
**मिन्द्रऋषभा द्रविणे नो दधातु॥६॥**

**पदपाठः- विश्वम्ऽभरा। वसुऽधानी। प्रतिऽस्था। हिरण्यऽवक्षा। जगतः। निवेशनी॥ वैश्वानरम्। बिभ्रती। भूमिः। अग्निम्। इन्द्रऽऋषभा। द्रविणे। नः। दधातु॥६॥**

**अन्वयः-** विश्वंभरा, वसुधानी, प्रतिष्ठा, हिरण्यवक्षा, जगतः निवेशनी, इन्द्रऋषभा भूमिः वैश्वानरम् अग्निं बिभ्रती नः द्रविणे दधातु।

**सरलार्थः-** विश्वस्य भरणपोषणकारिका, धनस्य धारिका, समेषाम् आश्रयस्थानं, हृदये सुवर्णधारिका, जगतः निवासस्थानम् अथवा जगति उत्पन्नानां प्राणिनाम् शैथिल्यदानकारिका, इन्द्रेण रक्षिता पृथिवी वैश्वानरं धारयन्ती अस्मान् धने प्रस्थापयतु।

**व्याकरणम्-**

- विश्वम्भरा- विश्वं भरतीति या सा विश्वम्भरा।
- वसुधानी- वसूपपदात् धा-धातोः ल्युटि ङीपि।



- हिरण्यवक्षा- हिरण्यं वक्षे यस्याः सेति बहुव्रीहिः।
- निवेशनी- न्युपपदात् विश्-धातोः ल्युटि ङीपि।
- विभ्रती- विपूर्वकभृ-धातोः शतृप्रत्यये ङीपि।
- इन्द्रऋषभा- इन्द्रः ऋषभः यस्याः सा इति बहुव्रीहिः।

**यां रक्षन्त्यस्वप्ना विश्वदानीं**
**देवा भूमिं पृथिवीमप्रमादम्।**
**सा नो मधु प्रियं दुहा-**
**मथो उक्षतु वर्चसा॥७॥**

**पदपाठः- याम्। रक्षन्ति। अस्वप्नाः। विश्वऽदानीम्। देवाः। भूमिम्। पृथिवीम्। अप्रऽमादम्॥ सा। नः। मधु। प्रियम्। दुहाम्। अथो इति। उक्षतु। वर्चसा॥७॥**

**अन्वयः-** यां पृथिवी भूमिम् अस्वप्नाः देवाः विश्वदानीम् अप्रमादं रक्षन्ति सा (पृथिवी) नः प्रियं मधु दुहाम् अथो वर्चसा उक्षतु।

**सरलार्थः-** निद्राविहीनाः देवाः प्रमादरहिताः सन्तः यां विस्तृतां पृथिवीं रक्षयन्ति सैव पृथिवी मधु क्षरतु किञ्च तेजः प्रसारयतु।

**व्याकरणम्-**

- रक्षन्ति- रक्ष्-धातोः लटि प्रथमपुरुषबहुवचने।
- विश्वदानीम्- विश्वोपपदात् धा-धातोः ल्युटि ङीपि।
- दुहाम्- आत्मनेपदिनः दुह्-धातोः लोटि प्रथमपुरुषैकवचने।
- उक्षतु- उक्ष्-धातोः लोटि प्रथमपुरुषैकवचने।

**यार्णवेऽधि सलिलमग्र आसीत्**
**यां मायाभिरन्वचरन् मनीषिणः।**
**यस्या हृदयं परमे व्योमन्**
**सत्येनावृतममृतं पृथिव्याः।**
**सा नो भूमिस्त्विषिं बलं**
**राष्ट्रे दधातूत्तमे॥८॥**



**पदपाठः- या। अर्णवे। अधि। सलिलम्। अग्रे। आसीत्। याम्। मायाभिः। अनुऽअचरन्। मनीषिणः॥ यस्याः। हृदयम्। परमे। विऽओमन्। सत्येन। आऽवृतम्। अमृतम्। पृथिव्याः॥ सा। नः। भूमिः। त्विषिम्। बलम्। राष्ट्रे। दधातु। उत्ऽतमे॥८॥**

**अन्वयः-** या अग्रे अर्णवे सलिलम् अधि आसीत् यां मनीषिणः मायाभिः अन्वचरन्, यस्याः पृथिव्याः सत्येन आवृतम्, अमृतं हृदयं परमे व्योमन् सा भूमिः न बलं उत्तमे राष्ट्रे दधातु।

**सरलार्थः-** या पृथिवी आदौ समुद्रमध्ये स्थिता आसीत्, मनीषिणः यां बुद्ध्या प्राप्नुवन्ति, यस्याः पृथिव्याः अमृतहृदयं सत्येनावृतं सा पृथिवी अस्मान् उत्तमराष्ट्रे प्रस्थापयतु अथवा सा भूमिः अस्मभ्यम् उत्तमराष्ट्रार्थं तेजः शक्तिं च प्रयच्छतु।

**व्याकरणम्-**

- अन्वचरन्- अनूपपदात् चर्-धातोः लङि प्रथमपुरुषबहुवचने।
- व्योमन्- व्योम्नि इत्यस्य वैदिकं रूपमिदम्।

**यस्यामापः परिचराः समानी-**
**रहोरात्रे अप्रमादं क्षरन्ति।**
**सा नो भूमिर्भूरिधारा पयो-**
**दुहामथो उक्षतु वर्चसा॥९॥**

**पदपाठः- यस्याम्। आपः। परिऽचराः। समानीः। अहोरात्रे इति। अप्रऽमादम्। क्षरन्ति। सा। नः। भूमिः। भूरिऽधारा। पयः। दुहाम्। अथो इति। उक्षतु। वर्चसा॥९॥**

**अन्वयः-** यस्यां परिचरा आपः समानी अहोरात्रे अप्रमादं क्षरन्ति। भूरिधारा सा भूमिः नः पयः दुहाम् अथो वर्चसा उक्षतु।

**सरलार्थः-** यस्यां पृथिव्यां चतुर्दिक्षु विचरन्ति जलानि दिवसे रात्रौ च बाधराहित्येन प्रवहन्ति। एवं बहुधारासम्पन्ना पृथिवी अस्मभ्यं दुग्धं(जलं) प्रयच्छतु अथवा सा पृथिवी अस्माकं कृते बहुधारया दुग्धं दोग्धु किञ्च तेजसा अभिषिञ्चतु।

**व्याकरणम्-**

- अहोरात्रे - अहश्च रात्रिश्च इति द्वन्द्वसमासस्य द्विवचनान्तं रूपम्।
- क्षरन्ति - क्षर् इति अर्थकात् लटि प्रथमपुरुषस्य एकवचने रूपम्।
- दुहाम् - दुह्-धातोः लोट्-लकारस्य प्रथमपुरुषस्य एकवचने वैदिकं रूपम्।



**यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे।**
**इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः।**
**सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः॥१०॥**

**पदपाठः- याम्। अश्विनौ। अमिमाताम्। विष्णुः। यस्याम्। विऽचक्रमे। इन्द्रः। याम्। चक्रे। आत्मने। अनमित्राम्। शचीऽपतिः। सा। नः। भूमिः। वि। सृजताम्। माता। पुत्राय। मे। पयः॥१०॥**

**अन्वयः-** याम् अश्विनौ अभिमाताम्, यस्यां विष्णुः विचक्रमे, यां शचीपतिः इन्द्र आत्मने अनमित्रां चक्रे, नः सा पृथिवी माता ते पुत्राय पयः विसृजताम्।

**सरलार्थः-** यस्याः पृथिव्याः अश्विनौ परिमापं चक्रतुः, यस्यां विष्णुः पादन्यासं चकार, यां शचीपतिः इन्द्रः स्वस्य कृते अशत्रूकृतवान्, सैव अस्माकं पृथिवीमाता अस्मभ्यं दुग्धं प्रयच्छतु।

**व्याकरणम्-**

- अभिमाताम्- अभ्युपसर्गात् मा-धातोः लङि प्रथमपुरुषद्विवचने।
- विचक्रमे- व्युपसर्गात् क्रम्-धातोः लिटि प्रथमपुरुषैकवचने।
- चक्रे- आत्मनेपदिनः कृ-धातोः लिटि प्रथमपुरुषैकवचने।
- वि सृजताम्- व्युपसर्गात् सृज्-धातोः लोटि प्रथमपुरुषैकवचने।



## पाठगतप्रश्नाः

१. पृथिवीसूक्तस्य कः ऋषिः का च देवता।
२. के पृथिवीं धारयन्ति।
३. पृथिवी कान् धारयति।
४. ऋतम् इति रूपं कथं सिद्ध्येत्।
५. पृथिव्याः कति दिशः।
६. जिन्वति इति रूपं कथं सिद्ध्येत्।
७. कीदृशी पृथिवी ऐश्वर्यं तेजश्च प्रयच्छतु।
८. विश्वंभरा इति शब्दस्य कः अर्थः।
९. वसुधानी शब्दस्य कः अर्थः।



१०. हिरण्यवक्षा इत्यस्य विग्रहं समासं च लिखत।

११. इन्द्रऋषभा इत्यस्य विग्रहं समासं च लिखत।

१२. अस्वप्नाः इत्यस्य कः अर्थः।

१३. दुहाम् इति रूपं कस्मिन् लकारे।

१४. उक्षतु इति रूपं कथं सिद्ध्येत्।

१५. कः शचीपतिः।

**गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु।**
**बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम्।**

**अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम्॥११॥**

**पदपाठः- गिरयः। ते। पर्वताः। हिमऽवन्तः। अरण्यम्। ते। पृथिवि। स्योनम्। अस्तु।**
**बभ्रुम्। कृष्णाम्। रोहिणीम्। विश्वऽरूपाम्। ध्रुवाम्। भूमिम्। पृथिवीम्। इन्द्रऽगुप्ताम्॥**
**अजीतः। अहतः। अक्षतः। अधि। अस्थाम्। पृथिवीम्। अहम्॥११॥**

**अन्वयः-** पृथिवि ते गिरयः हिमवन्तः पर्वताः ते अरण्यं स्योनम् अस्तु। बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां इन्द्रगुप्तां भूमिं पृथिवीम् अहम् अजीतः अहतः अधि अस्थाम्।

**सरलार्थः-** हे पृथिवि तव गिरयः हिमावृताः पर्वताश्च कल्याणकारिणः, किञ्च तव वनानि कल्याणकारकाणि सन्तु। बभ्र्वादिरूपविशिष्टा स्थिरा इन्द्रेण रक्षिता सुविस्तृता पृथिवी अपराजिता अहिंसिता नाशरहिता भवन्ती प्रतिष्ठतु।

**व्याकरणम्-**

- अजीतः- जि-धातोः क्तप्रत्यये जीतः इति रूपम्। ततः न जीतः अजीतः इति नञ्तत्पुरुषसमासः।
- अहतः- हन्-धातोः क्तप्रत्यये हतः इति रूपम्। न हतः अहतः इति नञ्तत्पुरुषसमासः।
- अक्षतः- क्षत्-धातोः क्तप्रत्यये क्षतः इति रूपम्। न क्षतः अक्षतः इति नञ्तत्पुरुषसमासः।
- अधि अस्थाम्- अध्युपसर्गात् स्थाधातो लङि उत्तमपुरुषैकवचने।

**यत् ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वः संबभूवुः।तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रो अहं पृथिव्याः। पर्जन्यः पिता स उ नः पिपर्तु॥१२॥**



**पदपाठः- यत्। ते। मध्यम्। पृथिवि। यत्। च। नभ्यम्। याः। ते। उर्जः। तन्वऽः। सम्ऽबभूवुः॥ तासु। नः। धेहि। अभि। नः। पवस्व। माता। भूमिः॥ पुत्रः। अहम्। पृथिव्याः॥ पर्जन्यः। पिता। सः। ॐ इति। नः। पिपर्तु॥१२॥**

**अन्वयः-** पृथिवि यत्, ते मध्यं, यत् नभ्यं च, या ते तन्वः ऊर्जः संबभूवुः तासु नः धेहि, नः अभि पवस्व, भूमिः माता, अहं पृथिव्याः पुत्रः, पर्जन्यः पिता। सः नः पिपर्तु।

**सरलार्थः-** हे पृथिवि तव यः मध्यभागः अस्ति, यत् नाभिक्षेत्रं, किञ्च यः तव शरीरात् उत्पन्नः रसः तेषु सर्वेषु अस्मान् धारयतु। अस्मान् पवित्रीकुरु। भूमिः माता अस्ति, अहं पृथिव्याः पुत्रः अस्मि, पर्जन्यः पिता अस्ति, सः अस्माकं पालनपोषणं करोतु।

**व्याकरणम्-**

- धेहि- धा-धातोः लोटि मध्यमपुरुषैकवचने।
- पवस्व- पू-धातोः लोटि मध्यमपुरुषैकवचने।
- पिपर्तु- पृ-धातोः प्रथमपुरुषैकवचने।

**यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात्। सा नो भूमिर्वर्धयद् वर्धमाना॥१३॥**

**पदपाठः- यस्याम्। वेदिम्। परिऽगृह्णन्ति। भूम्याम्। यस्याम्। यज्ञम्। तन्वते। विश्वऽकर्माणः॥ यस्याम् मीयन्ते। स्वरवः। पृथिव्याम्। ऊर्ध्वाः। शुक्राः। आऽहुत्याः। पुरस्तात्॥ सा। नः। भूमिः। वर्धयत्। वर्धमाना॥१३॥**

**अन्वयः-** यस्यां भूम्यां वेदिं परिगृह्णन्ति, विश्वकर्माणः यस्यां यज्ञं तन्वते, यस्यां पृथिव्याम् आहुत्याः पुरस्तात् ऊर्ध्वाः शुक्राः स्वरवः मीयन्ते, सा भूमिः वर्धमाना नः वर्धयत्।

**सरलार्थः-** यस्यां पृथिव्यां देवाः वेदिनिर्माणं कुर्वन्ति, यस्यां यज्ञं सम्पादयन्ति, किञ्च यस्याम् आहुतिदानात् पूर्वं प्रकाशमानयज्ञीययूपं मीयन्ते, सा भूमिः वर्धयन्ती अस्मान् वर्धयतु।

**व्याकरणम्-**

- परिगृह्णन्ति- पर्युपसर्गात् ग्रह्-धातोः लटि प्रथमपुरुषबहुवचने।
- तन्वते- आत्मनेपदिनः तन्-धातोः लटि प्रथमपुरुषबहुवचने।
- मीयन्ते- आत्मनेपदिनः मा-धातोः लटि प्रथमपुरुषबहुवचने।



- वर्धयत्- वृध्-धातोः लोटि प्रथमपुरुषैकवचने।
- वर्धमाना- वृध्-धातोः शानचि टापि प्रथमैकवचने।

**यो नो द्वेषत् पृथिवि यः पृतन्याद्योऽभिदासान् मनसा यो वधेन। तं नो भूमे रन्धय पूर्वकृत्वरि॥१४॥**

**पदपाठः- यः। नः। द्वेषत्। पृथिवि। यः। अभिऽदासात्। मनसा। यः। वधेन। तम्। नः। भूमे। रन्धय। पूर्वऽकृत्वरि॥१४॥**

**अन्वयः-** (हे) पृथिवि यः नः द्वेषत् यः पृतन्यात् यः मनसा यः वधेन अभिदासात् (हे) भूमे (हे) पूर्वकृत्वरि, तं नः रन्धय।

**सरलार्थः-** हे पृथिवि यः अस्मान् द्वेष्टि, यः युद्धं करोति, यः मनसा तथा शस्त्रेण दमनं करोति, हे पूर्वकृत्वरि तं त्वं नाशय।

**व्याकरणम्-**

- द्वेषत्- द्विष्-धातोः लोट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- पृतन्यात्- पृतन्य इति नामधातोः लेट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- अभिदासात्- अभि इति उपपदपूर्वकात् दस्-धातोः लेट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- रन्धय – रन्ध-धातोः णिजन्तात् लोट्-लकारस्य रूपम्।

**त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य उद्यन्त्सूर्यो रश्मिभिरातनोति॥१५॥**

**पदपाठः- त्वत्। जाताः। त्वयि। चरन्ति। मर्त्याः। त्वम्। बिभर्षि। द्विऽपदः। त्वम्। चतुःऽपदः॥ तव। इमे। पृथिवि। पञ्च। मानवाः। येभ्यः। ज्योतिः। अमृतम्। मर्त्येभ्यः॥ उत्ऽयन्। सूर्यः। रश्मिऽभिः। आऽतनोति॥१५॥**

**अन्वयः-** त्वत् जाता मर्त्याः त्वयि चरन्ति, त्वं द्विपदः त्वं चतुष्पदः बिभर्षि। पृथिवि इमे मानवाः येभ्यः मर्त्येभ्यः उद्यन् सूर्यः रश्मिभिः अमृतम् आतनोति।



**सरलार्थः-** त्वत्तः जाताः प्राणिनः त्वयि एव विचरन्ति, त्वं पादद्वयधारिणं किञ्च पादचतुष्टयधारिणं धारयसि। हे पृथिवि सर्वे मनुष्याः तव, येषां कृते उद्यन् सूर्यः स्वकिरणेन अमृततुल्यं प्रकाशं प्रसारयति।

**व्याकरणम्-**

- बिभर्षि- भृ-धातोः लटि प्रथमपुरुषैकवचने।
- आतनोति- आङ्पूर्वकतन्-धातोः लटि प्रथमपुरुषैकवचने।

**ता नः प्रजाः सं दुह्रतां समग्रा वाचो मधु पृथिवि धेहि मह्यम्॥१६॥**

**पदपाठः- ताः। नः। प्रऽजाः। सम्। दुह्रताम्। सम्ऽअग्राः। वाचः। मधु। पृथिवि। धेहि। मह्यम्॥१६॥**

**अन्वयः-** ताः समग्राः प्रजाः नः सं दुह्रताम्। (हे) पृथिवि मह्यं वाचः मधु धेहि।

**सरलार्थः-** ते समग्रप्राणिनः अस्मभ्यं सम्यक् सुखं प्रयच्छन्तु। हे पृथिवि वाचः मधुरतां अस्मभ्यं प्रयच्छतु।

**व्याकरणम्-**

- दुह्रताम्- दुह्-धातोः लोट्-लकारस्य रूपम् इदम्।
- धेहि- धा-धातोः लोट-लकारस्य रूपम् इदम्।

**विश्वस्वंऽ मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम्।शिवां स्योनामनु चरेम विश्वहा॥१७॥**

**पदपाठः- विश्वऽस्वम्। मातरम्। ओषधीनाम्। ध्रुवाम्। भूमिम्। पृथिवीम्। धर्मणा। धृताम्। शिवाम्। स्योनाम्। अनु। चरेम। विश्वहा॥१७॥**

**अन्वयः-** विश्वस्वम् ओषधीनां मातरं ध्रुवां, पृथिवीं धर्मणा धृतां भूमिं (वयं) विश्वहा अनु चरेम।

**सरलार्थः-** सर्वेषाम् उत्पन्नकारिकायाः, औषधीनां मातुः, दृढायाः, प्रशस्तायाः किञ्च धर्मेण धृतायाः, कल्याणकारिकायाः, सुखदानकारिकायाः पृथिव्याः उपरि वयं सर्वदा विचरामः।

**व्याकरणम्-**

- विश्वसम्- विश्वस् इति प्रातिपदिकस्य द्वितीयायाः एकवचने रूपम्।
- अनुचरेम- अनु इति उपसर्गपूर्वकात् चर्-धातोः लोट्-लकारस्य उत्तमपुरुषस्य बहुवचने रूपम्।



**महत्सधस्थं महती बंभूविथ महान् वेग एजथुर्वेपथुष्टे।**
**महांस्त्वेन्द्रो रक्षत्यप्रमादम्।**
**सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो द्विक्षत कश्चन॥१८॥**

**पदपाठः- महत्। सधऽस्थम्। महती। बभूविथ। महान्। वेगः। एजथुः। वेपथुः। ते॥**
**महान्। त्वा। इन्द्रः। रक्षति। अप्रऽमादम्। सा। नः। भूमे। प्र। रोचय। हिरण्यस्यऽइव।**
**सम्ऽदृशि। मा। नः। द्विक्षत। कः। चन॥१८॥**

**अन्वयः-** (हे पृथिवि) महती(त्वं) महत् सधस्थं बभूविथ, ते महान् वेगः, एजथुः वेपथुः च। महान् इन्द्रः त्वा अप्रमादं रक्षति। हे भूमे सा (त्वं) संदृशि नः हिरण्यस्येव प्र रोचयः, नः कश्चन मा द्विक्षत।

**सरलार्थः-** हे पृथिवि त्वं महत् निवासस्थलम्, तव वेगः महान्, कम्पनं च महत्, किञ्च महान् इन्द्रः सावधानेन त्वां रक्षति। एवंभूते हे पृथिवि त्वम् एवम् अस्मान् रुचिविषयान् कुरु यथा सुवर्णः रुचिकरः भवति। कश्चिदपि अस्मान् प्रति न द्वेषं कुर्यात्।

**व्याकरणम्-**

- बभूविथ- भू-धातोः लिटि मध्यमपुरुषैकवचने।
- एजथुः- एज्-धातोः लिटि मध्यमपुरुषद्विवचने।
- वेपथुः- विप्-धातोः लिटि मध्यमपुरुषद्विवचने।
- रक्षति- रक्ष्-धातोः लिटि प्रथमपुरुषैकवचने।
- रोचय- रुच्-धातोः लोटि मध्यमपुरुषैकवचने।

**अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु।अग्निरन्तः पुरुषेषु**
**गोष्वश्वेष्वग्नयः॥१९॥**

**पदपाठः- अग्निः। भूम्याम्। ओषधीषु। अग्निम्। आपः। बिभ्रति। अग्निः।**
**अश्मऽसु॥ अग्निः। अन्तः। पुरुषेषु। गोषु। अश्वेषु। अग्नयः॥१९॥**

**अन्वयः-**भूम्याम् अग्निः, औषधीषु आपः अग्निं बिभ्रति, अग्निः अश्मसु पुरुषेषु अन्तः अग्नयः, गोषु अश्वेषु।



**सरलार्थः-** अग्निः भूमौ अस्ति, जलम् अग्निं धारयति किञ्च प्रस्तरे अपि अग्निः अस्ति, पुरुषेषु जठराग्निः अस्ति। किञ्च गोषु अश्वेषु अपि अग्निः अस्ति।

**व्याकरणम्-**

**अग्निर्दिव आ तपत्यग्नेर्देवस्योर्वं१न्तरिक्षम्।अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम्॥२०॥**

**पदपाठः- अग्निः। दिवः। आ। तपति। अग्नेः। देवस्य। उरु। अन्तरिक्षम्। अग्निम्। मर्तासः। इन्धते। हव्यऽवाहम्। घृतऽप्रियम्॥२०॥**

**अन्वयः-** अग्निः दिवः आतपति, देवस्य अग्नेः उरु अन्तरिक्षम् अन्तरिक्षं मर्तासः अग्निम् इन्धते हव्यवाहं घृतप्रियम्।

**सरलार्थः-** सूर्यदेवः स्वर्गे तपति। एतत् महत् अन्तरिक्षमण्डलमपि अग्निः एव, मरणशीलाः प्राणिनः अग्निमेव प्रज्वालयन्ति।

**व्याकरणम्-**

- आतपति - आङ् इति उपसर्गपूर्वकात् तप्-धातोः लट्लकारस्य रूपम्।
- उरु- प्रचुरार्थे वेदे उरुशब्दस्य प्रयोगः भवति।
- इन्धते - इन्ध-धातोः लट्-लकारस्य प्रथमपुरुषस्य एकवचने रूपम्।
- हव्यवाहम्- हव्यं वहति यः स इति हव्यवाहः , तम् इति उपपदतत्पुरुषः।



## पाठगतप्रश्नाः

१६. स्योनम् इत्यस्य कः अर्थः।

१७. जि-धातोः क्तप्रत्यये किं रूपम्।

१८. भूमिः का अस्ति।

१९. अहं पृथिव्याः कः अस्मि।

२०. तन्वते इति रूपं कस्यधातोः।

२१. धेहि इति कस्मिन् लकारे।

२२. एजतुः इति रूपं कथं सिद्ध्येत्।

२३. वेपथुः इति रूपं कस्यधातोः।



२४. अग्निः क्व क्व अस्ति।

२५. रोचय इति रूपं कस्मिन् लकारे।

## २५.३) पृथिवीसूक्तस्य सारः

वैदिकानाम् ऋषीणां मनसि सर्वदा परमतत्त्वस्य एव स्फुरणं, तत्र एव तेषां रमणम् इति नास्ति। तेषां मनसि अपि विद्यन्ते अलौकिकसौन्दर्यभावनाः नैसर्गिकप्रीतिः च। याः प्रीतिभावनाः तान् प्रेरयन्ति रस-भावमयेषु विषयेषु। तादृशस्य सौन्दर्यसंस्कृतस्य भावस्य वर्णना अथर्ववेदस्य भूमिसूक्ते अस्ति। अथर्ववेदीयं पृथिवीसूक्तं न केवलं वैदिकानाम् ऋषीणां प्रगाढज्ञानस्य निदर्शनम् अपि तु सौन्दर्यभावनायाः सहृदयतायाः च चरमं निदर्शनम्।

इदं सुक्तम् अथर्ववेदस्य द्वादशकाण्डे अन्तर्भवति। एतादृशी भावसौन्दर्यसमृद्धा रचना वैदिकसाहित्येषु दुर्लभा। अत्र ऋषिः अथर्वा तस्य पृथिवीविषयकं हृद्गतं प्रेमभावं प्रदर्शयति।

विचित्ररूपवती अस्माकं पृथिविमाता। सा हि अस्माकं चिरपरिचिता मृन्मयी मूर्तिः। तया साकं अस्माकं योगः नाडीगतः। तस्याः एव अङ्के अस्माकं जन्म मरणं च अत्रैव। तस्मादेव सा देवतारूपेण कल्पिता वैदिकैः ऋषिभिः। तस्याः महिमानं वर्णयितुं वैदिककवयः धौर्यसीमानम् अतिक्राम्यन्ति। जनन्या धरित्र्या सह द्युलोकस्य अपि प्रार्थनायां रताः ऋषयः, यतो हि द्युलोकः अस्माकं पितृतुल्यः। तस्याः च पत्नीरूपा हि पृथिवी इति भावना ऋषीणां सूक्ष्मबुद्धिगोचरा। तथाहि आम्नातम् ऋग्वेदे-

'द्यौः पितः पृथिवि मातरध्रुग् अग्ने भ्रातर्वसवो मृलत नः।' इति।(ऋ.६.५१.५)

द्युलोकं पृथिवीलोकं च जनकजननीरूपेण पश्यन्ति वैदिककवयः। तयोः मेलनेनैव सृष्टिः। तयोः मध्ये अविनाभावसम्बन्धः अस्ति यथा अस्ति पार्वतीपरमेश्वरयोः मध्ये। तमेव अविनाभावसम्बन्धं कल्पयितुं तयोः स्वामीस्त्रीकल्पना। अनन्तकालाद् एव एतौ वर्तमानौ।

तथाहि आम्नातम्- 'ध्रुवा द्यौः ध्रुवा पृथिवी।" इति।

तयोः पृथगस्तित्वं नास्ति यतो हि तौ सम्पृक्तौ। अत एव द्युलोकस्य मन्त्रैः पृथक् स्तुतिः न कृता। पृथिवीमातुः एकस्मिन् सूक्ते एव त्रिभिः ऋङ्मन्त्रभिः स्तुतिः कृता। परन्तु तेषां स्तुतिः पृथक् रूपेण नास्ति इति हेतोः वैदिकर्षयः तेषां स्तुतौ उदासीनाः आसन् इति अपि न चिन्तनीयम्। ते प्रसिद्धदेवतावन्दनया सह एव मर्त्यानाम् अपि पृथिवीप्रभृतीनां देवानां स्तुतिं कृतवन्तः।

तेषां दृष्टौ पृथिवी विस्तिर्णा, महती, जगतः सुखदायिनी, घृतवती, पयस्वती, यज्ञवती च अस्ति। ते पृथिव्याः मातृरूपवर्णनायां सर्वदा मुखराः सन्ति। मनुष्याणां जीवनदशायां मरणदशायां च एकमात्रम् आश्रयः पृथिवी जीवानां जननीस्वरूपा। वैदिकाः ऋषयः एतां पृथिवीं जननीरूपेण पूजयन्ति।

ऋग्वेदीयानाम् ऋषीणां पृथिवीविषयिणी या भावना बीजरूपेण लुकायिता आसीत् तस्य बीजस्य अङ्कुरोद्गमः अथर्ववेदस्य पृथिवीसूक्ते अभवत्। अत्र हि त्रयषष्टिः मन्त्राः सन्ति। येषु दार्शनिकभावनायाः प्रवाहः दृश्यते। न केवलं दार्शनिकभावनायाः अपि तु तया सम्मिलितायाः प्रकृतिप्रेमभावनायाः अपि



सम्यक् अङ्कुरोद्गमः अत्र जातः। ऋषेः अथर्वणः दृष्टौ पृथिवी महिममयी भूतभविष्यत्कालस्य च नियन्त्री। सत्यं, बृहत्, ऋतम्, दीक्षा, उग्रतपस्या, ब्रह्म, यज्ञश्च तस्याः धारकाः। तथाहि आम्नातं पृथिवीसूक्ते-

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ती॥ इति।(अ.वे.१२.१.१)

विचित्ररूपिणी अस्माकं पृथिवीमाता। तस्याः कुत्रचित् समतलं, कुत्रचित् च बन्धुरभूमिः। अत्र विद्यन्ते नदी-पर्वत-समुद्र-उर्वरभूमयः विचित्रधर्मिनः प्राणिनः च। फलप्रदायकस्य ओषधिवृक्षस्य सा एव आधाररूपा। अस्माकं प्राणान् सा वक्षे बिभर्ति। तथाहि आम्नातं पृथिवीसूक्ते- **'या बिभर्ति बहुधा प्राणद् एजत्'**। इति।

सृष्टेः आदितः सा विश्वम्भरा विश्वधात्री च। सा विश्वम्भरा वसुधानी प्रतिष्ठा। तस्याः हिरन्मयवक्षदेशः सर्वेषां जगताम् आश्रयः। तस्याः गर्भे जनिं प्राप्य द्विपद-चतुष्पदप्राणिनः सर्वे तत्रैव विचरन्ति। तथाहि आम्नातं पृथिवीसूक्ते-

**'तज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।"** इति। तस्याः हृदयं परमव्योम्नि सत्येन आवृतम्। तथाहि आम्नातं - **"यस्यां हृदयं परमे व्योमन् सत्येनावृतममृतं पृथिव्याः"**। इति। देवगणसेविता सा पवित्रयज्ञकर्मणां वेदितुल्या। तत्रैव हविषः आहूत्या देवमानवानां मिलनक्षेत्रं रच्यते।

विश्वधात्री जननी पृथिवी सर्वेषां देवगणानां पूज्या। अश्विनीकुमारौ तस्य परिमापकौ। विष्णुः स्वयं तत्र द्वितीयपादं स्थापयामास। वीरश्रेष्ठः इन्द्रः यस्य रक्षणार्थं सर्वदा नियुक्तः। तस्याः दुग्धसेवनेन विश्वे प्राणिनः पुष्टिमन्तः भवन्ति।

आहहोः कालादेव सा प्राणिनिवहानां जनयित्री धात्री च। कुत्रचित् सा सर्वंसहा कठिना, कुत्रचित् क्षमामयी सा अन्नदात्री, पयस्वती, शान्तिरूपिणी, सुगन्धा च। पर्जन्यदेवः अत्र नित्यं वर्षति। अतः सः कविकल्पनायां पृथिव्याः पतिः। मनुष्याः श्रद्धया देवान् उद्दिश्य अत्र एव हविः प्रददति। तथाहि आम्नातं पृथिवीसूक्ते-

'भूम्यां देवेभ्यो ददति यज्ञं हव्यं अरंकृतम् (२.१.२२) इति। अस्याः मृत्तिकायाः गन्धेन मुग्धः कविः सर्वेषां सार्विकं मङ्गलं प्रार्थयति अनेन मन्त्रेण- ' तेन मा सुरभिं कृणु मा नो द्विक्षत कश्चन '॥ इति।

अस्याः पृथिव्याः वक्षसि जायमानम् आघातं सोढुम् असमर्थः कविः। कदाचित् भूम्याः खननं क्रियते चेदपि सा क्षतिः शीघ्रमेव पूरणीया इति कवेः प्रार्थना। तथाहि आम्नातं पृथिवीसूक्ते-

'यत् ते भूमे विखनामि क्षिप्रं तदपि रोहतु।

मा ते मर्म विमृग्वरि मा ते हृदयम् अर्पिषम् '॥ (अ.वे.१२.१.६३) इति। दुष्टशिष्टयोः उभयोः आश्रयः तस्याः क्रोडम्। पृथिवीमातुः आश्रयधन्यः कविः प्रार्थयति हे स्वर्गसखे पृथिवि त्वम् अस्माकम् आश्रयदात्री भव, त्वं सम्पदा श्रिया च भूत्या च अस्माकं पुष्टिं विदधातु। तथाहि आम्नातम् अथर्ववेदीये पृथिवीसूक्ते -

'सं विदाना दिवा कवे श्रियां मा धेहि भूत्याम् '। इति॥ (अ.वे.१२.१.६३) इति शम्।



## २५.४) पृथिवीस्वरूपम्

भारतीयपरम्परायाम् अचेतनवस्तूनामपि अधिष्ठात्री देवता अङ्गीकृता। द्युलोको यथा देवानां तथैव पृथिवीलोकः मनुष्याणां मनुष्येतराणां जीवानामपि निवासस्थानम्। अयं तु अचेतनः परन्तु अस्य अधिष्ठात्र्या देवतयायं संयुक्तः नियमितश्च। अतो वैदिकसाहित्ये अस्य भूरिशो वन्दनाः विधीयन्ते।

अथर्ववेदीयपृथिवीसूक्ते पृथिव्याः महत्त्वं कीर्त्यते। उत्पत्तेः पुरा समुद्रपयसि निमज्जिता आसीत् इयं पृथिवी। विद्वांसः स्वपराक्रमेण इमाम् अवापुः। अस्याः कतिपयक्षेत्राणि जलपूर्णानि कतिपयक्षेत्राणि स्थलानि च। अस्यां भूमिवैचित्र्यमपि लक्ष्यते। अत्र पयोधाराः स्वप्राणिकुलम् आनन्दयन्तः सरसं सावलीलं प्रवहन्ति। अस्य प्रभावेण मनुष्याः यशः धनम् आधिपत्यञ्च लभन्ते। तथाहि आम्नातम् -

ते नो गृणानो महिनी महि श्रवः

क्षत्रं द्यावापृथिवी धासथो बृहत्।

येनाभि कृष्टीस्ततनाम विश्वहा

पनाय्यमोजो अस्मे समन्वितम्।। इति।

माता यथा स्वपुत्रं पयः पाययति तेन तं वर्धयति च तथैव पृथिवी अपि सर्वान् अमृतसमं जलं पाययति तान् सम्यक्तया वर्धयति च। माता यथा स्वपुत्रेषु भेदं न करोति, सर्वान् समानतया स्निहाति एवमेव पृथिवी अपि साध्वसाधुविचारम् अवज्ञाय सर्वान् अन्नधनादिना पालयति। तस्मात् पृथिव्याः मातृत्वं सर्वतः प्रसिद्धं वेदमन्त्रादिषु। द्यावापृथिव्योः वर्णनावसरेऽपि अस्याः मातृरूपत्वं प्रस्फुट्यते। ततः आम्नातम् -

उरुव्यचसा महिनी असश्चता

पिता माता च भुवनानि रक्षतः।

सुधृष्टमे वपुषे न रोदसी

पिता यत्सीमभि रूपैरवासयत्।। इति।

ऋग्वेदीये द्यावापृथिवीसूक्ते उच्यते यत् इयं जगतः स्थितिं सम्पाद्य तथा जगच्चक्रस्य विरामहीनां गतिं च विधाय जगतः मातृरूपेण आत्मानं प्रकटितवती। आम्नातञ्च तत्र -

ते हि द्यावापृथिवी विश्वशंभुव

ऋतावरी रजसो धारयत्कवी।

सुजन्मनो धिषणे अन्तरीयते

देवो देवी धर्मणा सूर्यः शुचिः।। इति।

एवमेव जगतो मातृरूपेण धात्रीरूपेण पालयित्रीरूपेण च बहुधा सा स्तूयते इति शिवम्।।





## पाठसारः

अथर्ववेदसंहितायाः द्वादशकाण्डस्य प्रथमसूक्तस्य भूमिः पृथ्वी वा देवता। अथर्वा ऋषिः। सूक्तेस्मिन् पृथिव्याः भूमेर्वा वैशिष्ट्यं विस्तरेण उपन्यस्तम् अस्ति। ऋषिः अथर्वा ब्रूते यत् सत्यं, बृहत्, ऋतम्, उग्रं, दीक्षा, तपः, यज्ञः, ब्रह्म पृथिवीं धारयन्ति। इयं भूमिः मनवानां मध्ये असम्बाधम् अस्ति। अस्याः उद्वतः प्रवतः समं बहु प्रदेशाः सन्ति। इयमेव नानावीर्याः ओषधीः बिभर्ति। पृथिव्यामेव समुद्रः सिन्धुः आपश्च प्रवहन्ति। पृथिव्यामेव सर्वे जडजंगमाः आनन्दिताः भवन्ति। अस्याः पृथिव्याः चतस्रः प्रदिशः सन्ति। इत्थं विश्वंभरा, वसुधानी, प्रतिष्ठा, हिरण्यवक्षा, जगतः निवेशनी, इन्द्रऋषभा भूमिः वैश्वानरम् अग्निं बिभ्रती अस्मान् द्रविणे दधातु। या पृथिवी प्रलयावस्थायां सृष्टेः प्राक् सलिले निमग्ना आसीत्। मनीषिणः यां पृथिवीं बुद्ध्वा अन्वचरन्। यस्याः पृथिव्याः सत्येन आवृतम् अमृतं हृदयं परमे व्योम्नि प्रतिष्ठितम् अस्ति। यस्यां पृथिव्यां परिचराः समानीः सार्वभौमिकाः आपः अहोरात्रे अप्रमादं क्षरन्ति, सा भूमिधारा भूमिः अस्मान् पयः दुहाम्, तेजसा अभिसिञ्चतु। सा माता भूमिः मे पुत्राय पयः विसृजताम्। भूमिः माता अहं पृथिव्याः पुत्रः अस्मि- माता भूमिः पुत्रो अहं पृथिव्याः।



## पाठान्तप्रश्नाः

१. पृथिवीसूक्तस्य सारं लिखत।
२. पृथिवीसूक्ते पृथिवी कथं वर्णिता इति प्रतिपादय।
३. पृथिवीसूक्ते अग्निः कथं वर्णितः इति ससूक्तं प्रतिपादय।
४. सत्यं बृहद्ऋतमुग्रम्.... इति मन्त्रं व्याख्यात।
५. गिरयस्ते पर्वताः..... इति मन्त्रं व्याख्यात।
६. यस्यां वेदि.... इति मन्त्रं व्याख्यात।
७. यत् ते मध्यम्... इति मन्त्रं व्याख्यात।
८. महांस्त्वेन्द्रो... इति मन्त्रं व्याख्यात।
९. त्वज्जाता... इति मन्त्रं व्याख्यात।
१०. यस्याश्चतस्रः.... इति मन्त्रं व्याख्यात।

## २५.५) पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. अथर्वा ऋषिः, अग्निः पृथ्वी च देवते।
२. सत्यं बृहत् ऋतम् उग्रं दीक्षा तपः यज्ञः।



३. बहुशक्तिसम्पन्नौषधिवृक्षान्।

४. ऋ-धातोः क्तप्रत्यये।

५. चतस्रः।

६. जिन्द्-धातोः लटि प्रथमपुरुषैकवचने।

७. यस्यां पृथिव्यां पूर्वजाः विविधकर्माणि अकुर्वन्, यस्यां पृथिव्यां देवाः असुरान् पराजीतवन्तः, या पृथिवी गवादीनां विचित्रम् आश्रयस्थानम्।

८. विश्वस्य भरणपोषणकारिका।

९. धनस्य धारिका।

१०. हिरण्यं वक्षे यस्याः सेति बहुव्रीहिः।

११. इन्द्रः ऋषभः यस्याः सा इति बहुव्रीहिः।

१२. स्वप्नविहीनाः।

१३. लोटि।

१४. उक्ष्-धातोः लोटि प्रथमपुरुषैकवचने।

१५. इन्द्रः।

**उत्तराणि-२**

१६. कल्याणकारि।

१७. जीतः।

१८. माता।

१९. पुत्रः।

२०. तन्।

२१. लोटि।

२२. एज्-धातोः लिटि मध्यमपुरुषद्विवचने।

२३. विप्-धातोः।

२४. भूमौ, प्रस्तरे, पुरुषेषु जठराग्निरूपेण।

२५. लोटि।

॥ इति पञ्चविंशः पाठः ॥



# २६

# ॥सरमापणिसंवादसूक्तम्॥

## प्रस्तावना

भारतीयधर्मजीवनस्य आध्यात्मिकजीवनस्य च प्राणभूता वेदाः। यथा प्राणान् विना जीवः तथा वेदान् विना धर्मादिकम्। अत एव इहामुष्किकफलविचारे वेदानां स्थानं सर्वश्रेष्ठम्। स च वेदः भगवतः निश्वासभूतः। अतः अपौरुषेयः। स वेदः चतुर्धा विभक्तो भवति। तथा हि - ऋग्वेदः, सामवेदः, यजुर्वेदः, अथर्ववेदश्चेति। तत्र ऋग्वेदस्य दशममण्डलस्य अष्टाधिकैकशततमं सूक्तं (ऋ.वे. म-१०.१०८) सरमापणिसंवादसूक्तम्। इदम् एकम् अत्यन्तं प्रसिद्धं संवादसूक्तम्। सरमापण्योः कथामाध्यमेन संवादसूक्तं प्रचलति। एवञ्च पाठे अस्मिन् सरमापणिसंवादसूक्तं उपन्यस्तम्।



## उद्देश्यानि

एतं पाठं पठित्वा भवान् -

- सरमापाणिसंवादसूक्तस्य संहितापाठं पदपाठं पठिष्यति।
- सरमापाणिसंवादसूक्तस्य मन्त्राणाम् अन्वयं कर्तुं शक्तो भविष्यति।
- सरमापाणिसंवादसूक्तस्य सान्वयप्रतिपदार्थं ज्ञास्यति।
- सरमापाणिसंवादसूक्तस्य व्याख्याने योग्यो भवेत्।
- स्वयमेव मन्त्रार्थस्यापि व्याख्यानं कर्तुं प्रभवेत्।
- मन्त्रे स्थितानां केषाञ्चन शब्दानां व्याकरणं ज्ञास्यति।

## २६.१) अथ मूलपाठः

**किमिच्छन्ती सरमाप्रेदमानड् दूरेह्यध्वा जगुरिः पराचैः।**



कास्मेहितिः का परितकम्यासीत् कथं रसाया अतरः पयांसि॥ १॥इन्द्रस्य दूतीरीषिता चरामि मह इच्छन्ती पणयो निधीन् वः।

अतिष्कदो भियसा तन्न आवत् तथा रसाया अतरं पयांसि॥२॥

की दृङ्गिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात्।

आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति॥३॥

नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात्।

न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे॥४॥

इमा गावः सरमे या ऐच्छः परिदिवो अन्तान् सुभगे पतन्ती।

कस्त एना अव सृजादयुध्व्युतास्माकमायुधा सन्ति तिग्मा॥५॥

अस्येना वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः।

अधृष्टो व एतवा अस्तु पन्था बृहस्पतिर्व उभया न मृळात्॥६॥

अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिरवसुभिन्यृष्टः।

रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ॥७॥

एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः।

त एतमूवं वि भजन्त गोनामथैतदृचः पणयो वमन्नित्॥८॥

एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन।

स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम॥९॥

नाहं वेद भ्रातृत्वं नो स्वसृत्वम इन्द्रो विदुराङ्गिरसश्च घोराः।



**गोकामा मे अच्छदयन्यदायम अपात इतपणयो वरीयः॥१०॥**

**दूरमित पणयो वरीय उद् गावो यन्तु मिनतीर्ऋतेन।**

**बृहस्पतिर्या अविन्दन्निगूह्ळाः सोमो ग्रावाण ऋषयश्च विप्राः॥११॥**

## २६.२) अथ मन्त्रव्याख्यानम्

**किमिच्छन्ती सरमाप्रेदमानड् दूरेह्यध्वा जगुरिः पराचैः।**

**कास्मेहितिः का परितकम्यासीत् कथं रसाया अतरः पयांसि॥ १॥**

**पदपाठः- किम्। इच्छन्ती। सरमा। प्र। इदम्। आनट्। दूरे। हि। अध्वा। जगुरिः। पराचैः। का। अस्मेऽहितिः। का। परिऽतक्मया। आसीत्। कथम्। रसायाः। अतरः। पयांसि॥१॥**

**अन्वयः-** सरमा किम् इच्छन्ती इदम् प्र आनट्। पराचैः जगुरिः अध्वा दूरे हि। का अस्मेहितिः का तरितक्म्या आसीत्। कथं रसायाः पयांसि अतरः।।१।।

**अन्वयार्थः -** (सरमा) इन्द्रस्य दूती सरमा नाम देवशुनी (किम् इच्छन्ती) किं कामयमाना प्रार्थयमाना वा (इदम् प्र आनट्) इदं स्थानं प्राप्नोत्? (अध्वा दूरे हि) अत्र आगमनमार्गः खलु सुदूरः, अतिदीर्घः। (पराचैः) पराञ्चनैः, सुदूरं गमनैः, बहुयोजनलङ्घनैः एव कोऽपि अत्र (जगुरिः) आगन्तुं प्राप्तुं वा शक्तः। यद्वा, योजनानि चलित्वैव इयं सरमा अत्र प्राप्ता। हे सरमे! (का अस्मेहितिः) का तव अस्मासु निहिता स्वार्थवृत्तिः? तव किं प्रयोजनम् अस्मासु आयत्तम् अत्र आगच्छन्त्याः तव (का परितक्म्या आसीत्) गतिः का अभूत्? तव परितकनं परितो गमनं भ्रमणं वा कीदृशमासीत्। (कथं रसायाः पयांसि अतरः) रसानामकनद्या जलराशिं त्वं कथं तीर्णवती?।।१।।

**व्याख्या-** अनया आगच्छन्तीं सरमां दृष्ट्वा पणयो वदन्ति सरमा सरणशीला एतन्नामिका देवशुनी किं प्रार्थयमाना सती इदम् अस्मदीयं स्थानं प्रानाट् प्राप्तोत् अङ्पूर्वोनशिव्याप्तिकर्माष तस्य लुङि मन्त्रेघसेत्यादिना च्लेर्लुक् छन्दस्यापि दृश्यते इति आडागमः। पराचैः परांचि पराङ्गिखान्यावृत्तिवर्जितानि यानि गमनानि तैर्जगुरिः उद्गूर्णः महता प्रयत्नेनापि गन्तुं नशक्यत इत्यर्थः। गृ निगरणे आदृगमहनेत्यादिना किन्प्रत्ययः बहुलं छन्दसीत्युत्वं तादृशोयमध्या दूरेहि विप्रकृष्टः खलु। यद्वा पराचैः परांचनै जगुरिः अत्यर्थं गन्त्री पार्ष्णिभागमनालोकमाना सती इदं स्थानं प्राप्नोति दूरे अयमध्वा



यदृच्छयागन्तुं न शक्यते अतो वयमेतां पृच्छामः। हे सरमे का कीदृशी अस्मेहितिः कोस्मास्वर्थहितिः कोस्मासु त्वदपेक्षितार्थो निहितः यद्वा अस्मासु कोर्थो गतः दधातेर्हिनोतेर्वा क्तिनिरूपम् आगच्छंत्यास्तव का कीदृशी परितक्म्या रात्रिरासीत् यद्वा तकतिर्गत्यर्थः परितकनं परितोगमनं भ्रमणं वा कीदृशमासीत् कथं वा रसायाः शब्दायमानायाः अन्तरिक्षनद्या योजनशतविस्तीर्णायाः पयांस्युदकानि अतरः तीर्णवत्यसि एतद्वद। अत्र किमिच्छन्ती सरमेदं प्रानडित्यादि निरुक्तं द्रष्टव्यम्॥१॥

**सरलार्थः -** अत्र पणिः सरमां प्रति कथयति भवती किमर्थम् अत्र आगतवती। इदं तु बहुदूरं वर्तते। अत्र आगमनसमये भवती यदि पश्चाद्दिशि दृष्टिः निक्षिपेत् तर्हि अत्र आगमनम् असम्भवम् आसीत्। मम समीपे तावत् तादृशं किं वस्तु विद्यते यस्य लाभाय भवती अत्र आगतवती अस्ति। कीदृश्यां रात्रौ आगतवती। नद्याः जलं कथम् उत्तीर्णवती अस्ति।

**व्याकरणम् -**

- इच्छन्ती - अत्र इष्-धातोः शतृप्रत्यये स्त्रियां ङीप्-प्रत्ययः।
- आनट् इत्यत्र आङ्पूर्वस्य नशि-धातोः लुङि मन्त्रेघस- इत्यादिना च्लेः लुकि छन्दस्यपिदृश्यते इत्यनेन आडागमः।

**इन्द्रस्य दूतीरीषिता चरामि मह इच्छन्ती पणयो निधीन् वः।**

**अतिष्कदो भियसा तन्न आवत् तथा रसाया अतरं पयांसि॥२॥**

**पदपाठः- इन्द्रस्य। दूतीः। इषिता। चरामि। महः। इच्छन्ती। पणयः। निऽधीन्। वः।**

**अतिऽस्कदः। भियसा। तत्। नः। आवत्। तथा। रसायाः। अतरम्। पयांसि॥ २॥**

**अन्वयः-** (हे) पणयः, इन्द्रस्य दूतीः (तेन एव) इषिता (अहं) वः महः निधीन् इच्छन्ती चराम्। अतिस्कन्दः भियसा तत् नः आवत्। तथा रसायाः पयांसि अतरम्।।२।।

**अन्वयार्थः -** हे (पणयः) एतन्नामका असुराः, जीवनस्य प्रकाशरहितानां सामान्येन्द्रियक्रियाणां शासकशक्तयः (अहम् इन्द्रस्य दूतीः) सन्देशहर्त्री, सन्देशवाहिक (इषिता) अहं तेनैव प्रेषिता (वः) युष्मदीयान्, युष्माभिरपहृत्य आनीतान् (महः निधीन्) इन्द्रस्य महानिधीन् (इच्छन्ती चरामि) वाञ्छन्ती अत्र विचरामि। (अतिस्कन्दः) आक्रमणस्य (भियसा) भयेन, अतिक्रमणात् जातेन भयेन वा (तत्) नदीजलमपि (नः) माम्, पूजायां बहुवचनम्, (आवत्) अरक्षत्। (तथा) तेन प्रकारेण अहम् (रसायाः पयांसि अतरम्) रसानद्याः जलानि तीर्णवती।।२।।

**व्याख्या-** अनया तान् सरमेत्यूचे हेपणाय एतन्नामकाः असुराः इन्द्रस्य दूतीः सुपांसुलुगिति प्रथमैकवचनस्य सुश्छान्दसः अहं इषिता तेनैवप्रेषिता सती चरामि युष्मदीयंस्थानमागच्छामि। किमर्थं वोयुष्मदीयान् युष्मदीयेपर्वते अधिष्ठापितवान् महोमहतः निधीन् बृहस्पतेर्गोनिधीन् इच्छन्ति



कामयमानासती चरामि। किंच अतिष्कदः स्कन्दिर्गति शोषणयोः भावेक्विप् अतिष्कन्दात् अतिक्रमणाज्जातेन भियसा भियेन तन्नदीजलं नः पूजायाः बहुवचनं मां आवत् अरक्षत्। तथा प्रकारेण रसायानद्याः पयांस्युदकानि अतरं तीर्णवत्यस्मि॥२॥

**सरलार्थः** - (सरमा कथयति) हे पणयः, इन्द्रस्य दूतीरूपेण अहम् आगतवती। भवान् यद् गोरूपं धनम् सञ्चितवान् अहं तद् गृहीतुम् इच्छामि। जलमेव माम् अरक्षत्। जलस्य भीतिः तु आसीदेव परन्तु तम् उल्लघ्य आगतवती।- एवमहं नदीम् उत्तीर्य अत्र आगतवती।

**व्याकरणम् -**

- आवत् इत्यत्र अवतेः लङि आवत् इति रूपम्।
- पयांसि-पयस्-शब्दस्य प्रथमाबहुवचने जसि प्रक्रियाकार्ये पयांसि इति रूपम्।

**की॒दृङ्ङिन्द्रः॑ सरमे॒ का दृ॑शी॒का यस्ये॒दं दू॒तीरस॑रः परा॒कात्।**

**आ च॒ गच्छा॑न्मि॒त्रमे॑ना दधा॒माथा॒ गवां॒ गोप॑तिर्नो भवाति॥३॥**

**पदपाठः-**

**की॒दृङ्। इन्द्रः॑। सरमे॒। का। दृ॒शी॒का। यस्य॑। इ॒दम्। दू॒तीः। अस॑रः। प॒रा॒कात्। आ। च॒। गच्छा॑त्। मि॒त्रम्। ए॒न॒। द॒धा॒म॒। अथ॑। गवा॑म्। गोऽप॑तिः। न॒ः। भ॒वा॒ति॒॥३॥**

**अन्वयः** - (हे) कीदृङ् इन्द्रः, का दृशीका, यस्य दूतीः (त्वम्) पराकात् इदम् असरः। आ च गच्छात् (वयम्) एन मित्रं दधाम। अथ नः गवां गोपतिः भवाति।।३।।

**अन्वयार्थः** - हे (सरमे, कीदृङ् इन्द्रः) कीदृशः (का दृशीका) तस्य दृष्टिः कीदृशी, दृष्टिरूपा सेना कियती? तस्य लक्षणानि कानि (यस्य दूतीः) यस्य इन्द्रस्य दूतीः भूत्वा त्वम् (पराकात्) दूरदेशात् (इदम् असरः) इदं स्थानम् आगता? इति ताम् उक्त्वा इदानीं ते परस्परम् आहुः - आगच्छात् च) यदि इयं सरमा अस्माभिः सह संगच्छेत, इन्द्रं त्यक्त्वा अस्माभिः मिलिता भवेत् (अथ) तर्हि (एना मित्रं दधाम) वयम् एनां स्वमित्रं कुर्याम। (अथ) तर्हि इयम् अपि (नः गवां गोपतिः भवाति) अस्माकं गवां स्वमिनी भवेत्। अथवा स इन्द्रः अत्र आगच्छेत् चेत् वयं तेन मैत्रीं कुर्याम। अथ स इन्द्रः अस्माकं गोपतिः भवेत्।।३।।

**व्याख्या-** तेषां वाक्यं हे तव स्वामीइन्द्रः कीदृक् कियत्पराक्रमवान् कादृशीका तस्य कीदृशीदृष्टिः दृष्टिरूपासेनाकियती यस्य दूतीः दूती त्वं इदमस्मदीयंस्थानं पराकाददतिदूरादसरः आगमः। इति तामुक्त्वा इदानीं ते परस्परमाहुः एषा सरमा आगच्छात् च आगच्छतुच गमर्लेटि आडागमः स्वामी भवति नह्येकस्यागोः किंतु बहूनां गवां स्वामी भवतु वृत्यवृत्तिभ्यां स्वामित्यं बाहुल्यंच विवक्षते॥३॥



**सरलार्थः -**

पणिः कथयति- यस्य इन्द्रस्य दूतिरूपेण भवती एतावद् दूरम् आगतवती सः इन्द्रः कीदृशः अस्ति। तस्य कियान् पराक्रमः कियत्यः सेनाश्च सन्ति। इन्द्रः आस्मान् रक्षतु। इन्द्रं मित्ररूपेण अङ्गीकर्तुं वयं प्रस्तुताः। स इन्द्रः अस्माकं गाः स्वीकृत्य तासाम् अधिपतिः भवतु।

**व्याकरणम् -**

- आचगच्छत् इत्यत्र उपसर्गस्यधातोः व्यवहितरूपेण प्रयोगः। अत्र यत् आचगच्छत् इति रूपम् तत् गम्-धातोः लेटि आडागमे प्रक्रियाकार्ये रूपम् इति।
- गवाम्-गो-शब्दस्य षष्ठीबहुवचने आमि गवाम् इति रूपम्।



## पाठगतप्रश्नाः

१. किमिच्छन्ती इत्यादिवाक्यं कः कम्प्रति अकथयत्।

२. इषति इत्यस्य कोऽर्थः।

३. कस्य दूतीरूपेण सरमा आगतवती।

४. पणयः इन्द्रेभ्यः किं दातुम् अङ्गीकृतवन्तः।

५. कीदृङ् इत्यस्य कोऽर्थः।

---

**नाहं तं वे॑द॒दभ्यं॒दभ॒त्सयस्ये॒दं दू॒तीरस॑रं परा॒कात्।**

**न तं गु॑हन्ति स्र॒वतो॑गभी॒रा ह॒ता इन्द्रे॑ण पणयः शयध्वे॥४॥**

**पदपाठः-**

**न। अ॒हम्। तम्। वे॒द॒। दभ्य॑म्। दभ॑त्। सः। यस्य॑। इ॒दम्। दू॒तीः। अस॑रम्। प॒रा॒कात्। न। तम्। गू॒हन्ति॒। स्र॒वतः॑। ग॒भी॒राः। ह॒ताः। इन्द्रे॑ण। प॒ण॒यः॒। श॒य॒ध्वे॒॥४॥**

**अन्वयः -** अहं तं दभ्यं न वेद (अपितु) सः तभत्, यस्य दूतीः (अहम्) पराकात् इदम् असरम्। स्रवतः गभीराः तं न गूहन्ति। (हे) पणयः,हताः (यूयं) शयध्वे॥४॥

**अन्वयार्थः -** (अहं) सरमा (तं) इन्द्रम् (दभ्यं) दम्भनीयम् दमयितुं हिंसितुं वा शक्यं (न वेद) न जानामि, न मन्ये। (सः तभत्) अपितु स इन्द्रः अन्यान् दभ्नोति, पराजयते विनाशयति वा, सकला अपि शक्तीः वशीकरोति। (यस्य दूतीः) यस्य दौत्ये नियुक्ताऽहम् (अहम्) सरमा (पराकात्) अतिदूरदेशात्,



परतरलोकात्, इन्द्रियागोचरसमुच्चस्तरात् (इदम् असरम्) इदं युष्मदीयं स्थानं प्राप्ता। (स्रवतः गभीराः) गम्भीराः स्रोतोवहा अपि (तं न गूहन्ति) तम् इन्द्रं न प्रच्छादयन्ति गोपयन्ति वा प्रत्युत तम् आविष्कुर्वन्ति, वयं तस्य महिम्ना समुद्रं प्रति सराम इति वदन्त्यः ताः 'अयम् अदमनीय' इति प्रकटीकुर्वन्ति। तस्मात् हे (पणयः) इन्द्रियभोगैकपरायणा असुराः! (इन्द्रेण हताः) निहताः, निपातिताः यूयं (शयध्वे) धराशयिनः भविष्यथ।।४।।

**व्याख्या-** सरमावदति हे पणयः तमिन्द्रं दभ्यं हंतव्यं नवेद नजानामि दभेरचोरयत् कथं सइन्दः दभत् सर्वाञ्चनान्दभति हिनस्त्येव दभेर्लेटिरूपं वाक्यभेदादनिघातः यस्यदूतीः अहं इदं युष्मदीयं स्थानं पराकात् अतिदूरदेशात् असरं प्राप्ताभूवं। इन्द्रोहिंसितव्योनभवतीत्यत्र युक्तिमाह स्रवतः स्रवणं स्रवः तमाचरन्ति आचारार्थेक्विप् तुगागमः जसिरूपं स्रवणशीलाः गभीरा गंभीरानद्यः तं इन्द्रं नगूहन्तिनसंवृण्वन्ति नाच्छादयन्ति। किंतु आविष्कुर्वन्ति वयं यस्य महिम्ना समुद्रं प्रतिसरामस्तस्मादहिंस्यइति एनं प्रकटीकुर्वन्ति। गुहूसंवरणे भौवादिकः। तस्मात् हे पणयोयूयं इन्द्रेण तादृशपराक्रमेणहताः सन्तः शयध्वे शीङ्स्वमे बहुलंछन्दसीति शपोलुगभावः॥४॥

**सरलार्थः -**

सरमा कथयति- यस्य इन्द्रस्य दूतिरूपेण अहम् अत्र आगतवती तं कोऽपि पराजेतुम् असमर्थः। स इन्द्र एव सर्वान् पराजयति। प्रखराः गम्भीराः नद्योऽपि तस्य वेगं रोद्धुम् असमर्थाः। हे पणयः यूयम् अपि इन्द्रस्य तादृशपराक्रमेण आहताः सन्तः शयनं करिष्यथ इति।

**व्याकरणम् -**

- स्रवतः-स्रवतेः आचारार्थे क्विपि तुगागमे जसि प्रक्रियाकार्ये स्रवतः इति रूपम्।
- शयध्वे इत्यत्र बहुलं छन्दसि इति शपः लुगभावः।

**इमा गावः॑ सरमे या ऐच्छः परि॑ दिवो अन्ता॑न् सुभगे पतन्ती।**

**कस्त॑ एना अव॑ सृजादयु॑ध्व्युतास्माकमायु॑धा सन्ति तिग्मा॥५॥**

**पदपाठः- इमाः। गावः॑। सरमे। याः। ऐच्छः॑। परि॑। दिवः। अन्ता॑न्। सुऽभगे। पतन्ती। कः। ते। एनाः। अव॑। सृजात्। अयु॑ध्वी। उत। अस्माकम्। आयु॑धा। सन्ति। तिग्मा॥ ५॥**

**अन्वयः -** (हे) सुभगे सरमे, दिवः अन्तान् परि पतन्ती इमाः गावः याः (त्वम्) ऐच्छः, एनाः ते कः अयुध्वी अव सृजात्। उत अस्माकम् आयुधा तिग्मा सन्ति।।५।।



**अन्वयार्थः** - 'नाहं तं वेद दभ्यं दभत् सः....हता इन्द्रेण पणयः शयध्वे ' इति श्रुत्वा क्रुद्धाः पणयः प्रत्यवदन्-

(सुभगे सरमे) हे सौभाग्यशालिनि सुन्दरि सरमे (दिवः अन्तान्) आकाशस्य एकस्मात् प्रान्तात् अन्यप्रान्तान् यावत् (परिपतन्ती) परितो गच्छन्ती पर्याकुलं भ्रमन्ती वा ताः प्राप्तुम् (इमाः गावः) एताः सन्ति ता गावः (याः) अन्वेषयन्ती त्वम् (ऐच्छः) कामयसे। (एनाः) एताः गाः (कः अयुध्वी) कः खलु अयुद्ध्वा, विना युद्धम् (ते अव सृजात्) तुभ्यं त्यक्तुमर्हति। (उत) अपि च (अस्माकम् आयुधा तिग्मा सन्ति) अस्माकमपि तीक्ष्णानि शस्त्राणि सन्ति। तस्माद् अस्माभिः सह युद्धम् अकृत्वा को वा गा नयति।। ५।।

**व्याख्या-** क्रुद्धाः पणयः प्रत्यूचुः हे सुभगे शोभनभाग्यवति हेसरमे दिवः द्युलोकस्य. अन्तान् पर्यन्तान् परिपतन्ती कुत्रगावस्तिष्ठन्तीति परिगच्छन्ती त्वं इमाः परिदृश्यमानाः याः गावः सुबव्यत्ययः गाः ऐच्छः कामयसे ताः एनाः गाः ते त्वदीयः कः अयुध्वी अयुध्वा अवृजात् अस्मात्पर्वतादसृजेत् विनिर्गमयेत् विनिर्गमयेत्। सृजेर्लेटिरूपं अयुध्वी युधेःक्त्वाप्रत्यये स्नात्वादयश्चेति निपातितः नञ्समासत्वात्ल्यबादेशभावः नञघःप्रकृतिस्वरत्वंच उतापिच अस्माकं तिग्मा तीक्ष्णान्यायुधा आयुधानि सन्ति तस्मादस्माभिर्युद्धमकृत्वा कोवागाआहरति॥५॥

**सरलार्थः** - पणयः उक्तवन्तः- हे सुन्दरि सरमे त्वं स्वर्गस्य आन्तिमप्रदेशात् आगतवती अतः मम गवां मध्ये यां यां भवती इच्छति तां ताम् अहं तुभ्यं दातुं शक्नोमि। परन्तु युद्धं विना कः तुभ्यं गाः दास्यति। मम समीपे अपि बहूनि तीक्ष्णानि आयुधानि सन्ति।(अर्थात् अहम् अपि योद्धुं समर्थः अस्मि इत्यर्थः)।

**व्याकरणम् -**

- अवसृजात्- अवपूर्वकात् सृज्-धातोर्लेटि प्रक्रियायाम् अवसृजाद् इति रूपम्।
- अयुध्वी- युध्-धातोः क्त्वाप्रत्यये स्नात्व्यादयश्च इत्यनेन निपाते नञ्समासत्वात् क्त्वाप्रत्ययस्य ल्याबादेशाभावे प्रक्रियाकार्ये अयुध्वी इति रूपम्।

**असे॒नाव॑: पणयो वचां॑स्यनिष॒व्यास्त॒न्व॑: सन्तु॒ पा॒पीः।**

**अधृ॑ष्टोव॒ ए॒तवा अस्तु॒ पन्था॒ बृह॒स्पति॑र्व उभ॒य न मृ॑ळात्॥६॥**

**पदपाठः- अ॒से॒न्या। व॒ः। प॒ण॒य॒ः। वचां॑सि। अ॒नि॒ष॒व्याः। त॒न्व॑ः। स॒न्तु॒। पा॒पीः।**

**अधृ॑ष्टः। व॒ः। ए॒तैव। अ॒स्तु॒। पन्था॑ः। बृ॒ह॒स्पति॑ः। व॒ः। उ॒भ॒या। न। मृ॒ळा॒त्॥६॥**

**अन्वयः** - (हे) पणयः, वः वचांसि असेन्या। (युष्माकम्) पापीः तन्वः अनिषव्याः सन्तु, वः पन्थाः एतवै अधृष्टः अस्तु। (किन्तु)बृहस्पतिः वः उभया न मृळात्।।६।।



**अन्वयार्थः** - हे (पणयः) आध्यात्मिकप्रकाशस्य, दिव्यसत्यस्य दिव्यविचारस्य च शत्रवः पणिनामकदस्यवः! (वः वचांसि) युष्माकम् इमानि पूर्वोक्तवचनानि (असेन्या) असेन्यानि, न सेनायोग्यानि, अस्मत्सेनानां सम्मुखं व्यर्थानि सेत्स्यन्ति इति भावः। युष्माकम् (पापीः तन्वः) पापिशरीराणि कामम् (अनिषव्याः सन्तु) इषुभिः प्रभावितानि न स्युः, यद्वा कामं पापयुक्ततया पराक्रमरहितानि तानि इषुयोग्यानि एव न स्युः, कामं (वः) युष्मान् (पन्थाः) मार्गः (एतवै) उपगन्तुं (अधृष्टः अस्तु) अधर्षणीयः, दुर्गमः स्यात्, क्षुण्णः परिचितो वा न स्यात्। (बृहस्पतिः वः उभया न मृळात्) किन्तु बृहस्पतिदेवता युष्मभ्यम् उभयोः भूलोकस्वर्गलोकयोः किमपि सुखं नैव दास्यति, युष्माकं किमपि कल्याणं न करिष्यति।।६।।

**व्याख्या-** सा तां निराह हे पणयः वोयुष्माकं वचांसि पूर्वोक्तानि वचनान्यसेना असेन्यानि सेन्यानि सेनार्हाणि नभवन्ति सेनाशब्दात्तदर्हतीत्यर्थेछन्दसिचेति यत्प्रत्ययः नञःसमासः। ययतोश्चातदर्थइति उत्तरपदान्तोदात्तत्वं। तथा तन्वः युष्मदीयानि शरीराणि अनिषव्याः इष्वार्हाणि न सन्तु पराक्रमराहित्येन पूर्ववत्प्रत्ययः ओर्गुणइतिगुणः स्वरश्चतादृक्। यतः पापीः पापयुक्तानिखलु छन्दसीवनिपावितीप्रत्ययः। जसःशः किंच वोयुष्मदीः पंथामार्गः एतवै गन्तुं अधृष्टः असमर्थोस्तु इण्गतावित्यस्य तुमर्थेतवैप्रत्ययः तवैचान्तश्चयुगपदिति-धातोः प्रत्ययान्तस्य युगपदुदात्तत्वं तत्र हेतुमाह वोयुष्मादीयान् उभया उभयविधान् पूर्वोक्तान्त्वोदेहान् बृहस्पतिरिन्द्रप्रेरितोनमृळात् नसुखयतु किंतु बाधेत मृडसुखने लेट्याडागमः॥६॥

**सरलार्थः** - सरमा- भवतां वचनं सैनिकोचितं नास्ति। भवतां शरीरे पापं विद्यते। इदं शरीरं कदापि इन्द्रस्य बाणस्य लक्ष्यं भवेत् न वेति, देवताः कदापि भवताम् उपरि आक्रमणं कर्युः न वेति। मम संशयः पश्चात् वृहस्पतिः भवते क्लेशं प्रदास्यति। यदि भवान् गाः न दास्यति तर्हि विपद् सन्निकटे एव वर्तते।

**व्याकरणम्** -

- असेन्या- सेना-शब्दात् तदर्हतीत्यर्थे छन्दसि च इति यत्प्रत्ययः, नञ्समासश्च। अत्र ययतोश्चातदर्थे इति उत्तरपदान्तोदात्तत्वम्।
- एतवै इत्यत्र इण् गतौ इति गत्यर्थक-इण्-धातोः तुमर्थे तुमर्थे से-सेनसेऽसेन्-क्से-क्सेनध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः इत्यनेन तवैप्रत्ययः। अत्र तवै चान्तश्च युगपद् इतिधातोः प्रत्ययान्तस्य युगपद् उदात्तत्वम्।



## पाठगतप्रश्नाः

६. कं कोऽपि पराजेतुं न शक्नोति।

७. दभत् इत्यत्र दभ्धातुः किमर्थकः।

८. किं विना पणयः गाः दातुं नैच्छन्।



९. सुभगशब्दस्य कोऽर्थः।

१०. कस्य वचनं सैनिकयोग्यं नास्ति।

११. वृहस्पतिः पश्चात् कस्मै क्लेशं दास्यति इति सरमा आशङ्कते।

---

**अयं निधिःसरमे अद्रिबुध्नो गोभिरश्वेभिरवसुभिन्यृष्टः।**

**रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमाजगन्थ॥७॥**

**पदपाठः- अयम्। निऽधिः। सरमे। अद्रिऽबुध्नः। गोभिः। अश्वेभिः। वसुऽभिः। निऽऋष्टः। रक्षन्ति। तम्। पणयः। ये। सुऽगोपाः। रेकु। पदम्। अलकम्। आ। जगन्थ॥ ७॥**

**अन्वयः** - सरमे गोभिः अश्वेभिः वसुभिः न्यृष्टः अयं निधिः अद्रिबुध्नः तं पणयः रक्षन्ति ये सुगोपाः अलकम् रेकु पदम् आ जगन्थ ।

**अन्वयार्थः** - हे (सरमे) इन्द्रस्य दूति (गोभिः अश्वेभिः वसुभिः) धेनुभिः, अश्वैः अन्यैश्च ऐश्वर्यैः (न्यृष्टः) परिपूर्णः (अयं निधिः) एष नः कोषः (अद्रिबुध्नः) अद्रिः पर्वतः बुध्नः दृढाधारः, सुदृढम् आश्रयस्थानं यस्य तादृशः अस्ति, अयं पर्वतगुहाभ्यन्तरे गुप्ततया सुरक्षिततया च संवृत इत्यर्थः। (तम्) पूर्वोक्तं निधिं (पणयः) पणिनामकदस्यवः (रक्षन्ति) परिपान्ति (ये) पणयः (सुगोपाः) श्रेष्ठा रक्षकाः। अतः त्वं (अलकम्) व्यर्थमेव (रेकु पदम्) शङ्काकुलं स्थानम् (आ जगन्थ) आगता।

**आध्यात्मिकतात्पर्यम्** - अस्मिन् मन्त्रे यो निधिः सङ्केतितः स वर्तते इन्द्रस्य दिव्यैश्वर्यकोषः, -अस्माकमात्मनः तदीयदिव्यपवित्रमनसश्च गावः, दिव्योषसः दिव्यस्य सत्यसूर्यस्य च चिद्रश्मयः, तस्य अश्वा अध्यात्मप्रकाशशक्तयः, तस्य वसूनि च सन्ति तेषां रश्मीनां तासां शक्तीनां च फलभूतानि शान्त्यानन्दादीनि अन्यानि ऐश्वार्याणि।

पणयः सन्ति अनृतस्य अज्ञानस्य च कुटिलशक्तयः, प्रकाशरहितानां सामान्येन्द्रियक्रियाणां शासकशक्तयः। एभिः पणिभिः अस्माकं दिव्यैश्वर्याणि भौतिकसत्तायाः पर्वते, देहाद्रेः गुहायाम् अन्धकारमयाऽवचेतनभौतिकसत्तायां प्रच्छन्नतया स्थापितानि।

सरमा वर्तते इन्द्रस्य अन्तर्ज्ञानशक्तिः। इन्द्रेण प्रेरिता सा अस्माकं प्रच्छन्नमैश्वर्यम् अस्मान् प्रापयति। पणिसरमासंवादस्य इयं पृष्ठभूमिः प्रस्तुतमन्त्रे सुस्पष्टं निर्दिष्टा। विस्तरार्थम् अस्य सूक्तस्य अन्ते उपन्यस्तम् आध्यात्मिकव्याख्यानमनुशीलनीयम्।।७।।

**व्याख्या-** ते च पुनराहुः हे सरमे अयं निधिः अस्मदीयः कोशः अद्रिबुध्नः बन्धबन्धने बन्धेर्बधिबुधीचेति न प्रत्ययः बुध-इत्यादेशः अद्रिबन्धको यस्य तादृशः तथा आहृतैः गोभिः अश्वेभिः



अश्वैश्च वसुभिरात्मीयैः धनैश्च न्यृष्टः नितरां प्राप्तो भवति। ऋषी गतौ क्तप्रत्यये श्वीदितो निष्ठायाम् इति इट्प्रतिषेधः। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वं सुगोपाः गुपू रक्षणे आयप्रत्ययान्तात्क्विपि आतो लोपयलोपौ सुष्ठु गोपायितारोयेपणयः ते असुराः तं निधिं रक्षन्ति पालयन्ति। रेकु रेकृशंकायाम् औणादिकउप्रत्ययः शंकितं गोभिः शब्दायमानं पदम् अस्माभिः पालितं स्थानम् अलकं व्यर्थमेव आजगन्थ आगतवत्यसि। गमेर्लेटि रूपम्।

**सरलार्थः -** पणयः अकथयन्- हे सरमे मम सम्पत्तिः पर्वतैः सुरक्षिता विद्यते तथा गोभिः अश्वैः आन्यान्यधनैश्च परिपूर्णा विद्यते। पुनश्च अस्याः सम्पत्तेः रक्षाकार्यं पणयः एव निर्वहन्ति। अतः भवत्याः अत्र आगमनं व्यर्थम् अस्ति।(अर्थात् इन्द्रस्य भीतिं प्रदर्श्य अस्माकं सकाशात् गाः प्राप्तुं भवती असमर्था अस्ति इति।)

**व्याकरणम् -**

- अद्रिबुध्नः इत्यत्र बन्ध बन्धने इतिधातोः नप्रत्यये बन्ध-इत्यस्य बुध-इत्यादेशः।
- ऋषी गतौ इतिधातोः क्तप्रत्यये श्वीदितो निष्ठायाम् इति इट्प्रतिषेधः।

**एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः।**

**त एतमूर्वं विभजन्त गोनामथैतद्वचः पणयो वमन्नित्॥८॥**

**पदपाठः- आ। इह। गमन्। ऋषयः। सोमऽशिताः। अयास्यः। अङ्गिरसः। नवऽग्वाः।**

**ते। एतम्। ऊर्वम्। वि। भजन्त। गोनाम्। अथ। एतत्। वचः। पणयः। वमन्। इत्॥८॥**

**अन्वयः -**

सोमशिताः अयास्यः अङ्गिरसः नवग्वाः ऋषयः इह आ गमन्। ते एतं गोनाम् ऊर्वं वि भजन्त। अतः एतत् वचः पणयः वमन् इत्।।८।।

**अन्वयार्थः -** हे (सोमशिताः) सोमेन आनन्दरसपानेन शिताः तीक्ष्णीकृताः, प्रदीप्ततेजसः (अयास्यः) सत्यात् जातायाः सप्तशीर्षधियः आविष्कर्ता ऋषिश्च (अङ्गिरसः ऋषयः) दिव्याग्नेः पुत्राः, तस्य शक्तिरूपाश्च दिव्यद्रष्टारः तेषां भूलोकगताः प्रतिनिधयः मनुष्याणां पूर्वे पितरश्च (नवग्वाः) ये नव मासान् अन्तर्यज्ञं कृत्वा परमज्योतिषः सत्यसूर्यस्य च नव रश्मीन् प्राप्तवन्तः ते (इह आ गमन्) अत्र युष्माकम् अद्रिगुहाम् आगमिष्यन्ति। (ते) सर्वेऽपि पूर्वोक्ता ऋषयः (एतं गोनाम् ऊर्वं) इमं गवां व्रजं (वि भजन्त) विवृत्य, उन्मुच्य तासां गवां विभजनम् उपभोगं च करिष्यन्ति। (अथ) तदा यूयम् (एतत् वचः) इदं वचनम्, 'व्यर्थमेव त्वम् इदं शङ्काकुलं स्थानम् आगता' इत्येवंरूपं वाक्यं (पणयः) अध्यात्मप्रकाशस्य शत्रवः, प्रकाशगवाम् अपहर्तारः गोप्तारश्च पणिनामकदस्यवः! (वमन् इत्) परित्यक्ष्यथ एव। अतः वरं गर्वपूर्णवचनानां परित्यागः।।८।।



**व्याख्या-** सरमा पुनः प्रत्युवाच हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः शिञ्निशाने कर्मणि क्तप्रत्ययः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। तादृशानवग्वाः नवगतयः यद्वा अंगिरसां सत्रमासीनानां मध्ये केचन नवसु माःसु अध्यतिष्ठन् ते नवग्वाः अनेन दृशग्वाअप्युपलक्ष्यन्ते। उभयवधास्ते अंगिरस-ऋषयः तेषां प्रथमोयास्यः एतन्नामाच ते एते इह युष्मदीये स्थाने आगमन् आगच्छेयुः। गमेश्छन्दसि लुङ्लङ्लिट इति सार्वकालिको लुङ् लृदित्वात् च्लेः अङ्। आगत्यच ते गोनां गोःपादान्त इति छन्दसि नुडागमः गवाम् ऊर्वन्तं समूहं विभजन्त विभागं कुर्युः अत्रापि पूर्ववत्सार्वकालिको लुङ्। अथान्तरं पणयोयूयं एतद्वचः पूर्व्यं यद्व्यर्थमागतासीति यद्वाक्यमवोचत तद्वाक्यं तदावमन्नित् वमन्तः परित्यजन्त एव भवथ। वमु उद्गिरणे शतरि सुपां सुलुक् इति जसो लुक् नुमागमः संयोगान्तलोपः यद्वा लङि रुपं स्वरश्छान्दसः।

**सरलार्थः** - सरमा कथयति- सोमपानेन प्रमत्ताः अङ्गिरसाः नवगुगणाश्च अत्र आगत्य एताः गाः भवतां सकाशात् मोचयित्वा नेष्यन्ति। हे पणयः तस्मिन् समये भवतां एषा दर्पोक्तिः परित्यज्या भविष्यति। (तदा भवान् किमपि कर्तुम् असमर्थः इति भावः।)

**व्याकरणम् -**

- सोमशिताः- अत्र शिञ् निशाने इतिधातोः कर्मणि क्तप्रत्ययः। तृतीया कर्मणि इति सूत्रेण अत्र पूर्वपदप्रकृतिस्वरः।
- आगमन् इत्यत्र गमेः छन्दसि लुङ्लङ्लिटः इति सूत्रेण सार्वकालिकः लुङ्। अत्र लृदित्वात् च्लेः अङ्।
- गोनाम् इत्यत्र गोः छन्दसि नुडागमः।



## पाठगतप्रश्नाः

१२. पणीनां सम्पत्तिः कथं रक्षिता।

१३. पणीनां सम्पत्तिः कैः परिपूर्णा।

१४. केन अङ्गिरसाः नवगुगणाश्च प्रमत्ताः।

१५. अङ्गिरसाः नवगुगणाश्च किं साधयिष्यन्ति।

१६. सोमशिताः इति शब्दस्य कोऽर्थः।

---

**एवाच त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन।**

**स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम॥९॥**



**पदपाठः- एव। च। त्वम्। सरमे। आऽजगन्थ। प्रऽबाधिता। सहसा। दैव्येन। स्वसारम्। त्वा। कृणवै। मा। पुनः। गाः। अप। ते। गवाम्। सुऽभगे। भजाम॥९॥**

**अन्वयः -**

(हे) सरमे, दैव्येन सहसा प्रबाधिता एव त्वं च आजगन्थ, त्वा स्वसारं कृणवै। पुनः मा गाः। (हे) सुभगे गवां ते अप भजाम।।९।।

**अन्वयार्थः** - हे (सरमे) हे इन्द्रदूति, देवशुनि। (दैव्येन सहसा) इन्द्रादिदेवानां बलेन (प्रबाधिता एव त्वं) प्रेरिता विवशीकृता च त्वम् अत्र (च आजगन्थ) आगता। च इति पादपूरणः (त्वा स्वसारं कृणवै) वयम् त्वां स्वभगिनीम्, भगिनीवत् सहयोगिनीं कुर्मः करवामहै वा। (पुनः मा गाः) त्वम् मा प्रतिगच्छ। हे (सुभगे) हे सौभाग्यशालिनि, शोभनैश्वर्ययुक्ते, सुन्दरि सरमे (गवां ते अप भजाम) गवां भागं वयं तुभ्यमपि ददाम, अथवा तव गवां यूथं वयं त्वया सह विभजाम।।९।।

**व्याख्या-** व्याख्या-तया एवमुक्तेसति पणयः पणयवाक्यमाहुः हे सरमे त्वं दैव्येन देवसंबन्धिना सहसा बलेन प्रबाधिता यथातथा वलपुरं प्राप्य तत्रस्थितागादृष्टा पुनरागच्छति तेन प्रपीडिता त्वंएवंचेत् आजगन्थ आगतवत्यसि चशब्दश्चदर्थे निपातैर्यद्यदिहन्तेतिङोनिघाताभावः गमेर्लिटिथलिरूपं सहसुपेत्यत्र सहेतियोगविभागात् समासः तिङिचोदात्तवतीति गतेर्निघातः नित्स्वरः तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै समूहापेक्षयैकवचनं त्वंतु पुनः मागाः इन्द्रादीनमागच्छ अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवांसमूहः पर्वतादपगमय्य भजाम त्वंच वयंच विभजाम विभागं करवामेत्यर्थः

**सरलार्थः** - पणिगणः प्रत्युत्तरति- हे सरमे, देवाः मत्तः भीतिम् आशङ्क्य भवतीम् अत्र प्रेषितवन्तः, एतदर्थमेव भवती अत्र आगतवती अस्ति। भवती अस्माकं भगिनीस्वरूपा अस्ति। भवती इदानीं न प्रतिगच्छतु यावत्कालं शक्यम् अत्रैव निवसतु। अस्माकं गोधस्य भागमपि स्वीकरोतु इति।

**व्याकरणम् -**

- आजगन्थ इत्यत्र आ-पूर्वकात् गम्-धातोः लिटि थलि प्रक्रियायां जगन्थ इति रूपम्। आपूर्वकाद् गमतेः सह सुपा इत्यत्र सह इति योगविभागात् समासः। अत्र तिङि चोदात्तवतीति गतेर्निघातः नित्स्वरश्च।
- स्वसारम् इत्यत्र स्वसृशब्दस्य द्वितीयैकवचनान्तं रूपम्।

**नाहं वेद भ्रातृत्वं नो स्वसृत्वम इन्दो विदुराङ्गिरसश्च घोराः।**

**गोकामा मे अच्छदयन्यदायम अपात इतपणयो वरीयः॥१०॥**



**पदपाठः- न। अहम्। वेद। भ्रातृत्वम्। नो। इति। स्वसृऽत्वम्। इन्द्रः। विदुः।**

**अङ्गिरसः। च। घोराः। गोऽकामाः। मे। अच्छदयन्। यत्। आयम्। अप। अतः। इत।**

**पणयः। वरीयः॥१०॥**

**अन्वयः -** अहं भ्रातृत्वं न वेद। नो स्वसृत्वम्। इन्द्रः घोराः अङ्गिरसश्च विदुः। यत् (अहम्) आयम् (ते) मे गोकामाः अच्छदयन्। अतः(हे) पणयः वरीयः अप इत।।१०।।

**अन्वयार्थः -** (अहं भ्रातृत्वं न वेद) हे पणय, नाहं भ्रातृत्वं जानामि। (नो स्वसृत्वम्) नापि भगिनीत्वम्। अथवा न अहं युष्माकं भ्रातृत्वम् अनुजानामि स्वीकरोमि वा न च स्वीयं स्वसृत्वम्। इदं तु (इन्द्रः घोराः अङ्गिरसश्च विदुः) इन्द्रः, शत्रूणां भयङ्कराः अङ्गिरसः च जानन्तु अनुजानन्तु वा। (यत् आयम्) येन अहं युष्मत्स्थानम् आगता। अथवा (गोकामाः) गाः प्रकाशधेनूः कामयन्ते इति गोकामाः, ज्योतिः गवाम् अभिलाषिणः इन्द्रादयः (मे अच्छदयन्) मां स्वरक्षाकवचेन आच्छाद्य अत्र प्रैषयन्, (अतः) अस्मात्कारणात् यूयम् हे (पणयः अप इत) अस्मात् स्थानात् सुदूरं गच्छत। तदेव युष्मभ्यम् (वरीयः) वरतरं स्यात्।।१०।।

**व्याख्या-** सा तान्प्रत्याचष्टे हे पणयः अहं भ्रातृत्वं नवेद न जानामि। तथा स्वसृत्वं च नो वेद नैव जानामि। के जानन्ति तान् आह इन्द्रः घोराः शत्रूणां भयंकराः अंगिरसश्च वदुर्जानन्ति किंच अस्मात् स्थानात् अहं यद्यादयं इन्द्रादीन् प्रामवम् अयपयगतौ लङि रूपं तदा मे मदीया गोकामाः युष्माभिरपहृता गावः कामयमाना इन्द्रादयः अच्छदयन् युष्मदीयं स्थानं आच्छदयन्ति। छद अपवारणे अतः कारणात् हे पणयो वरीयः उरुतरं गवावृन्दं परित्यज्य अपेत अन्यत्स्थानं प्रतिगचछत। यद्वा वरीयः प्रभूतं अतिदूरं देशं गच्छत। इत इण्गतौ लोटि रूपं वरीयः उरुशब्दादीयसुनि प्रियस्थिरेत्यादिनावरादेशः॥१०॥

**सरलार्थः -** सरमा वदति- अहं भ्रातृभगिनीकथां नावगच्छामि। इन्द्रः तथा पराक्रमिणः अङ्गिरो वंशीयाः जानन्ति यत् गवां प्राप्त्यर्तं रक्षापूर्वकं ते माम् अत्र प्रेषितवन्तः। अहं तेषाम् आश्रयं भजमाना अत्र आगतवती। अतः हे पणयः कथयामि इतः बहुदूरं पलायतु इति।

**व्याकरणम् -**

- आयम् इति अय गतौ इतिधातोः लङि छन्दसि रूपम्।
- इण् गतौ इतिधातोः लोटि प्रथमपुरूषद्विवचने प्रक्रियाकार्ये इतः इति रूपम्।

**दूरमित पणयो वरीय उद् गावो यन्तु मिनतीर्ऋतेन।**

**बृहस्पतिर्या अविन्दन्निगूह्ळाः सोमो ग्रावाण ऋषयश्च विप्राः॥११॥**



**पदपाठः- दूरम्। इत। पणयः। वरीयः। उत्। गावः। यन्तु। मिनतिः। ऋतेन। बृहस्पतिः। याः। अविन्दत्। निऽगूह्ळाः। सोमः। ग्रावाणः। ऋषयः। च। विप्राः॥ ११॥**

**अन्वयः -** (हे) पणयः (यूयं) वरीयः दूरम् इत। गावः ऋतेन मिनतीः उत् यन्तु। निगूळ्हाः याः (गाः) बृहस्पतिः अविन्दत् सोमः ग्रावाणः विप्राः ऋषयः च (अविन्दन्)।।११।।

**अन्वयार्थः -** हे (पणयः) हे पणिनामका असुराः, जीवनस्य सामान्य-प्रकाशरहित-इन्द्रिय-क्रियाणां शासका दस्यवः! यूयं (वरीयः दूरम् इत) दूरम् वरतरं प्रशस्ततरं च स्थानं प्रति गच्छत, यद्वा इतः अतिदूरं पलायध्वम्, शुभम् इच्छथ चेत्। (गावः) अन्तर्ज्योतिषो रश्मयः (ऋतेन) सत्येन (मिनतीः) गुहाद्वारं विदारयन्तः अज्ञानान्धकारं विनाशयन्तश्च (उत् यन्तु) अवचेतनस्य निम्नतमगुहायाः पातालाद् वा ऊर्ध्वम् उद्गच्छन्तु। यद्वा (मिनतीः) युष्माभिः अवरुद्धाः, बन्दीकृता बाध्यमानाः च (गावः) (गावः) (ऋतेन) सत्यस्य तेजसा शक्त्या वा, सत्यवाणीम् उच्चारयन्त्यः वा (उत् यन्तु) चेतनापातालाद् बहिरायान्तु। (निगूळ्हाः याः) याः प्रच्छन्ना गाः (बृहस्पतिः) सर्जनशीलाऽन्तर्वाण्या अधिपतिः देवो बृहस्पतिः (अविन्दत्) अन्वैषयत् (सोमः) आनन्दामृतत्वयोः अधिपतिः सोमदेवः, (ग्रावाणः) सोमरसनिष्पीडकशक्तयः, (विप्राः ऋषयः च) ज्ञानप्रदीप्ता द्रष्टारश्च अविन्दन् अन्वेषितवन्तः अचिरं प्राप्स्यन्ति च इति भावः।।११।।

**व्याख्या-** हे पणयः यूयं वरीय उरुतरं दूरदेशम् इत गच्छत्। युष्माभिरपहृता गावः ऋतेन सत्त्वेन मिनतीः मिन्यतः द्वारस्य पिधायकं पर्वतं हिंसस्योवदारयन्यः उद्यन्तु तस्मादुद्गच्छन्तु।यद्वा मिनतीः व्यत्ययेन कर्मणिशता।मियमाना युष्माभिः बाध्यमानास्तागावः सुबव्यत्ययः गाऋतेन स्तुतिभिर्गन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादयउद्यन्तु पर्वतादुद्गमयन्तु निगूढा नितरांस्पापितायाःगाः बृहस्पतिः अविन्दत् लप्स्यते। तथा सोमः तदभिषवकारिणोग्रावाणश्च विप्रामेधाविनऋषयः अंगिरसश्च लप्स्यन्ते। विद्लृ लाभे तौदादिकः तस्माच्छन्दसि लुङ्लङ्लिट इति भविष्यदर्थे लङ् शे मुचादीनामिति नुमागमः॥११॥

**सरलार्थः -**

हे पणयः इतः दूरदेशं गच्छत। गावः क्लेशं प्राप्नुवन्ति। युष्माभिरपहृताः गावः कस्मिन् गुप्तस्थाने सन्ति इति इन्द्रः, बृहस्पतिः, सोमेन अभिषवकारिणः ग्रावाणः, ऋषयः अङ्गिरसश्च ज्ञातवन्तः।(अर्थात् एते अत्र आगमिष्यन्ति अतः भवन्तः इतः दूरदेशं पलायन्तु।)

**व्याकरणम् -**

- अविन्दत्- अत्र तुदादिगणीयाद् विद्लृ लाभे इतिधातोः छन्दसि लुङ्लङ्लिटः इति सूत्रेण भविष्यदर्थे लङि अडागमे शेमुचादीनामिति नुडागमे प्रक्रियाकार्ये अविन्दत् इति रूपम्।



## पाठगतप्रश्नाः



१७. पणिगणः कां भगिनीस्वरूपत्वेन मनुते।

१८. आजगन्थ इत्यस्य कोऽर्थः।

१९. सरमां पणिगणसकाशं के प्रेषितवन्तः।

२०. अपहृताः गावः कस्मिन् गुप्तस्थाने सन्ति इति के ज्ञातवन्तः।

२१. इन्द्रादिभ्यः स्वात्मानं रक्षणाय सरमा पणिभ्यः किमुदेशं दत्तवती।

## २६.३) सरमापणिसंवादसूक्तस्य सारः

वैदिकसाहित्ये ऋग्वेदः चतुर्षु वेदेषु एव अत्यन्तं प्रसिद्धः। तत्र ऋग्वेदस्य दशममण्डलस्य अष्टाधिकैकशततं सूक्तं सरमापणिसंवादसूक्तम्। वैदिकमन्त्राः क्लिष्टतया विद्यन्ते। अत्र सरमापण्योः मध्ये गोः विषये जातां कथां समाश्रित्य अत्यन्तं सरलतया संवादसूक्तमिदं निर्मितम् अस्ति। घटना इयमपि अत्यन्तं लोकप्रसिद्धा विद्यते।

पणिः कश्चित् क्रुरः राक्षसः विद्यते। पणिः देवतानां सर्वाः गाः चोरितवान्। सर्वे प्रायः गोः अन्वेषणाय तत्पराः भवन्ति। एकदा बृहस्पतिः इन्द्रस्य सभां प्रति समागत्य ज्ञापितवान् यत् पणिनामकः कश्चित् असुरः गाः चोरितवान् अस्ति। पुनश्च रसानामकनद्याः पार्श्वे विद्यमानस्य पर्वतस्य गुहायाम् अत्यन्तं गुप्ततया गाः स्थापितवान्। वृत्तान्तं ज्ञात्वा सरमानामिकां काञ्चित् रमणीं दूतत्वेन पणेः सकाशं प्रेषितवान्। अत्यन्तं कष्टेन सरमा पणेः सकाशं गतवान्। ततःपरं पणिरपि प्रश्नम् अकरोत् यत् किमर्थं स्वर्गलोकात् इयं सुन्दरी अत्र आगतवती। सरमा उत्तरितवती यत् देवाः गोः विषये सर्वं वृत्तान्तं ज्ञातवन्तः। अतः हे पणे इतः गच्छतु गाञ्च प्रत्यर्पयतु। पणिः सगर्वेण कथयामास यत् मम रक्षणाय बहवः कर्मचारिणः नियुक्ताः सन्ति। अत एव गाः स्वीकर्तुं देवाः आयान्ति चेत् तेषामेव पराजयो भवेत्। यदि भवतीम् इन्द्रलोकात् परित्यक्तवान् अस्ति तर्हि अस्माकं भगिनीत्वेन अत्र तिष्ठतु। एतत् सर्वम् आकर्ण्य सरमा उक्तवती यत् हे पणे मम चिन्तां मा करोतु, स्वकीयजीवनस्य रक्षणाय गाः प्रदाय इतः शीघ्रं गच्छतु। परन्तु पणिः गाः प्रत्यर्पयितुं नैव इष्टवान्। ततःपरं इन्द्रेण साकं पणेः युद्धं सम्पन्नम्। तस्मिन् च युद्धे पणिं हत्वा सर्वाः गाः आदाय इन्द्रः इन्द्रलोकं गतः। संवादमाध्यमेन वृत्तान्तः अयं सम्यग्तया प्रस्फुटितः वर्तते। अत एव संवादस्य सरमापणिसंवादसूक्तम् इति नाम्ना सुप्रसिद्धम्।





## पाठसारः

ऋग्वेदस्य दशममण्डलस्य अष्टाधिकैकशततं सूक्तं सरमापणिसंवादसूक्तम्। पणिः कश्चित् क्रुरः राक्षसः विद्यते। पणिः देवतानां सर्वाः गाः चोरितवान्। सर्वे प्रायः गोः अन्वेषणाय तत्पराः भवन्ति। एकदा बृहस्पतिः इन्द्रस्य सभां प्रति समागत्य ज्ञापितवान् यत् पणिनामकः कश्चित् असुरः गाः चोरितवान् अस्ति। पुनश्च रसानामकनद्याः पार्श्वे विद्यमानस्य पर्वतस्य गुहायाम् अत्यन्तं गुप्ततया गाः स्थापितवान्। वृत्तान्तं ज्ञात्वा सरमानामिकां काञ्चित् रमणीं दूतत्वेन पणेः सकाशं प्रेषितवान्। अत्यन्तं कष्टेन सरमा पणेः सकाशं गतवान्। ततःपरं पणिरपि प्रश्नम् अकरोत् यत् किमर्थं स्वर्गलोकात् इयं सुन्दरी अत्र आगतवती। सरमा उत्तरितवती यत् देवाः गोः विषये सर्वं वृत्तान्तं ज्ञातवान् अस्ति। अतः हे पणे इतः गच्छतु गाञ्च प्रत्यर्पयतु। पणिः सगर्वेण कथयामास यत् मम रक्षणाय बहवः कर्मचारिणः एव नियुक्ताः सन्ति। अत एव गाः स्वीकर्तुं देवाः आयान्ति चेत् तेषामेव पराजयो भवेत्। यदि भवतीम् इन्द्रलोकात् ताडितवान् अस्ति तर्हि अस्माकं भगिनीत्वेन अत्र तिष्ठतु। एतत् सर्वम् आकर्ण्य सरमा उक्तवती यत् हे दुष्ट मम चिन्तां मा करोतु, स्वकीयजीवनस्य रक्षणाय गाः प्रदाय इतः शीघ्रं गच्छतु। परन्तु पणिः गाः प्रत्यर्पयितुं नैव इष्टवान्। ततःपरं इन्द्रेण साकं पणेः युद्धं सम्पन्नम्। तस्मिन् च युद्धे पणेः मारणं विधाय सर्वाः गाः स्वीकृत्य इन्द्रः इन्द्रलोकं गतवान्। संवादमाध्यमेन वृत्तान्तः अयं सम्यग्तया प्रस्फुटितः वर्तते। अत एव संवादस्य सरमापणिसंवादसूक्तम् इति नाम्ना सुप्रसिद्धम्।



## पाठान्तप्रश्नाः

१. सरमापाणिसंवादसूक्तस्य सारं संक्षेपेण लिखत।
२. किमिच्छन्ती सरमा प्रेदमानङ्....इत्यादिमन्त्रं व्याख्यात।
३. इन्द्रस्य दूतीरिषिता चरामि.......इत्यादिमन्त्रं व्याख्यात।
४. की दृङिन्द्रः सरमे का दृशीका....इत्यादिमन्त्रं व्याख्यात।
५. नाहं तं वेद दभ्यं दभत्स........ इत्यादिमन्त्रं व्याख्यात।
६. इमा गावः सरमे ये ऐच्छः.......इत्यादिमन्त्रं व्याख्यात।
७. अयं निधि सरमे अद्रिबुध्नो.....इत्यादिमन्त्रं व्याख्यात।
८. एवा च त्वं सरसम्........इत्यादिमन्त्रं व्याख्यात।
९. नाहं वेदं भ्रातृत्वं नो स्वसृजम्.....इत्यादिमन्त्रं व्याख्यात।
१०. दूरमित पणयो वरीय उद्......इत्यादिमन्त्रं व्याख्यात।
११. सरमायाचरित्रं लिखत।



१२. सरमया उपस्थापितम् इन्द्रस्वरूपं लिखत।

१३. पणिपरिचयः प्रकटनीयः।



## पाठगतप्रश्नानामुत्तराणि-

१. पणिः सरमां प्रति अकथयत्।

२. प्रेषिता इत्यर्थः।

३. इन्द्रस्य।

४. गाः दातुम् अङ्गीकृतवन्तः।

५. कियद् इत्यर्थः।

६. इन्द्रम्।

७. हिंसार्थकः।

८. युद्धं विना।

९. सुन्दरः इत्यर्थः।

१०. पणीनाम्।

११. पणिभ्यः।

१२. पर्वतैः।

१३. गोभिः अश्वैः आन्यान्यधनैश्च परिपूर्णा।

१४. सोमरसपानेन।

१५. गवां मोचनम्।

१६. सोमपानेन मत्ताः इत्यर्थः।

१७. सरमाम्।

१८. आगतवती इत्यर्थः।

१९. इन्द्रादयः।

२०. इन्द्रः, वृहस्पतिः, सोमेन अभिषवकारिणः ग्रावाणः, ऋषयः अङ्गिरसश्च ज्ञातवन्तः।

२१. इतः दूरदेशं पलायन्तु इति।

॥इति षड्विंशः पाठः॥

# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

## वेदाध्ययनम् (३४५)

### औचित्यम्

भारतीयदर्शनस्य संस्कृतसाहित्यस्य प्रादेशिकभाषीयसाहित्यस्य च समग्रं वाङ्मयम् वृक्षतुल्यम्। तस्य विस्तरः महान् अस्ति। बद्धमूलः अयं वृक्षः अतः एव महान् वर्तते, सनातनः वर्तते, चिरञ्जीवी अपि वर्तते। एतस्य वृक्षस्य मूलम् अपरिवर्तनीयम् अस्ति। परन्तु नूतनं पल्लवम्, नूतनानि पुष्पाणि, नूतनानि फलानि च नित्यं जायन्ते। किं तत् मूलम् इति स्वाभाविकीं जिज्ञासां देशविदेशेषु जनाः कुर्वन्ति। यः कोऽपि तत्र प्रयत्नपरः भवति सः सुफलं लभते एव। सः चिराय कृतार्थो भवति, कृतकृत्यः च भवति। किं तत् मूलम्। कः तस्य बोद्धा , का तस्य शाखा, कानि वा पुष्पाणि फलानि च। का तस्य छाया। कः तस्य सौरभः। के उपभोक्तारः। कतिविधाः ते सन्ति इति ईदृशं वैचित्र्यम् अस्य विषयस्य विषयः। परन्तु तस्य वृक्षस्य मूलं किम्। समग्रस्यापि अस्य विषयस्य तु उपन्यासः नैव सम्भवति। तथापि छात्राः यदि इतः किञ्चिदपि ज्ञातुं शक्नुयुः तर्हि अस्माकं प्रयत्नः सफलः इति मन्यामहे।

भारतीयसमाजस्य मनोरञ्जनं जीवनं दैनन्दिनव्यवहारः धर्माचरणम् आध्यात्मिकता इति समग्रस्य मूलम् गौरवशाली वेदः एव। भारतीयचिन्तने वैदिकवाङ्मयस्य वैशिष्ट्यं सुविदतं समेषां वेदितवेदितव्यानाम्। वैदिकवाङ्मयस्य विभूतिः वास्तविकी वर्तते। इदं वाङ्मयं प्राचीनम्, समग्रपृथिवीव्यापि , अस्य परिमाणं विशालम् , अस्य वैभवं निरतिशयम् , अस्य सौन्दर्यगुणः अनन्यतुल्यः। महत् मौलिकं पुरातनं च इदं वाङ्मयम्। अत एव तत्र अस्माकम् अभिनिवेशः प्रवृत्तिः जिज्ञासा श्रद्धा च वर्तन्ते। न केवलम् एतावन्मात्रम्। अन्यानि अपि निमित्तानि वैदिकवाङ्मयस्य अध्ययने विद्यार्थिनां कृते विशिष्टाम् अभिरुचिं जनयन्ति। वेदस्य सम्यक् ज्ञानस्य अभावे नैके धर्मसम्प्रदायाः मतानि आचाराः च प्रवर्तन्ते येषां प्रतिपाद्यं दुष्टं शास्त्रविरुद्धं च वर्तते। समाजः धर्मविषये अत्यन्तम् अन्धश्रद्धालुः भवति। अन्धश्रद्धानिवारणायापि वेदस्याध्ययनं नितान्तम् आवश्यकम्। विज्ञानस्याध्ययनम् उदपूरणाय। जीवनयात्रानिर्वाहाय। परन्तु जीवः कुतः आयाति, कुत्र गच्छति, तस्य सुखदुःखादीनां कारणानि कानि। इह लोकः परलोकः अस्ति वा न वा। पुनर्जन्म अस्ति वा न वा। यदि स्यात् तर्हि मर्त्येन किमपि कर्तव्यं न वा इति अयं समग्रो विषयः न विज्ञानाधीनः। अयं तु धर्मधीनः। तस्यैव समग्रस्य धर्मस्य मूलं वेदः। अतः जीविकार्थम् विज्ञानम् सुखदुःखनिर्णयाय इहपरलोकयात्रायै च वेदः इति सुष्ठु विभागः भवति। अतः वेदाध्ययनं सर्वैरपि सुतराम् कर्तव्यमेव।

### अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- अधीतकाव्यव्याकरणकोषः वेदं विविदिषुः च।
- सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- सरलसंस्कृतं बोद्धुं शक्नोति।
- पाणिनीयं व्याकरणं च जानीयात्।

- स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।

## प्रयोजनम् (सामान्यम्)

उच्चमाध्यमिकस्तरे वेदाध्ययनस्य पाठ्यत्वेन योजनस्य कानिचन उद्देशानि अत्राधो दीयन्ते।

- भारतीयजीवनस्य सर्वस्वम् वेदः। तस्य ज्ञानं भवतु।
- वेदात् निर्गतानां दर्शनानाम् वैज्ञानिकतत्त्वानां कलासाहित्यादीनां च ज्ञानं भवतु।
- वेदाध्ययनेन पुण्यवान् ऋजुस्वभावः परोपकारी भवति जनः। अतः वेदाध्ययनं कथं कर्तव्यम्।
- वेदबहिर्भूतानि नास्तिकदर्शनानि अपूर्णानि सन्ति। तेषां पूर्णतायै वेदम् अधीत्य प्रयतेत छात्रः।
- वेदज्ञासूनां जिज्ञासाप्रशमनाय अध्येता समर्थो भवतु।
- संस्कृतस्य संस्कृतेश्च रक्षणाय समर्थः प्रयत्नपरः श्रद्धाशीलः भवतु छात्रः।
- अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकतां सर्वजनोपकारितां महिमानं च सगर्वं जगति प्रसारयेत् छात्रः।
- वेदज्ञानस्य वर्धनं भविष्यति येन वेदस्य सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- वेदाध्ययनं कृत्वा छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।

## प्रयोजनम् (विशिष्टम्)

**वेदाध्ययने प्रवेशस्य सामर्थ्यम्**

- समग्रस्य वेदवाङ्मयस्य प्रारूपं ज्ञात्वा तत्तदंशान् पठितुं शक्नुयात्।

## वैदिकसूक्तानाम् अध्ययने समर्थः भवेदध्येता।

- इमं विषयं पठित्वा वेदेषु प्रवेशं कुर्यात्।
- वेदानां गौरवं जानीयात्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दास्यन्ति।

**सूक्तव्याख्याने सामर्थ्यम्**

- वैदिकभाषायाः ज्ञानं लब्ध्वा अन्येषां सूक्तानाम् व्याख्याने अध्ययने च प्रवर्तेत छात्रः।
- वैदिकव्याकरणस्य ज्ञानेन वैदिकभाषायाः भित्तिं ज्ञास्यति। तत्तत्सूत्राणां व्याख्याने समर्थो भविष्यति।
- सूक्तानां तात्पर्यं ज्ञास्यति। तेन वैदिकचिन्तायाः व्याख्याने समर्थो भविष्यति।

**सूक्तप्रयोगस्य व्याकरणप्रयोगस्य च सामर्थ्यम्**

- सूक्तानाम् अध्ययनेन आनन्दं प्राप्नुयात्। सूक्तोक्तानां विषयाणां स्वजीवने प्रयोगं कुर्यात्।
- वैदिकव्याकरणज्ञानेन वैदिकभाषाध्ययने समर्थो भूत्वा व्याकरणस्य प्रयोगं कुर्यात्।

**वैदिकस्वरविश्लेषणे सामर्थ्यम्**

- स्वरभेदेन शब्दस्य अर्थः भिद्यते। अतः वैदिकस्वरज्ञानं नितान्तम् आवश्यकम् वेदाध्ययनाय।

- स्वरस्य ज्ञानं लब्ध्वा छात्रः तदनुगुणं वैदिकशब्दानाम् अर्थं बोद्धुं शक्नुयात्।

## पाठ्यसामग्री

**पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति-**

- द्वे मुद्रिते पुस्तके।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि (Project) करणीयम्।
- वेदाध्ययनस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।
- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।
- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम् -** विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकं पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम् -** वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।
- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।
- उत्तीर्णतायै पणः (condition) - प्रतिशतं त्रयस्त्रिंशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्। प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षाया वेदाध्ययनस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य त्रयो भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## अध्यायः - १ वैदिकसाहित्येतिहासः (पाठाः १-७)

**अध्यायस्य औचित्यम्**

यथा मूलं विना वृक्षः न चिन्तयितुं शक्यते तद्वद् वेदं विना भारतीयवाङ्मयं वेदं विना चिन्तयितुं न शक्यते। अतः मूलभूतस्य वेदस्य अध्ययने प्रवृत्तेः पूर्वं वेदस्य सम्यक् परिचयः नितराम् आवश्यकः।

अस्मिन् विभागे वैदिकवाङ्मयस्य वैलक्षण्यं प्रकट्यते। वेदस्य संहितासाहित्यम्, ब्राह्मणसाहित्यं वेदाङ्गसाहित्यम् इति विषयाः अत्र अन्तर्भवन्ति। वेदस्य आरण्यकम् उपनिषद् चेति भागद्वयम्। तद्विषये पर्याप्तम् आलोचनम् अत्र विधास्यते।

## अध्यायः - २ वैदिकस्वरप्रक्रिया (पाठाः ८-१६)

**अध्यायस्य औचित्यम्**

व्याकरणज्ञानं विना वेदानाम् अर्थः स्पष्टं नावगम्यते। अतः अस्मिन् विभागे पाणिनीयव्याकरणस्य वैदिकभागः उपस्थाप्यते। विशेषतः स्वरभेदेन अर्थभेदो भवति। अतः स्वरज्ञः एव वेदं बोद्धुम् शक्नोति। अस्मिन् विभागे वैदिकस्वरः इत्येव प्रमुखविषयः वर्तते। तत्रापि कानिचन मुख्यानि चितानि सूत्राणि दीयन्ते। अत्र सूत्रव्याख्यानं कथं भवति, तेन वैदिकस्वराः कथं भवन्ति इति विषयाः प्रामुख्येन उपन्यस्यन्ते।

## अध्यायः - ३ वैदिकसूक्ताध्ययनम् (पाठाः - १७-२८)

**अध्यायस्य औचित्यम्**

वैदिकसूक्तानि भारतीयज्ञानस्य उत्ससस्वरूपाणि। अत्र चितानां सूक्तानाम् अध्ययनाय सामग्री वर्तते। सूक्ताध्ययनं कथं भवति, के के विषयाः वेदाध्ययनकाले अवधेयाः सन्ति, सूक्तानां व्याकरणं किमस्ति, सूक्तस्य तात्पर्यं किमस्ति इति एते विषयाः अत्र प्रदीयन्ते। कानिचन संवादसूक्तानि अपि अत्र सन्ति इत्यपि अत्र अपरो विशेषः।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षायाः वेदाध्ययनस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति -

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | **अध्यायः- १** | **वैदिकसाहित्येतिहासः-** | ५० | २४ |
| | पाठः - १ | वैदिकसाहित्येतिहासः- वैदिकवाङ्मयस्य वैलक्षण्यं, वेदप्रामाण्यविमर्शः | | |
| | पाठः - २ | वैदिकसाहित्येतिहासः- संहितासाहित्यम् (ऋग्वेदस्य) | | |
| | पाठः - ३ | वैदिकसाहित्येतिहासः- संहितासाहित्यम् (सामवेदस्य यजुर्वेदस्य) | | |
| | पाठः - ४ | वैदिकसाहित्येतिहासः- संहितासाहित्यम् अथर्ववेदस्य। ब्राह्मणसाहित्यम्। | | |
| | पाठः - ५ | वैदिकसाहित्येतिहासः- ब्राह्मणसाहित्यम् - ब्राह्मणग्रन्थानां महत्त्वम्, ब्राह्मणकालिको धर्मः, समाजश्चेति, चातुर्वर्ण्यम्, विविधानि ब्राह्मणानि | | |
| | पाठः - ६ | वैदिकसाहित्येतिहासः- आरण्यकम्, अस्य सामान्यपरिचयः, ऐतरेयारण्यकम्, शाङ्खायनारण्यकम् बृहदारण्यकम्, तैत्तिरीयारण्यकम्। उपनिषदां सामान्यपरिचयः | | |
| | पाठः - ७ | वेदाङ्गसाहित्यम् | | |
| २ | **अध्यायः- २** | **वैदिकस्वरप्रक्रिया-** | ९० | ३६ |
| | पाठः - ८ | वैदिकस्वरप्रक्रिया- साधारणस्वरप्रकरणम् -१ (सिद्धान्तकौमुदीतः चितानि सूत्राणि) | | |
| | पाठः - ९ | वैदिकस्वरप्रक्रिया- साधारणस्वरप्रकरणम्- २ (सिद्धान्तकौमुदीतः चितानि सूत्राणि) | | |
| | | **वैदिकस्वरशेषाः-** | | |
| | पाठः - १० | वैदिकस्वरशेषाः- धातुस्वरः, प्रातिपदिकस्वरः च | | |
| | पाठः - ११ | वैदिकस्वरशेषाः- फिट्-स्वरः | | |
| | पाठः - १२ | वैदिकस्वरशेषाः- प्रत्ययस्वरः | | |
| | पाठः - १३ | वैदिकस्वरशेषाः- समासस्वरः | | |
| | पाठः - १४ | वैदिकस्वरशेषाः- तिङन्तस्वरः | | |
| ३ | **अध्यायः- ३** | **वैदिकसूक्ताध्ययनम्-** | १०० | ४० |
| | पाठः - १५ | वैदिकसूक्ताध्ययनम्- अग्निसूक्तम् (ऋ.वे.१.१) | | |
| | पाठः - १६ | वैदिकसूक्ताध्ययनम्- इन्द्रसूक्तम् (ऋ.वे.२.६) | | |
| | पाठः - १७ | वैदिकसूक्ताध्ययनम्- हिरण्यगर्भसूक्तम् (ऋ.वे.१०.१२१) | | |

| | | | | |
|---|---|---|---|---|
| | पाठः - १८ | वैदिकसूक्ताध्ययनम्- पुरुषसूक्तम् (ऋ.वे.१०.९०) | | |
| | पाठः - १९ | वैदिकसूक्ताध्ययनम्- देवीसूक्तम् (ऋ.वे.१०.१२५), श्रद्धासूक्तम् (ऋ.वे. १०.१५१) | | |
| | पाठः - २० | वैदिकसूक्ताध्ययनम्- विष्णुसूक्तम् (ऋ.वे.१.१५४), मित्रावरुणसूक्तम् (ऋ.वे. ५.६२) | | |
| | पाठः - २१ | वैदिकसूक्ताध्ययनम्- अक्षसूक्तम् (ऋ.वे.१०.३४) | | |
| | पाठः - २२ | वैदिकसूक्ताध्ययनम्- पर्जन्यसूक्तम् (ऋ.वे.५.८३), मनुमत्स्यकथा (शु.यजु. मा.श.ब्रा.१.८.१) | | |
| | पाठः - २३ | वैदिकसूक्ताध्ययनम्- शिवसङ्कल्पसूक्तम् (यजु.वे. अध्याय ३४, मन्त्र १-६), प्रजापति (शु.यजु.वे. अध्याय ३२, मन्त्र १-५) | | |
| | पाठः - २४ | वैदिकसूक्ताध्ययनम्- रुद्राध्यायः (शु.यजु.वे १५.१६) | | |
| | पाठः - २५ | वैदिकसूक्ताध्ययनम्- पृथिवीसूक्तम् (अ.वे.१२.१) | | |
| | पाठः - २६ | वैदिकसूक्ताध्ययनम्- सरमापणिसंवादसूक्तम् (ऋ.वे.९.८०) | | |

# प्रश्नपत्रस्य प्रारूपम् (Question Paper Format)

विषयः - वेदाध्ययनम् (३४५) (Veda Adhyayan)    स्तरः- उच्चतरमाध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs)    पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. वैदिकसाहित्येतिहासः | २४ | ५० |
| २. वैदिकस्वरप्रक्रिया | ३६ | ९० |
| ३. वैदिकसूक्ताध्ययनम् | ४० | १०० |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

# प्रश्नपत्रप्रतिमा - Sample Question Paper

अस्मिन् प्रश्नपत्रे ... प्रश्नाः सन्ति। .... मुद्रितपुटानि च सन्ति।

| Roll No. अनुक्रमाङ्कः | ४ | ५ | ० | १ | ५ | ९ | १ | ८ | ३ | ० | ० | १ | Code No. गूढसंख्या | ५५/SS/A/S |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|

SET स्तबकः **A**

## वेदाध्ययनम्

## Veda Adhyayan

## (३४५)

Day and Date of Examination
परीक्षादिनं दिनाङ्कश्च ..... ______________________

Signature of two Invigilators
निरीक्षकयोः हस्ताक्षरम् १) ______________________

२) ______________________

## सामान्या निर्देशाः

१. अनुक्रमाङ्कः प्रश्नपत्रस्य प्रथमपुटे नूनं लेख्यः।
२. निरीक्ष्यताम् यत् प्रश्नपत्रस्य पुटसंख्या प्रश्नानां च संख्या प्रथमपुटस्य प्रारम्भे प्रदत्तसंख्या समाना न वा। प्रश्नक्रमः सम्यग् न वा।
३. वस्तुनिष्ठप्रश्ननाम् (क), (ख), (ग), (घ) एषु विकल्पेषु युक्तम् उत्तरं चित्वा उत्तरपत्रे लेख्यम्।
४. समेषां प्रश्नानाम् उत्तराणि निर्धारितसमये एव लेख्यानि।
५. उत्तरपत्रे आत्मपरिचयात्मकं लेखनम् अथवा निर्दिष्टस्थानं विहाय अन्यत्र क्वापि अनुक्रमाङ्कलेखनं सर्वथा वर्जितमस्ति।
६. स्वस्य उत्तरपत्रे प्रश्नपत्रस्य गूढसंख्या नूंन लेख्या।
७. समेषां प्रश्नानाम् उत्तराणि संस्कृतभाषया एव लेख्यानि।

# वेदाध्ययनम् (Veda Adhyayan )

## (३४५)

परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs)  पूर्णाङ्काः (Full Marks) - १००

---

**निर्देशाः -**

१. अस्मिन् प्रश्नपत्रे [A] भागे १०, [B] भागे १०, [C] भागे १०, [D] ५ इति आहत्य ३५ प्रश्नाः सन्ति।
२. प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।
३. समे प्रश्ना अनिवार्याः।

---

**[A] दशानां युक्तं विकल्पं चिनुत।** **१ x १०=१०**

४) वेदस्य मुखं किं स्मृतम्।
(क) व्याकरणम् (ख) निरुक्तम् (ग) शिक्षा (घ) कल्पः।

५) ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च इति कः प्रोक्तवान्।
(क) यास्कः (ख) पतञ्जलिः (ग) पाणिनिः (घ) आपस्तम्बः।

६) वेदत्रय्याम् कस्य वेदस्य गणना नास्ति
(क) ऋग्वेदस्य (ख) अथर्ववेदस्य (ग) सामवेदस्य (घ) यजुर्वेदस्य।

७) यत्रार्थवशेन पादव्यवस्था सा ऋक् इति कथयन्ति
(क) नैयायिकाः (ख) वैयाकरणाः (ग) मीमासंकाः (घ) वैशेषिकाः।

८) समासस्य अन्तः कि भवति।
(क)उदात्तः (ख)अनुदात्तः (ग)स्वरितः (घ)किमपि न भ

९) फिट् इति कस्य संज्ञा भवति।
(क) प्रत्ययस्य (ख)धातोः (ग)प्रातिपदिकस्य (घ)तद्धितस्य

१०) रुद्रः कस्य अपरं नाम वर्तते।
(क) विष्णोः (ख)शिवस्य (ग)इन्दस्य (घ)वरुणस्य

११) पृथिवीसूक्तं कस्मिन् वेदे वर्तते।
(क)ऋग्वेदे (ख)सामवेदे (ग)यजुर्वेदे (घ)अर्थववेदे

१२) पृथिवीसूक्तस्य ऋषिः कः वर्तते।
(क)अत्रिः (ख)मधुच्छदा (ग)विश्वमित्रः (घ) अर्थवा

१३) अग्निः पूर्वेभिः.. इति मन्त्रं कस्मिन् सूक्ते वर्तते।
(क)अग्निसूक्ते (ख)इन्द्रसूक्ते (ग)यमसूक्ते (घ)अक्षसूक्ते

**[B] दशानां यथानिर्देशम् उत्तराणि लिखत।** **२ x १०=२०**

१४) सम्प्रति सामवेदस्य कति शाखाः लभ्यन्ते। ताश्च काः। १+१=२

१५) शाङ्ख्यायनारण्यकम् कस्मिन् वेदे अन्तर्भवति। बृहदारण्यकम् केन वेदेन सह सम्बद्धम्। १+१=२

१६) मुख्याः उपनिषदः कति सन्ति। ताश्च काः। 1+1=2

१७) हि च इत्यत्र हि इति किम्। हिशब्दयुक्तं तिङन्तं कथम् अनुदात्तं न भवति। 1+1=2

१८) लोपे विभाषा इत्यस्य सूत्रार्थं लिखत। पचति आहोस्वित् पठति इति कस्य सूत्रस्य उदाहरणम्। 1+1=2

१९) समासस्य अन्तः किं भवति। तुल्यशब्दः आद्युदात्तः आहोस्वत् अन्तोदात्तः वर्तते। 1+1=2

२०) विष्णुसूक्तस्य देवता का। अस्य सूक्तस्य ऋषिः कः। 1+1=2

२१) पर्जन्यसूक्तस्य देवता का। अस्य सूक्तस्य ऋषिः कः। 1+1=2

२२) मनुमत्स्यकथा कस्मिन् वेदे वर्तते। मनोः क्व मत्स्यः अपतत्। 1+1=2

२३) शिवसंकल्पसूक्तं कस्मिन् वेदे वर्तते। अस्मिन् सूक्ते कति मन्त्राः सन्ति। 1+1=2

## [C] दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०

२४) टीकां लिखत। छान्दोग्योपनिषत् अथवा तैत्तिरीयारण्यकम्।

२५) शुक्लयजुर्वेदीयशाखाः विवृणुत।

२६) फिषोऽन्तः उदात्तः अथवा छन्दसि च इति सूत्रं व्याख्यात।

२७) घृतादीनां च अथवा ह्रस्वान्तस्य स्त्रीविषयस्य इति सूत्रं व्याख्यात।

२८) आद्युदात्तश्च अथवा अनुदात्तौ सुप्पितौ इति सूत्रं व्याख्यात।

२९) वा भुवनम् अथवा पूर्वे भूतपूर्वे इति सूत्रं व्याख्यात।

३०) इन्द्रसूक्तस्य सारांशं संक्षेपेण लिखत। अथवा इन्द्रस्वरूपं प्रकटयत।

३१) हिरण्यगर्भस्य स्वरूपं संक्षेपेण लिख।

३२) पुरुष एवेदं सर्वम् .. इति मन्त्रं पूरयित्वा अन्वयं सरलार्थं लिखत। 1+1+2=4

३३) श्रद्ध्याग्निः समिध्यते.. इति मन्त्रं पूरयित्वा अन्वयं सरलार्थं लिखत। 1+1+2=4

## [D] पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

३४) वेदाङ्गरूपेण शिक्षायाः भूमिकां विवृणुत।

३५) ञ्नित्यादिर्नित्यम् अथवा वृषादीनां च इति सूत्रं व्याख्यात।

३६) संज्ञायामुपमानम् अथवा युस्मदस्मदोर्ङसि इति सूत्रं व्याख्यात।

३७) अग्नेः स्वरूपं लिखत।

३८) पुरुषसूक्तस्य सारांशं संक्षेपेण लिखत। अथवा पुरुषस्वरूपं वर्णयत।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

**[A] दशानां युक्तः विकल्पः।** **१ x १०=१०**

१-(क), २-(ख), ३-(ख), ४-(ग), ५-(क), ६-(ग), ७-(ख), ८-(घ), ९-(घ), १०-(क)

**[B] दशानां यथानिर्देशम् उत्तराणि।** **२ x १०=२०**

१) सम्प्रति सामवेदस्य तिस्रः शाखाः उपलभ्यन्ते- कौथुमीया, राणायनीया, जैमिनीया चेति। १+१=२

२) शाङ्ख्यायनारण्यकम् ऋग्वेदे अन्तर्भवति। बृहदारण्यकम् यजुर्वेदेन सह सम्बद्धम् अस्ति। १+१=२

३) मुख्याः उपनिषदः एकादश। ताः च ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-ऐतरेय-तैत्तिरीय-छान्दोग्य-बृहदारण्यक-श्वेताश्वतरोपनिषद' इति। १+१=२

४) हि च इत्यत्र हि इति अव्ययपदम्। हि च इति शास्त्रेण हिशब्दयुक्तं तिङन्तम् अनुदात्तं न भवति। १+१=२

५) किमः लोपे सति क्रियाप्रश्ने अनुपसर्गम् अप्रतिषिद्धं तिङन्तं विकल्पेन अनुदात्तं न भवति इति सूत्रार्थः।लोपे विभाषा इति सूत्रस्य उदाहरणम् इदम्। १+१=२

६) समासस्य अन्तः उदात्तः भवति। तुल्यशब्दः आद्युदात्तः भवति। १+१=२

७) विष्णुसूक्तस्य देवता विष्णुः। अस्य सूक्तस्य देवता दीर्घतमा औचथ्यः। १+१=२

८) पर्जन्यसूक्तस्य देवता पर्जन्यः। अस्य सूक्तस्य ऋषिः अत्रिः। १+१=२

९) मनुमत्स्यकथा शुक्लयजुर्वेदे वर्तते। मनोः हस्ते मत्स्यः अपतत्। १+१=२

१०) शिवसंकल्पसूक्तंशुक्लयजुर्वेदे वर्तते। अस्मिन् सूक्ते षड् मन्त्राः सन्ति। १+१=२

**[C] दश अनतिदीर्घोत्तरैः समाधत्त।** **४ x १०=४०**

१) बिन्दुः - ६.१० / ६.७ द्रष्टव्यः

२) बिन्दुः - ३.६ द्रष्टव्यः

३) बिन्दुः - ११.१ / ११.२ द्रष्टव्यः

४) बिन्दुः - ११.३ / ११.६ द्रष्टव्यः

५) बिन्दुः - १२.१ / १२.२ द्रष्टव्यः

६) बिन्दुः - १३.३ / १३.४ द्रष्टव्यः

७) इन्द्रसूक्ते

८) हिरण्यगर्भसूक्ते

९) पुरुषसूक्तस्य द्वितीयमन्त्रे

१०) श्रद्धासूक्तस्य प्रथममन्त्रे

**[D] पञ्च दीर्घोत्तरैः समाधेयाः।** **६ x ५=३०**

१) बिन्दुः - ७.४ द्रष्टव्यः

२) बिन्दुः - १०.९ / १०.१२ द्रष्टव्यः

३) बिन्दुः - १०.१३ / १०.१५ द्रष्टव्यः

४) अग्निसूक्ते

५) पुरुषसूक्ते

--)(O)(--